# ŚRĪMAD-BHĀGAVATA-BHĀṢĀ-PARICCHEDAḤ

By

**DR. CHARU DEVA SHASTRI**

**Vishveshvaranand Vedic Research Institute**

**HOSHIARPUR**

**1984**

# ŚRĪMAD-BHĀGAVATA-BHĀṢĀ-PARICCHEDAḤ

By

DR. CHARU DEVA SHASTRI

Vishveshvaranand Vedic Research Institute
HOSHIARPUR
1984

# श्रीमद्भागवतभाषापरिच्छेदः

( भागवतपुराणगतवाग्विमर्शपर इदम्प्रथमो
द्वादशाध्याय्यात्मको ग्रन्थः )

सोऽयं

वाक्यपदीयस्य सँस्कर्त्रा श्रीगान्धिचरिताऽनुवादकला-
प्रस्तावतरङ्गिणी - शब्दापशब्दविवेक - वाक्यमुक्तावली-
व्याकरणचन्द्रोदय-वाग्व्यवहारादर्शोपसर्गार्थचन्द्रिका-
महाभारतवचनामृत-रामचरितामृतादीनामनेकेषां
ग्रन्थानां निर्मात्रा व्याकरणमहाभाष्यस्य
विवरीत्रा

श्री रामकृष्णतनुजनुषा
डा० चारुदेवेन शास्त्रिणा
प्रणीतः

होश्यारपुरस्थेन
विश्वेश्वरानन्द-वैदिक-शोध-संस्थानेन
च प्रकाशितः
१९८४

## समर्पणम्

शास्त्राणामनुशीलने शितदृशा येऽविश्रमं व्यापृताः
सारासारविवेचने च निपुणा निर्मत्सरा निर्मदाः।
उत्ताना हृदयेन पूतमनसः श्लक्ष्णा गिरा नित्यशः
तेभ्यो ग्रन्थमिमं मुदा परमया बद्ध्वाञ्जलिं ह्यर्पये ।।

# एतत्प्रवृत्तेः कथन्ता

जीवत्स्वाचार्य्यकं कुर्वाणेषु विश्वेश्वरानन्द इन्डोलौजिकल् जर्नल् इति समाख्यामनुसन्धानपत्रिकां परिष्कुर्वाणेषु विद्वद्वृन्दारकेषु श्रीविश्वबन्धुशास्त्रिषु ख्रिस्तीये बाणरसनन्दचन्द्राब्दे श्रीमद्भागवतभाषा-परिच्छेदाभिधं निबन्धं तैरभ्यनुज्ञातस्तत्रैव विद्वत्प्रियायां पत्रिकायां प्राकाशयम्। तत्र क्रियायामभिरूपानुरूपायां स्वेनैव प्रयुक्तः प्रावृतम्। विद्यावतां भागवते परीक्षेत्युच्चैर्वादिनाप्युद्धतमाहूतस्ततः प्रवृत्तेर्नाहमशकं स्वं संयन्तुम्। अस्य पुराणस्य कियताऽनृज्वी व्यामोहजननी क्लेशकरी वाक्यपद्धतीति दोषज्ञानप्यदोषज्ञान् विपरीतप्रत्ययान् प्रत्याययितुं ममेयं प्रवृत्तिः। नाहं तावता तेष्वपराध्यामि, न च परमभागवतेऽज्ञात-नामधेये पुराणकारे। यत्सत्यं तस्मिन्बहुश्रुतेऽहेतुकभक्तिके बह्वादृतोऽस्मि। वस्तुतो विरला एवेत्थं परत्रार्पितात्मानो जगति जायन्ते। इयं ह्यात्मोत्सर्गस्य परा सीमा यन्महायत्ननिर्वर्त्या विपुला स्वा क्रिया शब्दवित्तमे भगवति व्यासे तदीयेयमिति कृत्वा श्रद्धयाऽतिरिक्तयाऽव्याजं समर्प्यते स्वं चात्यन्ताय प्रच्छाद्यते। एवं प्रच्छन्नोपि व्यक्तितः स शक्यः परिच्छेत्तुम्। अन्यो हि ब्राह्मादीनां पुराणानां कर्ताऽन्यश्चायं भागवतकारः। भिद्यते ह्यस्य वाग् भिद्यते च शैली पुराणान्तरेभ्यः। इदं चाभ्युपगस्यतेऽप्रत्यभिनिविष्टैः सरलसर्गैः सत्यकामैर्विचक्षणैः। पञ्चनदेऽन्तर्जालन्धरे विदां वराः पुण्यकीर्तयः श्रीश्रावणदत्तशर्म्माणो व्यराजन्त संस्कृतमध्यापयन्तः। जालन्धरं गतोऽहं कदाचित्तैः समसृज्ये निबन्धं च स्वं समर्प्य सम्प्रार्थयेऽयमालोच्यतामिति। गतेषु कतिषु-चिन्मासेषु भूयस्तैः समगच्छे समपृच्छे च विवेचनेयं मे किं साराऽसारा समूलाऽमूला वेति। इत्थं पृष्टास्ते प्रत्यवोचन्नसकृद् वाचितं भागवत-मसकृच्च व्याख्यातं भक्तेभ्यः, दोषाशङ्का तु नैवोदगात् क्वचित्। इदन्त्ववश्यमभ्युपेयमस्य वाक् पुराणान्तरवाचा न संवदतीति। सत्यं वाग्विसंवादोऽय न शक्योऽपह्नोतु सुधीभिः। यच्चेह दोषादर्शनमुक्तं तत्र श्रद्धातिरेको हेतुर्ऋषिकृतिरियमिति बुद्धिर्वा।

अन्यत्र पुराणेषु यदार्जवं यो वाङ्निष्यन्दो यौ च प्रसाद-मधुरिमाणौ तदिह सुदुर्लभम्। यच्चान्यत्रान्तराऽन्तराऽनवद्यहृद्यमुत्तमं

काव्यं स्थितं तदपीह दुरापम् । ये चोपमोत्प्रेक्षे सहजा अनुप्रासादयः शब्दालङ्कृतयस्ता अपि यत्नतो मृग्याः ।

अस्य पुराणस्य वाग्विषयिणी परीक्षा निरुक्तेनानेन निबन्धेन पर्यवसिता, उपरता च परीचिक्षिषा । तत् किमिति महति कालव्यपाये भूयोऽजागरीत्परीक्षामनीषेति विविदिषायामुच्यते—बाढं तेनाल्पेन निबन्धेनात्राप्सं परे विपश्चितस्तु नातृपन् । अवितृप्तास्ते मामचूचुदन्नेतद्विषयको बृहत्तरो ग्रन्थो ग्रथ्यतां यत्र पर्याप्तिः परीक्षायाः स्यादिति । एतेषां मध्ये निष्कारणसुहृदः शब्दशास्त्रनिष्णाता विपश्चिदपश्चिमा भिषजामुत्तमाः श्रीभीमसेनशास्त्रिणो देहलीस्था बलवत्प्रारोचयन्माम्प्रत्याययंश्च कृतिरेषा लोकेन प्रतिनन्दिष्यते हृदयेन, चिररात्राय च मे यशश्चयाय भविष्यतीति । अहं च सुहृद्वचसि प्रत्ययितः श्लथविश्लथसंहननोपि जरापरीतोपि कृत्यामस्यां व्यापृषि, व्यापृतश्च समयैकया द्वादशाध्यायीमिमामवासासिषम् , प्रह्लादं च परममासीषदम् ।

अस्या मुद्रणप्रकाशनभारो होश्यारपुरस्थेन श्रीविश्वेश्वरानन्दवैदिकानुसन्धान-संस्थानेन मत्प्रार्थितेन सहर्षमुदूढ इति तस्याधमर्णोहम्, तन्निदेशकस्य श्रीयुतस्य ऐस्० भास्करन् नायर् इत्यस्य च विशेषतः ।

उक्तं वक्तव्यमितीहैव विरमयामि वाचं विदां वशंवदोऽहं

चारुदेवः शास्त्री ।

३/५४, रूपनगरे सुरभ्यां देहल्याम्

# HOW I CAME TO WRITE THIS CRITIQUE

It was in the year 1965 when the great Acharya Vishva Bandhu Shastri was yet living and ably editing the *Vishveshvaranand Indological Journal* that I contributed an Article under the caption, Śrīmad-Bhāgavata-Bhāṣā-Paricchedaḥ, which had the approval of the Acharya. In a way, it was inspired by him. But the inspiration mainly came from within me. I was provoked by the challenge rudely posed by the popular saying, विद्यावतां भागवते परीक्षा, 'the Bhāgavata is a test for the learned'. I could not resist taking up the gauntlet, for I felt that the verdict was misconceived and ill-based. I was convinced by my thorough study of this Purāṇa that it was a dread of the highly complicated style, the profusion of obscure and archaic vocabulary, involved constructions, unconventional and arbitrary meanings intended by the author, etc. that led the Pandits to look upon it as a crux and a trial. It was not the depth of thought that stood in the way of rapid reading and easy comprehension ; indeed there was nothing new or original or abstruse in its exposition of the problem of creation or dissolution or its propounding of the *Bhakti*-cult with all its ramifications. Its language did stand as a stdumbling-block in the way of understanding the Text. The confusion created thereby was surely baffling. I therefore chose to concentrate on an analytical description of the language used, and thus pave the way for a smooth grasp thereof, and dispel, once for all, the impression left on the mind by the hasty verdict : *Vidyāvatām Bhāgavate Parīkṣā.*

Admittedly, this Purāṇa is not the composition of the sage Vyāsa. Yet, it is the work of a scholar steeped in traditional learning and gifted with a high intellectual stamina.

Besides, the author is a man of dedication, with a high degree of self-denial, who fathered his elaborate, voluminous literary production upon the sage Vyāsa and merged himself in his personality, losing all identity—a rare feat of self-surrender, unknown to the world of to-day.

The language of the *Bhāgavata* differs widely from that of the other seventeen Purāṇas which betray a community of language. The style too is markedly dissimilar. This is a stern reality which none dare deny.

Some time after the publication of the aforesaid Article, I happened to go to Jalandhar (Panjab). I saw the late Pandit Śrāvaṇa Datta Shastri, a saint-scholar, who was a teacher of Sanskrit in a local Pāṭha-Śālā. I presented him with a copy of the Article and requested him to go through it and see if there was some substance in it. He thankfully accepted the present and promised to give me his opinion. Later I met him and inquired of him how he thought of it. In his reply of a few words, he said : "I have done a number of readings of the Bhāgavata and recited it to devout audiences several times, but the errors of composition etc. pointed out by you have never struck me. Yet, it is true that the language of this Purāṇa differs from that of any other Purāṇa. This cannot be denied." This is the candid opinion of an unbiased mind. That the Pandit could not notice any blemishes is because he believed the Purāṇa to be the handiwork of the revered sage, Vyāsa, who could do no wrong and whose word could not be questioned.

The question remains why after a number of years of the publication of the Article, I chose to write a comprehensive volume on the subject. Is it that I was not satisfied with that much ? No, not that. I had all the satisfaction I sought.

## HOW I CAME TO WRITE THIS CRITIQUE

It were my scholar friends who were not satisfied. They had a craving for a fuller work, almost exhaustive. Of these friends, it was Pandit Bhimsen Shastri of Delhi, an eminent physician and an adept in Pāṇinean grammar who prompted me most to go in for a more detailed exposition of the language of the Bhāgavata, which, in his words, would earn for me a lasting name in the literary world. I felt drawn to the suggestion and agreed to write as desired. It took me full one year to complete my work of 12 chapters, covering 348 pages in print. In my comments there is, here and there, a bit of fun and humour, which, I hope, the reader would relish. I leave it to the judgement of the critic to pronounce on the quality of the work done.

The work has been in the press for more than 12 months. To avoid further delay in its publication I could do no more than a single reading of the proof-sheets which left a number of misprints unnoticed. These are entered in the Errata at the end. Reference may kindly be made in case of doubt.

I am deeply indebted to the authorities of the V. V. R. Institute for undertaking the publication of my work, and especially to my friend, Prof. S. Bhaskaran Nayar, Director, for recommending it to the Institute.

CHARUDEVA SHASTRI

3/54 Surabhi,
Roop Nagar,
Delhi.
11/1/84

# विषयानुक्रमणी

ओं नमः परमात्मने ।

नमो भगवते पाणिनये ।

नमः शिष्टेभ्यः । नमः पूर्वेभ्यः पथिकृद्भ्यः ।

# अवतरणिका

पुराणवाचां सदृशो न सन्ति
प्रतर्क्यवाच्यस्य विदोऽस्य वाचः ।
इत्यभ्युपेतं प्रविवेकवद्भिः
पुराणमेतद् विपरीक्ष्यतेऽतः ॥ १ ॥

सारासारविवेकाय सदसन्निर्णयाय च ।
विपश्चितां विनोदाय मामकोऽयमुपक्रमः ॥ २ ॥

लोकयिष्यति वाङ्मार्गं विनिर्णिक्तमियं कृतिः ।
प्राथयिष्यति सच्छब्दान्वाग्भ्रंशान्वारयिष्यति ॥ ३ ॥

तामिमां रसयिष्यन्ति गुणगृह्या विपश्चितः ।
विमत्सरा विवेकाढ्याः प्रत्ययोऽयं ममान्तरः ॥ ४ ॥

सुहृद्भिः प्रेरितः कैश्चित्पुण्यैः स्वैर्वा फलोन्मुखैः ।
कृत्ये प्रावर्तिषि स्तुत्ये विनेयप्रणयेन वा ॥ ५ ॥

दैवीं वाचमुपासीय कुर्वीय च क्रियाः* शुभाः ।
सन्ततं, मे वरं देयाद् वरेशः परमेश्वरः ॥ ६ ॥

"विद्यावतां भागवते परीक्षा" इति प्रथते प्रवादः । तत्र किं नु निबन्धनं स्यात् ? सर्गप्रतिसर्गादीनां पुराणप्रतिपाद्यानां विषयाणां दुरधिगमानां निपुणं निरूपणेति चेन्न । तत्र निरूपणायां न

---

* क्रियाः शास्त्रार्थनिबन्धनीः कृतीः ।

किञ्चिदिह नूतनमुपन्यस्तम् । पुराणान्तरप्रपञ्चिता सैवेह सर्गादि-वर्णना, सैव स्वर्गापवर्गाद्यतीन्द्रियार्थप्रतिपादना, महदादीनां साङ्ख्यो-दितानां तत्त्वानां च व्याक्रियेति गहने दर्शनकान्तारे स्वैरं विहरतां कापिलानां काणादानां च का नाम तत्र परीक्षाविडम्बना । अहं तु पश्यामि परोक्षप्रियतया कविना कृतमिदं पुराणमप्रसिद्धशब्दार्थ-बहुलतया क्लिष्टान्वयतया दुर्घटसमासप्रधानतयाऽध्याहारापेक्षतया व्यवहारातिक्रमजिह्मतया छन्दोनुरोधकृतशब्दवैरूप्यतया छन्दोमात्र-गोचरशब्दप्रयोगतया च सत्यं प्रतिहन्ति प्रसरं विपश्चिताम् । अत्र प्रवृत्तास्ते विवक्षितार्थमनर्पयन्ति पदवाक्यानि पदे पदे संमुखमापतन्ति विलोक्य व्यामुह्यन्तीति किं चित्रम् । कविशाब्दिकेन भट्टिना स्वकाव्या-वसाने सहर्षोल्लासं "व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्" इति यदुदघोषि तदिहाप्यवितथमिति मूलोदाहरणैः कैरपि निदर्शयिष्यामः, स्वाभिप्रायं च तत्र तत्र विवर्णयिष्यामः । न वयमस्य कवेर्वैदुष्ये वा बाहुश्रुत्ये वा सन्दिह्महे, न चास्य वाच्यधिकारमपह्नुमहे । पुराणान्तर-दुर्लभां निरुक्तदोषजातजननीं परोक्षप्रियतामेवास्य न रोचयामहे । नास्य यशसि पुरोभागिणो वयम् । सतो दोषान्नोपेक्षामहे, असतश्च नोत्प्रेक्षामहे । प्रथमं तावत्क्रमोपनतानप्रसिद्धाञ्शब्दानप्रसिद्धानर्थांश्च निर्देक्ष्यामः ।

इत्यवतरणिका ।

# प्रथमोऽध्यायः

## अप्रसिद्धाः शब्दा अप्रसिद्धाश्चार्थाः

**तेजोवारिमृदां यथा विनिमयो यत्र निसर्गोऽमृषा (भासते) (१, १, १)।**

अत्र विनिमयशब्दोऽन्योन्यस्मिन्भ्रमः, अन्यस्मिन्नन्यावभास इत्यर्थे प्रयुक्तः। तत्र चास्य प्रसिद्धिर्नास्ति। निमयविनिमयौ प्रणिदाने प्रसिध्यतः।

**मुहुरहो रसिका भुवि भावुकाः (१, १, ३)।**

अत्र भावुकशब्दो भावनायुक्तं सहृदयं विदग्धं वाऽऽचष्टे। अन्यत्र साहित्ये कल्याणेऽर्थेऽस्य प्रसिद्धिः। तथा चामरः पठति—भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् इति। प्रचरन्त्यां हिन्द्यां तु पुराणपरिगृहीतेऽर्थे प्रचुरः प्रयोगः। तदिदमर्वाक्कालतामस्य पिशुनयति।

**यं प्रव्रजन्तमनुपेतमपेतकृत्यम् (१, २, २)।**

अनुपेतमित्यविस्पष्टम्। अत एव विविधं व्याख्यानयन्त्यभ्यूहमात्र-शरणा व्याख्यातारः। कश्चिदाह अनुपेतमुपनयनार्थं गुरुमनुपसन्नम् इति। अपरः पितरमनुपश्लिष्टमिति। इतर एकाकिनमिति।

**धर्मस्य ह्यापवर्ग्यस्य नार्थोऽर्थायोपकल्प्यते (१, २, ९)।**

अपवर्ग एवापवर्गः। स्वार्थेऽण्। तस्मै हित आपवर्ग्यः। अत्यन्तमप्रसिद्धः शब्दः। धर्मस्य मोक्षः फलं न त्वर्थ इति ऋजूक्तिर्नाश्रिता वाग्जालं च समाश्रितम्। मितं च सारं च वचो हि वाग्मितेति विस्मृतम्। एवमुत्तरत्रापि नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृत इति निबध्नन् मोहं ब्रवीति। धर्मस्य कामो न फलं किन्तु धर्म इति किं न श्रीयते।

**बुधे मामोषधीर्विप्रास्तेनायं स उशत्तमः (१, ३, १४)।**

अत्र उशत्तम इत्यनेन इष्टतम इत्यर्थं विवक्षति, न चायं प्रसिध्यति। कर्तरि शतेति स्वीकारात्। न चायमस्यार्थस्यानभिज्ञः, आबालमस्य प्रसिद्धेः। असकृच्चायमुशच्छब्दं कर्मणि शत्रन्तं प्रयुङ्क्ते यथा—शृण्वीत भक्त्या श्रवये-

द्वोशतीं (कथाम्) (३, १३, ४८), तस्यां नरेन्द्र करभोरुरुशद्दुकूल- (८,९,१७), एवं धाष्टर्यान्युशति कुरुते मेहनावीनि वास्तौ (१०, ८, ३१) इत्यादिषु । इह सर्वत्रोशच्छब्दः कमनीयं परिशोधितं वाह । ऋषयस्तु नेत्थं व्यभिचारयन्ति प्रत्ययम् । उशन्ह वै वाजश्रवसः सर्ववेदसं ददावित्यत्र कठोपनिषदि यथाप्राप्तं कर्तरि प्रयुञ्जते ।

**यद्येषोपरता देवी माया वैशारदी मतिः (१, ३, ३४) ।**

इह विशारदशब्दात्स्वार्थेऽणं करोति, विशारद एव वैशारदः, शेषे वा । उभयथापि व्यर्थः शब्दाभ्युच्चयः । लोके विशारदशब्द एव प्रसिध्यति न वैशारदः । अप्रसिद्धेर्वंशान्नानाऽभ्यूहन्ति विवरीतारः । विशारदः सर्वज्ञ ईश्वरः, तस्येयम् इत्येवं कश्चिदुत्स्वप्नायते । अपरस्तर्कयते वैशारदी विद्यास्वरूपिणीति । यद्येवं शब्दोऽर्थश्चोभयमुपज्ञा पुराणकारस्य ।

**अकर्तुरजनस्य च (१, ३, ३५) ।**

जायत इति जन इत्यर्थे प्रसिद्धिः । जननं जन इत्यर्थे त्वत्यन्तमप्रसिद्धिः । जनशब्दो जन्मपर्यायो न । तत्रार्थ आभिधानिका अपि नेमं पठन्ति । जनुर्जनन-जन्मानि जनिरुत्पत्तिरुद्भव इत्यत्रामरोऽपि तद्व्यतिरिक्तानेव जन्मपर्यायान् संचष्टे । अजनो जनशून्यो विजनो भवति, क्षुद्रजन्तुः कुत्सितो वा जनः ।

**न यत्र भूयः परिवर्त उग्रः (१, ३, ३९) ।**

कश्चिदाह परिवर्तः संसार इति । अपर आवर्त इति । न च तत्रार्थेऽस्य प्रसिद्धिः । परिवर्तः परिवर्तनमवस्थान्तरगमनं भ्रमणं वा भवति ।

**नमन्ति पादनिकेतमात्मनः (१, ४, ११) ।**

पादनिकेत इति पादपीठमाह । कल्पितः शब्दः कल्पितश्चार्थः । इहैव पुराणेऽस्य प्रयोगो नान्यत्र । परोक्षप्रियतैव नूतनशब्दनिर्मित्सायां प्रयोजिका ।

**अवंति जन्तुः कुमनीष ऊतीः (१, ३, ३७) ।**

ऊतीर्लीला इति विवक्षति । छन्दसि प्रचुरप्रयोग एषः । तत्रोती रक्षामाह । अन्यत्रापीह पुराणे न सज्जमानाय नभस्वदूतय (८, ५, ४४) इत्यत्रोतिशब्दः प्रयुक्तः । स च गतिमाचष्टे । उभयत्राप्रसिद्धिदोषः समं स्थितः ।

**तथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः ।**
**असम्पन्न इवाभाति ... ... ... ... ... ... (१, ४, ११) ।**

असम्पन्नोऽपूर्ण इत्येके। असम्पन्नोऽसन्तुष्ट इति परे। नायमेतयोरर्थयोः क्वचिदन्यत्र दृष्टः।

**मन्ये त्वां विषये वाचां स्नातमन्यत्र छान्दसात् (१, ४, १३)।**

स्नातं निष्णातं पारगम्। क्वचिद्रामायणे प्रयुक्तोप्ययं शब्दोऽत्रार्थे विरलप्रयोगतमः। अयं तु परोक्षप्रियत्वात् प्रयुङ्क्ते।

**अथ तं सुखमासीन उपासीनं बृहच्छ्रवाः (१, ५, १)।**

बृहच्छ्रवा इति बहुयशा इत्यर्थे प्रयोगः। लोके श्रव इति सकारान्तं पदं कर्णे प्रसिध्यति न यशसि।

**नैष्कर्म्यमप्यच्युतभाववर्जितम्···ज्ञानम् (१, ५, १२)।**

कर्मनिवृत्तिप्राप्यत्वान्निष्कर्म ब्रह्म। तदेकाकारतारूपत्वान्नैष्कर्म्यं निष्कर्मतारूपं ज्ञानम्। नैष्कर्म्यं ज्ञानमिति मूलकारेणाश्रितं सामानाधिकरण्यं व्यामोहयति विवरीतॄन् प्रयोजयति चेत्थम्भूता दुरूहा निःसाराः कल्पनाः।

**जुगुप्सितं धर्मकृतेऽनुशासतः (१, ५, १५)।**

जुगुप्सितं निन्द्यं कर्मेति विवक्षति। इयं कवेर्विवक्षा कथं सुग्रहा स्यात्। सर्वथा स्तनन्धय इव लोहलः कविः। एवमिहैव **न मन्यते तस्य निवारणं जनः** इति तुरीयश्चरणोऽपि समं तिरोहितार्थः। तस्य सकामकर्मणः, निवारणं निषेधवाक्यमित्यभिप्रैति।

**प्रादेशमात्रं भवतः प्रदर्शितम् (१, ५, २०)।**

प्रदेशमुद्देशमिति विवक्षति। प्रादेशः प्रदेशो न भवति। **उपसर्गस्य घञ्यमनुष्ये बहुलम्** (पा० ६, ३, १२२) इत्यनेनोपसर्गस्य दीर्घः। भिद्यते हि कृतदीर्घोऽकृतदीर्घादर्थे। यथा प्रासादः प्रसादात् प्रासङ्गः प्रसङ्गात्। कोषश्चापि पुष्यति नो वच इत्युद्घ्रियते—**प्रादेशतालगोकर्णास्तर्जन्यादियुते तते (करे)** इत्यमरः।

**स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः (१, ५, २२)।**

बुद्धिर्ज्ञानं दत्तं दानमिति चिकथयिषति। यद्यपि नपुंसके भावे क्ते रूपसिद्धिः, प्रयोगस्तु विरलः।

**अनन्तपारस्य निवृत्तितः सुखम् (अर्हति वेदितुम्) (१, ५, १६) ।**

सुखं स्वरूपभूतमानन्दम् । निर्विकल्पसुखात्मकं स्वरूपमिति वा विवक्षितमिति टीकाकृतः । उभयथापि सुखशब्दस्यास्थाने प्रयोगः । स ह्यैन्द्रियके सौहित्येऽनायासे वा प्रसिध्यति । आनन्दशब्द एव ब्रह्मणि प्रतिनियतविषयः । **आनन्दं ब्रह्मणो विद्वान्न बिभाय कुतश्चने**त्यादिषु शतश औपनिषदीषु श्रुतिषु श्रवणात् ।

**निरूपितो बालक एव योगिनां शुश्रूषणे ... (१, ५, २३) ।**

निरूपितो नियुक्त इत्यर्थे प्रयोगः । सोऽप्रसिद्धः । बहुलश्चात्र पुराणे ।

**इत्थं शरत्प्रावृषिकावृतू हरेः (१, ५, २८) ।**

इह प्रावृषिक इति प्रावृडर्थे प्रयोगः । प्रावृषि जातः प्रावृषिको भवति । **प्रावृषष्ठप्** इति सूत्रेण ठब्विधिः । भवे प्रावृषेण्य इति भवति । स्वार्थे ठक्ष्ठपो वा विधिर्नास्ति ।

**यदीश्वरे भगवति कर्म ब्रह्मणि भावितम् (१, ५, ३२) ।**

भावितमर्पितम् । शब्दः प्रसिद्धोऽर्थस्त्वप्रसिद्धः स्वप्रेक्षयोत्प्रेक्षितः । एकान्तरे पद्येऽप्येतस्मिन्नर्थे कल्पितशब्दप्रयोगः—**त एवात्मविनाशाय कल्पन्ते कल्पिताः परे** इति ।

**तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् (१, ५, ३३) ।**

तदेव द्रव्यमामयं न पुनातीत्येकं वाक्यम् । चिकित्सितं सत् तदेव द्रव्यं पुनातीत्यपरम् । क इह चिकित्सितशब्दार्थः । द्रव्यान्तरैर्भावितमिति श्रीधरः । कथमस्यार्थस्योपलब्धिरिति स एव प्रष्टव्यः । चिकित्सारूपतां नीतमिति गङ्गा-सहायः । चिकित्साशब्दात् तत्करोतीत्यर्थे णिच्, ततः क्त इति च सः । चिकित्सां करोति चिकित्सति । ततः कर्मणि क्ते चिकित्सितं कृतचिकित्सं भवति । द्रव्यं चिकित्सितमिति स्थितमनौचित्येन । शब्दशक्तिमनालोच्य मनीषितानर्थानर्पयितु-मीहते कविरिति परमार्थः ।

**संक्लेशनिर्वाणमुशन्ति (१, ५, ४०) ।**

वश कान्तावित्ययं धातुः प्रियोऽस्य कवेः । लोके त्वस्य क्वाचित्कः प्रयोगः । इह च यथा टीकाकृतां दर्शनमुशन्ति मन्यन्त इत्यर्थोऽभिमतः ।

**रूपं भगवतो यत्तन्मनःकान्तं शुचापहम् (१, ६, १९)।**

शुचामपहन्तीति शुचापहम्। भागुरिमतमाश्रित्याप् कृतः। प्रयोगस्तु न प्रसिध्यति।

**आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे (१, ७, १०)।**

निर्ग्रन्थाः के भवन्ति इत्यत्र विविधा विकल्पा व्याख्यातॄणाम्। कश्चिदाह—निर्ग्रन्था निर्गताहङ्कारग्रन्थय इति। अपरो विधिनिषेधग्रन्थातीता इति। इतरो निर्गता ग्रन्थेभ्यः शास्त्रेभ्यः। श्रोतव्यस्य श्रुतस्य च निर्विण्णा इति।

**प्रजोपप्लवमालोक्य लोकव्यतिकरं च तम् (१, ७, ३२)।**

लोकव्यतिकरो लोकविनाश इति विवक्षति। अत्रार्थेऽस्य सामर्थ्यं न। व्यतिकरो हि मिश्रणं संसर्गं वाचष्टे। **व्यतिकर इव भीमस्तामसो वैद्युतश्चे**त्युत्तरे रामचरिते यथा। अन्यत्रापीह नाशेऽर्थे व्यतिकरो दृश्यते यथा—**विषण्णचेतसं तेन कल्पव्यतिकराम्भसा** (३,९,२७) इत्यत्र। **जगद्व्यतिकरावहम्** (१०,६७,२८) इत्यत्र च। भेदे वैषम्ये साम्यावस्थात्यागेन गुणप्रधानभावे चापि विलोक्यते यथा—**किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः** ( धर्मादयः ) ( ७, ६, २५ ), **यस्माद् गुणव्यतिकरो निरुपाधिकस्य** (८, १२, ८), **व्यक्ते गुणव्यतिकरेऽगुणवान् पुरुषो यथा** (१०, २०, १८), **यासां ( शक्तीनाम् ) व्यतिकरादासीद्विकल्पः** (११,२२,६), **गुणव्यतिकरे सति** (११,१०,३४), **गुणव्यतिकरः कालः स्वभावः** (११,१२,१३) इत्यत्र।

**निरीक्ष्य कृष्णाऽपकृतं गुरोः सुतम् (१, ७, ४२)।**

अपकृदिति क्विबन्तं दुष्कृद्वत्। क्विप् चेति क्विप्। सिध्यति प्रयोगो न च प्रसिध्यति।

**सरहस्यो धनुर्वेदः सविसर्गोपसंयमः (१, ७, ४४)।**

उपसंयमः प्रतिसंहारः। नूत्नः शब्दो यत्नक्लृप्तः।

**गौरवं कुलम्** (वृजिनं नार्हति प्राप्तुम्) (१, ७, ४६)।

गुरोरिदं गौरवम्। बाढं सिध्यति शब्दः। प्रयोगस्त्वत्रार्थे **इहैव**। गौरवमिति भावेऽणन्तं प्रसिध्यति।

**मायाजवनिकाच्छन्नमज्ञमधोक्षजमव्ययम् (१, ८, १९)।**

अज्ञमित्यज्ञातमलक्षितमाह । अज्ञशब्दस्यैषोर्थः स्वप्नगम्योपि न । एवञ्जातीयकान् पदपदार्थान्निबध्नन् कविः काव्यसधर्मेदं पुराणं व्याख्यागम्यमिति गमयति ।

**नैवार्हत्यभिधातुं वै त्वामकिञ्चनगोचरम् (१, ८, २६)।**

अभिधातुं हरिगोविन्दादिनामभिः कीर्तयितुमित्यभिप्रैति । अकिञ्चनास्त्वद्व्यतिरिक्तं किंचनापीष्टं वस्तु येषां नास्तीत्यर्थमभिप्रेत्योक्तिरित्यभ्यूहन्ते महता क्लेशेन विवरणकाराः । अकिञ्चन इति दरिद्रे प्रसिध्यति । गोचरोपि दर्शनगोचर इत्यर्थमादाय प्रयुक्तः । अप्रसिद्धिप्रियताऽपराध्यति न वैदुष्यम् ।

**कलेवरं यावदिदं हिनोम्यहम् (१, ९, २४) ।**

हिनोमि त्यजामीत्यर्थः । नायं क्वचित् केनापि परिगृहीतः । सोऽयमत्यन्तमविदितो विदुराणाम् । अनुपसृष्टस्य हिनोतेः प्रयोगोपि लोके सुदुराप इत्यप्रसिद्धेरुपचयः । त्यागेऽर्थेऽन्यत्रापीह पुराणे प्रयोगा दृश्यन्ते ते केचनोदाह्रियन्ते—**स्वां शिवतमां पदवीं न हिन्वन्ति** (५, १, ५) । **तेऽकृतार्थं प्रहिण्वन्ति प्राणा रायः सुतादयः** ( १०, ४९, २३ ) । **हिन्वन्त्यनाद्यात्मविपर्ययग्रहम्** (१०, ७७, ३२) इति । प्रक्षेपणे प्रासने पातने समर्पणे चाप्यर्थे समुपलभ्यन्त उदाहृतयः—**सुरेश कस्मान्न हिनोषि वज्रम्** (६, ११, १९), **आविध्य शूलमहिनोदथ कालनेमिः** (८, १०, ५६), **हिन्वतोऽधः शयनस्य चरणौ** (१०, २६, ५), **आत्मानमजितात्माऽपारेऽन्धे तमसि प्रहिणोति** (५, १४, २८), **यजस्व योगेन च कर्म हिन्वन्** (७, १०, १२) इति ।

**ध्यानपथश्चतुर्भुजः (१, ९, २४) ।**

ध्यानस्य पन्था इति विग्रहः । षष्ठीतत्पुरुषः । नैतेन ध्यानस्य गोचर इत्यर्थः शक्यो लब्धुम् । तदर्थलब्धये ध्यानपथगः, ध्यानपथे स्थित इति वा वाच्यमभिधेयव्यक्तये ।

**तुष्टाव जन्यं विसृजञ्जनार्दनम् (१, ९, ३१) ।**

जन्यं शरीरमित्याह । लोकवेदयोर्नानार्थकोऽयं शब्दः क्वचिदपि शरीरं नाह । जन्यो जनसामान्यं भवति, लौकिकः समानदेशे वर्तमानो राष्ट्रियो वा भवति । वरस्य स्निग्धा अपि जन्या उच्यन्ते । जन्या वध्वा वोढारोपि जन्या व्यपदिश्यन्ते । वरस्य मातुः सख्यपि जन्येति शब्द्यते । जामातुः सखी

खल्वपि जन्येति समाख्यायते। जन्यं (नपुंसकं) युद्धमाचष्टे प्रवादं जनजल्पं चेत्यलं विस्तरेण। कविकल्पितोऽर्थस्तु सुदूरं संवीक्ष्यापि नाधिगम्यते।

**धृतरथचरणोऽभ्ययाच्चलद्गुः (१, ९, ३७)।**

चरणश्चक्रम्। कः कथमूहेतायमर्थो विवक्षितः प्रकरणं चेच्छरणं न स्यात्।

**स्वनिगममपहाय मत्प्रतिज्ञामृतमधिकर्तुमवप्लुतो रथस्थः (१, ९, ३७)।**

निगमः प्रतिज्ञा। बह्वर्थोऽपि निगमशब्दः प्रतिज्ञां नाह। शब्दा मदधीनवृत्तयः। यत्रार्थे तानिच्छामि तत्र तैर्वर्तितव्यं नान्यत्र। अयं शब्द इममर्थं ब्रवीत्वित्येवमीश्वरस्येव मे संकेतोऽनुवृत्त्यो लोकेनेत्यभिमन्यतेऽयं पुराणकारः कविः।

**मम दृशिगोचर एष आविरात्मा (१, ९, ४१)।**

दृग्वचनो दृशिशब्द इहैव। अप्रसिद्धिप्रियतैव प्रयोजिका। अनेकत्र चेह दृशिर्दृक्पथमवतरति। तद्यथा—मध्ये कृशो वहसि यत्र दृशिः श्रिता मे (५, २, ११), त्रैलोक्यकान्तं दृशिमन्महोत्सवम् (१०, ३८, १४), स्निग्धेक्षणं नृप पपुर्दृशिभिर्नृनार्यः (१०, ८६, २०) इति। दर्शने चापि दृशिर्दृश्यते—गोपीदृगुत्सवदृशिः (कृष्णः) (१०, १४, ४७) इति। गोपीदृशां गोपवधूनेत्राणामुत्सवरूपा दृशिर्दर्शनं यस्येत्यर्थः।

**परिध्युपान्तामनुजानुवर्तितः (१, १०, ३)।**

परिधयः समुद्रा उपान्ता यस्यास्तां गाम् पृथिवीम्। परिधिः समुद्रो भवतीति कस्य प्रसिध्यत्यर्थोऽन्यत्र भागवतकारात्।

**समर्चितो ह्यस्य गृहीतपाणिभिः (१, १०, २८)।**

गृहीतः पाणिर्यासामित्यर्थे पाणिगृहीत्य इति प्रसिध्यति शब्दाकृतिर्लोके। किमयं लोकेऽनभ्यन्तरो यदेवमाचरति। नैतदस्ति। प्रसिद्धिमपद्वेष्टीति तत्समाचारः। कश्चिदाह—अस्थाने दूषणं गृह्यते। कविस्त्वन्यथाऽभिप्रैति। गृहीतः कृष्णस्य पाणिर्याभिस्ता इत्यभिप्रायेण कवेः प्रयोगः। एवमपि नापायो दूषणस्य। पाणिपीडने (करग्रहे) वरः कन्यायाः पाणिं पीडयति (गृह्णाति) इति तस्य कर्तृता, कन्यासम्बन्धिनः पाणेश्च कर्मता न तु विपर्ययेण कन्याया वरपाणिग्रहणे कर्तृतेति प्रतितिष्ठति समयः। अत एव युज्यते हस्तग्राभ इति पत्युः समाख्या।

**प्रद्युम्नसाम्बाम्बसुतादयः (१, १०, २९)।**

प्रद्युम्नसाम्बाम्बाः सुता यासां ता रुक्मिणी जाम्बवती नाग्नजित्यः, ता आदयो यासां ताः सत्यभामादय इति विवक्षति कविः। अहो द्राविडप्राणायामः। किन्त्वेष द्राविडः।

**न जात्वपैत्याहृतिभिर्हृदि स्पृशन् (१, १०, ३०)।**

आहृतय उपहारा उपायनानीति विवक्षति। न चाङ्पूर्वो हरतिस्तत्र प्रसिध्यति। आहरणमानयनमात्रमाह।

**दध्मौ दरवरं तेषां विषादं शमयन्निव (१, ११, १)।**

दरः शङ्ख इति स्वीकरोति। भये श्वभ्रे चास्य प्रसिद्धिः। दशमे स्कन्धेऽपि शङ्खार्थको दरः श्रूयते।

**प्रहर्षवेगोच्छ्वसितशयनासनभोजनाः (१, ११, १७)।**

उच्छ्वसितान्युल्लङ्घितानि त्यक्तानि शयनादीनीत्यर्थ इति श्रीधरादयः। न चेदं तमर्थं वक्तुमीष्टे। न च श्वसिर्गत्यर्थको येनोत्पूर्वं उत्क्रमं व्यतिक्रममतिक्रमं वा ब्रूयात्, यथा लघिः।

**सिक्तां गन्धजलैरुप्तां फलपुष्पाक्षताङ्कुरैः (१, ११, १४)।**

उप्तामाकीर्णामिति विवक्षति। न च केवलो वपिस्तत्रार्थे प्रसिध्यति। अन्यत्रापीह पुराणेऽस्मिन्नर्थे प्रयोगो वपेः। ··· **कृष्णस्य वदनाम्बुजम्। वीक्ष्यतां श्रमवार्युप्तम्**··· (१०, ४४, ११) इति।

**घनो यथार्कोडुपचापवैद्युतैः (१, ११, २७)।**

विद्युदर्थे स्वार्थेऽणं कृत्वा वैद्युतमिति प्रयुङ्क्ते तद्धितप्रियः, तेन जायमानामप्रसिद्धि न गणयति। केवलश्चापशब्दोपीन्द्रचापं नाह, तत्राप्रसिद्धेः।

**उत्तस्थुरारात्सहसाऽऽसनाशयात् (१, ११, ३१)।**

आसनेर्थे आसनाशयः। नूत्नः शब्दः। अनर्थकश्चोत्तरपदमाशयः प्रसादं प्रतिहन्ति।

**तमात्मजैर्दृष्टिभिरन्तरात्मना**
**दुरन्तभावाः परिरेभिरे पतिम् (१, ११, ३२)।**

आत्मजैः पुत्रैर्द्वारीभूतैः। कथं पुत्राः परिरम्भणे द्वार इति न सुज्ञानम्। अत एवासन्तुष्टष्टीकाकारो विकल्पयति—आत्मजैर्दर्शनोद्दीपितैर्मदनैर्हेतुभिरिति

वाऽर्थः। एवमपि बहुवचनं नोपपद्यते। दुरन्तभावा अनवधिप्रेमाण इति विवक्षति। अनन्तेऽर्थे दुरन्तशब्दोऽभव्यः। पठनसमकालमेव किमप्युद्वेजयति सचेतसः।

**पदे पदे का विरमेत तत्पदात् (१, ११, ३३)।**

विश्लिष्यावस्थातुमुत्सहेतेत्यर्थं इति टीकाकारः। विरतिर्नाम क्रियाया विश्रान्तिर्भवति। इह च न काचित् क्रिया श्रूयते।

**परिवृत्ततेजसाम् (१, ११, ३४)।**

परिवृत्तं परितो वृत्तं प्रसृतं प्रथितं तेजो येषाम् इति विवक्षति। परिपूर्वो वृतिरवस्थान्तरगमने भ्रमणे वा रूढः।

**रेमे स्त्रीरत्नकूटस्थः (१, ११, ३५)।**

कूटो राशिर्भवति। सङ्घे प्राणिनिकाये त्वस्य न प्रसिध्यति प्रयोगः।

**किं ते कामाः ... ... ... ...।**

**अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे (१, १२, ६)।**

आङः स्थानेऽधेः प्रयोगः शिष्टव्यवहारप्रद्वेषादपूर्वतायां निर्बन्धाद्वा।

**क्षतजाक्षं गदापाणिम् (१, १२, ९)।**

क्षतजे रक्ते अरुणे अक्षिणी यस्य, तम्। क्षतजं शोणिते रूढं न शोणमर्थं पर्यायेण वक्ति।

**भगवान् धर्मगुब्विभुः (१, १२, ११)।**

परोक्षप्रियः कविः प्रसिध्यन्तं धर्मगोपं धर्मगोपाम् इति वा शब्दं परिहृत्यात्यन्तमप्रसिद्धं क्विबन्तं धर्मगुप् इति पदं परिगृह्णाति।

**हित्वेदं नृप गङ्गायां यास्यत्यद्धाऽकुतोभयम् (१, १२, २८)।**

इदमा शरीरमाह। न च तत्रार्थेऽस्य प्रसिद्धिः। दुरूहतास्येष्टा। कामं सा फलति। अकुतोभयं मोक्ष इत्यर्थोऽपि सममप्रसिद्धः। अन्यत्रापीह पुराणे **एतन्निर्विद्यमानानामिच्छतामकुतोभयम्** (२, १, ११) इत्यत्र मोक्षपरोऽकुतोभय-शब्दो लक्ष्यते।

**भीमेनावर्जितं पिण्डमादत्ते गृहपालवत् (१, १३, २२)।**

इह गृहपालशब्दः श्वादौ प्रयुक्तः। तत्रार्थेऽस्यान्यत्र दुर्लभः प्रयोगः।

**पतिव्रता चानुजगाम साध्वी**
**हिमालयं न्यस्तदण्डप्रहर्षम्** (१, १३, २९) ।

इह न्यस्तदण्डाः संन्यासिनो यतयः परिव्राजका उक्ताः । ते हि दण्डिन इति प्रसिध्यन्ति । दण्डो दम एवास्तीति । न्यस्तदण्डा इति शब्दमर्यादया त्यक्तशस्त्रा अद्रोहाः सौम्या उच्यन्ते । न हि न्यस्तदण्ड इति संन्यासिनि नियम्यते ।

**आशंसमानः शमलं गङ्गायां दुःखितोऽपतत्** (१, १३, ३२) ।

आशंसमानः आशङ्कमान इत्यभिमन्यते । सोऽयं मिथ्याऽभिमानः । आङः शसि इच्छायाम् इति धातोः शानचि रूपम् । तत्राशङ्कार्थः कथमुदयते । न चात्रार्थे आशंसेः प्रयोगः क्वचिदस्ति । शमलमपराध इत्यप्यलौकिकम् । शमलं च गूथपर्यायेषु पठत्यमरः—**उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषम्** इति ।

**यथा क्रीडोपस्कराणां संयोगविगमाविह** (१, १३, ४२) ।

उपस्करशब्द इह साधनेर्थे प्रयुक्तः । क्रीडोपस्कराः क्रीडनकानी-त्यनर्थान्तरम् । उपस्करशब्दस्तु साधनमात्रेऽप्रवृत्य शोधनसाधनं संमार्जन्याद्याह । तथा च मानवे धर्मशास्त्रे (३, ६८) प्रयोगः—**चुल्ली पेषण्युपस्कर** इति ।

**फल्गूनि तत्र महताम् (भोजनम्)** (१, १३, ४६) ।

फल्गूनि अल्पानि (सत्त्वानि) । फल्गु निःसारं भवति न त्वल्पम् ।

**निरुद्धकरणाशयः** (१, १३, ५५) ।

आशयो मनः । प्रसिद्धः शब्दः । अर्थश्चाप्रसिद्धः ।

**पितृमातृसुहृद्भ्रातृदम्पतीनां च कल्कनम्** (१, १४, ४) ।

कल्कनं कल्को दम्भो भवति न तु कलहः । कलहं चायं विवक्षति । तत्रार्थे प्रमाणं मृग्यम् ।

**निर्जित्य सङ्ख्ये त्रिदशांस्तदाशिषः** (१, १४, ३७) ।

आशिषो भोग्यानर्थान् । नायमर्थः कोषगतः । **स्त्री त्वाशीर्हिताशंसा** इति चामरः । स्वस्य वा परस्य वा हितस्य देवतायाः सकाशादाशंसाऽर्थनाऽऽशीः-शब्दार्थः । अयं तु तमर्थमनादृत्य कामिते भोग्येऽर्थेऽनेकाम्वारान्प्रयुङ्क्तेऽन्यैरसह-चरितः । केचन प्रदेशाः प्रदर्श्यन्ते—**मर्त्यानां किमुताशिषः** (१, १८, १३), **इदं**

तु शुक्लं तीर्थमाशिषां यापकं नृणाम् (३, २३, २३), सत्याशिषो हि भगवंस्तव पादपद्ममाशीस्तथाऽनुभजतः पुरुषार्थमूर्त्तेः (४, ९, १७) इति। अन्त्य आशिषो राज्यादिभोगा अभिप्रेताः। आशिषोऽवेक्ष्य पादपद्मरूपाऽऽशीः सत्येति विवक्षति। भगवानिह पुरुषार्थमूर्त्तिरुक्तः। तत्केनाभिप्रायेण। पुरुषार्थशब्दो हि धर्मार्थकाममोक्षचतुष्टये रूढः। भगवत्यनर्थको व्यपदेशो भवति, भगवदितरस्मिञ्जीवे तु सार्थकः। बाढं परमः पुरुषार्थो मोक्षो भवतीति तत्परत्वेनादोषः। प्रकृते निर्विशेषस्योक्तेस्तदग्रहान्न दोषनिर्मोक्षः। क्वचित्पुण्येऽर्थेपीह प्रयोगः—आर्यभ्रातरहं मन्ये आत्मानमकृताशिषम् (१०, ८२, १९) इति। इत्थमनर्गलाऽर्थपरिग्रहे प्रवृत्तिः कवेरिति निर्दशितं भवति।

**एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः (१, १५, १)।**

विकल्पितो विकल्पेन एवम्भूतो वा त्वमेवम्भूतो वेत्यात्मकेन पृष्ट इत्यर्थ इति कश्चिदूहते। विर्विकल्पे। यद्येषोर्थः सत्यं क्रान्तदर्शनः कविः, अन्यैरदृष्टार्थस्य दर्शनात्। क्लृपिः पृच्छामाहेत्यस्मदादीनामगोचरोऽर्थः।

**कृच्छ्रेण संस्तभ्य शुचः पाणिनामृज्य नेत्रयोः (१, १५, ३)।**

शुचः शोकस्य कार्यभूतान्यश्रूणि। कारणे कार्योपचार इति। सिध्यति प्रयोगो न तु प्रसिध्यति। इह त्वन्यत्रापि दृश्यते—**मुञ्चन्मीलद्दृशा शुचः** (३, २, ५)। आङ्पूर्वस्य मृजेः प्रयोगोपि दुर्लभः। अत्र विषये प्रशब्द एव प्रायो दृश्यते।

**उक्थेन रहितो ह्येष मृतकः प्रोच्यते यथा (१, १५, ६)।**

उक्थः प्राण इति प्रकरणवशात्कथंचिल्लभ्यते न च शिष्टव्यवहारे विलोक्यते।

**यत्तेजसा नृपशिरोऽङ्घ्रिमहन्मखार्थे (१, १५, ९)।**

नृपाणां शिरांस्यङ्घ्रौ अङ्घ्रिपीठे यस्य स जरासन्धः। नृपशिरोऽङ्घ्रिपदेन जरासन्धो विवक्षित इति कः कथमुन्नयेत्।

**सौत्ये वृतः कुमतिनाऽऽत्मद ईश्वरो मे (१, १५, १७)।**

सौत्ये सूतकर्मणि। इहैव प्रयोगो नान्यत्र। सिध्यति शब्द इति नैतावता प्रयोज्यो भवति।

**शय्यासनाटनविकत्थनभोजनादि-**
**ष्वैक्याद् वयस्य ऋतवानिति विप्रलब्धः (१, १५, १९)।**

इह विप्रलब्ध उपालब्ध उपहसितः तिरस्कृतः सोत्प्रासमुक्त इति वार्थमाचष्टे। न च तत्रायं प्रसिध्यति। इह पुराणे तु बहुलं प्रयुक्तः। अन्यत्र साहित्ये विप्रलब्धो वञ्चितमतिसंहितमाह। चन्द्रोपरागं प्रति तु केनापि **विप्रलब्धासीति** मुद्राराक्षसे यथा। **विप्रलम्भो विसंवाद** इति कोषश्चापि विप्रलभेः प्रतारणामर्थं प्रमाणयति। केवलप्रशब्दप्रयोगेपि स एवार्थः। उक्त उपहासार्थ इहस्थाः काश्चनातिरिक्ता दिश उच्यन्ते—**स्मयन्प्रलब्धुम्** ( = उपहसितुम् ) (३, १७, २७), **दृढं प्रलब्धो भगवानपां पतिः** (३, १७, २९), **सोपि विप्रो भगवता प्रलब्धश्च रुषा भृशम्** (३, १८, १३), यदपि प्रलब्धः (४, ७, १३), **बहु विप्रलब्धः** (५, १०, ६), **प्रलब्धैः** (आङ्गिरसैर्ब्रह्मर्षिभिः), (१०, ३४, १३), **क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथवा** (११, २२, ५७) इति।

**सर्वं क्षणेन तदभूदसदीशरिक्तं**
**भस्मन्हुतं कुहकराद्धमिवोप्तमूष्याम्** (१, १५, २१)।

यद्यपि ऊषीति स्त्रीलिङ्गं शब्दरूपं कात्यायनश्रौतसूत्रे श्रूयते लोके तु ऊष इति वा ऊषर इति वा प्रचरति, **उप्तं बीजमिवोषर** इति मानवे धर्मशास्त्रे यथा।

**लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः** (१, १५, ३२)।

प्रकृतिलयादिति पञ्चम्या चेन्निर्देशः स्यादव्यक्ततार्थस्य विवक्षितस्य न स्याद्वचनासाम्यं च स्यात्। सम्भवः स्थूलशरीरमित्युक्तः। तद्रहितस्तदभिमान-रहितश्चाऽसंभवः। अयं वक्तुरुदरगह्वरे निलीनोर्थः कथंचिदुन्नेयो भवति।

**विभाव्य ··· अधर्मचक्रं गमनाय पर्यधात्** (१, १५, ३७)।

महाप्रस्थानाय मनो दध इति श्रीधरः। गमनोचितं वेषं चकारेत्य-न्वितार्थप्रकाशिकायां गङ्गासहायः। उभयमप्यन्वाख्यानं नालमव्यक्तवाचः कवेरभिप्रेतमसंशयेन निर्वक्तुम्। परिपूर्वो दधातिर्धारणे न दृष्टः, आच्छादने तु दृष्टः। आच्छादनं चेदर्थः स (राजा) किमाच्छादितवान् संव्यानमुपसंव्यानमुभयं वेति नोक्तम्। न हि परिदधातिरकर्मकः क्वचित्प्रयुज्यते। कविस्तु स्वमर्थं स्वयं नोन्मीलयति किन्तर्हि निमीलयतीत्येवंशीलः।

**तोयनीव्याः पतिं भूमेः** (१, १५, ३८)।

समुद्रवसना सागराम्बरा उदन्वच्छन्नेत्यादि कविभिर्जुष्टं विशेषणं परिहृत्य तोयनीवीति नूतनमशुद्धं कल्पयत्यपूर्वतामिच्छन्। नीवीति जघनवासो-ऽर्धोरुकं भवति तद्ग्रन्थिर्वा न वसनमात्रम्। जघनवासस्त्वारोपस्य प्रकृते किमौचित्यम्, को वोपयोग इति स प्रष्टव्यः।

तं पञ्चत्वे ह्यजोहवीत् (१, १५, ४१)।

पञ्चत्वेन पृथिव्यादि भूतपञ्चकं विवक्षति। लोके तु पञ्चत्वं पञ्चतेति वा लक्षणया मृत्युमाह।

ते साधुकृतसर्वार्था ज्ञात्वाऽऽत्यन्तिकमात्मनः।
... ... ... ... ... वैकुण्ठचरणाम्बुजम् ॥ (१, १५, ४६)

आत्मन आत्यन्तिकमन्तिमं शरणमिति कश्चित्। मुख्यं शरणमिति चापरः। कुतोऽस्योभयस्यार्थस्योपलब्धिरिति तौ नानुयोज्यौ। स्वकपोलकल्पितावर्थाविति हि विजानीतः।

शरासनं संयुगशौण्डिराददे (१, १६, १०)।

शौण्डेर्थे शौण्डिरिहैव परोक्षप्रियतया प्रयोजितः।

क्षुद्रायुषां नृणामङ्ग मर्त्यानामृतमिच्छताम् (१, १६, ७)।

ऋतं मोक्ष इत्यत्यन्तमप्रसिद्धोऽर्थः।

यथा हि सुत्यामभिजातकोविदाः (१, १६, १)।

अभिजातं जन्मेत्यपूर्वोऽर्थः। अभिजातः कुलीनो भवति। लक्षणया मधुरो रम्य इत्यप्यर्थः।

सारथ्यपारषदसेवनसख्यदौत्यवीरासन- (१, १६, १६)।

वीरासनं रात्रौ खड्गहस्तस्य तिष्ठतो जागरणमिति टीकाकाराः। वीरासनशब्देन च योगशास्त्रे लोके वाऽस्यार्थस्य न क्वचिद् ग्रहणम्।

केचिद् विकल्पवसना आहुरात्मानमात्मनः (१, १७, १९)।

तिरोहितार्थे विकल्पवसना इति पदे नानाऽभ्यूहा वृत्तिकाराः। विकल्पं भेदं वसते आच्छादयन्तीति विकल्पवसना अद्वैतिन इति श्रीधरः। यद्वा विकल्पैः कुतर्कैः प्रवृत्ता नास्तिका विकल्पवसनाः। अपि वा विकल्पवसनाः केचित्तार्किकविशेषाः। वस्तुतो मूलकारोऽत्र किमभिप्रायादिति स एवाङ्ग विद्याद् यदि वा न विद्यात्।

सारङ्ग इव सारभुक् (१, १८, ७)।

सारङ्गो भ्रमर इतीहार्थः। तत्रास्य प्रसिद्धिर्नेति साहितीजुषः। आभिधानिका अपि नेममर्थं संजगृहुः। तथा चामरः पठति—चातके हरिणे पुंसि

सारङ्गः शबले त्रिषु इति । सारङ्गः पुंसि हरिणे चातके च मतङ्गजे शबले त्रिषु इति च मेदिनी ।

**योगेश्वरा ये भवपाद्ममुख्याः (१, १८, १४) ।**

पाद्मो ब्रह्मा । पद्मयोनिरब्जभूरित्यादयस्तु तन्नामसु पठ्यन्ते । पाद्म इति नूत्ना शब्दप्रक्लृप्तिः ।

**स कथं तद् गृहे द्वाःस्थः सभाण्डं भोक्तुमर्हति (१, १८, ३४) ।**

सभाण्डं पात्र एव स्थितम् (वस्तु) इत्यर्थमभ्यूहन्ते श्रीधरादयः । रोचते नोऽयमभ्यूहः । शब्दस्तु कथमेतमर्थमर्पयतीति नोहितं तैः । सभाण्डमिति बहुव्रीहिश्चेद् भाण्डेन सह वर्तमानम् इत्यर्थः स्यात् । ततो भाण्डमपि भुजिक्रियायाः कर्म स्यादिति प्रसङ्गः । साकल्येऽव्ययीभावश्चेत्स एव प्रसङ्गः । सतृणमभ्यवहरतीति-वद् भाण्डमपरित्यज्य भुङ्क्त इत्यर्थो दुष्परिहरः स्यात् । वस्तुतोऽसमीक्ष्यकारी कविरर्थसङ्गतिमसमीक्ष्य शब्दान् प्रयुङ्क्ते ।

**अरक्ष्यमाणोऽविवरूथवत् क्षणात् (१, १८, ४३) ।**

वरूथः सङ्घातः । वरूथो रथगुप्तिरिति तु कोषकाराः ।

**कस्तां न सेवेत मरिष्यमाणः (१, १९, ६) ।**

मरिष्यमाणो मरणधर्मेत्याह । मरिष्यमाणस्त्वासन्नमरणो भवति । सत्यं वाचि स्वतन्त्रः कविः ।

**आत्तबान्धवः (१, १९, ३५) ।**

आत्तं गृहीतं बान्धवं बन्धुकृत्यं येन सः । लघुपूर्वत्वाभावात्कर्मणि अण् दुर्लभः । शैषिकेऽणि विवक्षानैयत्यं नास्ति बन्धूनामिदमित्यर्थाद् बन्धुकृत्यार्थस्य विशेषस्यानुपलब्धेः ।

**न लक्ष्यते ह्यवस्थानमपि गोदोहनं क्वचित् (१, १९, ३९) ।**

एकस्या गोर्दोहनेन यावान्कालो व्याप्यते स इह गोदोहनशब्देनोक्तः । कामं गोदोहनेन गोदोहनकालो लक्ष्यते सामान्यः, न त्वेकगवीदोहनव्याप्तः परिच्छिन्नः कालविशेष इति लक्षणायाः कोविदा विदुः । वस्तुतोऽयं शब्द-शक्तिस्वाभाव्यमविभाव्य सहसा शब्दान्प्रयुङ्क्ते ।

**अधीतवान् द्वापरादौ पितुर्द्वैपायनादहम् (२, १, ८) ।**

द्वापरादावित्यनेन द्वापरान्त इति विवक्षति, अन्यथा वितथमुक्तं स्यात् । परं किमिति द्वापरान्त इत्यनुक्त्वा द्वापरादावित्याह । अप्रसिद्धिप्रियत्वात् ।

द्वापर आदिर्यस्य कालस्य स द्वापरादिः । द्वापरान्त इत्यर्थः । आदिशब्द आद्यावयवपर इति चेन्नेष्टसिद्धिः । न हि द्वापरः कालस्य (कलिकालस्य) आद्यावयवो भवति, किन्तर्हि स्वतन्त्रसत्ताकः पदार्थः । तेन द्वापरान्तलक्षणोऽर्थो दुर्लभः ।

**किं प्रमत्तस्य बहुभिः परोक्षैर्हायनैरिह (२, १, १२) ।**

परोक्षैरज्ञाततया गतैरतीतैरित्यभिप्रैति । परोक्षशब्दश्च न तत्र प्रसिध्यति ।

**तपो रराटौ विदुरादिपुंसः (२, १, २८) ।**

वाजसनेयिनां संहितायां ललाटेर्थे रराट इति श्रूयते । तस्येदमनुकरणम् । लोके तु ललाटम् इत्येव प्रसिध्यति । कोषश्च—ललाटमलिकं गोधिरिति ।

**सर्वात्मनोऽन्तःकरणं गिरित्रम् (२, १, ३५) ।**

रुद्रे भगवति गिरिशगिरीशौ प्रसिद्धौ । गिरित्राणात्मकं कर्माप्यस्मिन्देवदेवेऽविदितं विदां येनेयं समाख्या भगवतः स्यात् ।

**वयांसि तद् व्याकरणं विचित्रम् (२, १, ३६) ।**

व्याकरणं शिल्पनैपुण्यम् । व्युत्पत्तिरप्यत्रार्थे सहायिका न, व्याकरोतेः पृथक्करणे प्रसिद्धेः । व्याकरणं सङ्घटनमवयवसंश्लेषणं निर्माणं वा न भवति किन्तर्हि विघटनं विश्लेषणम् । सूत्रग्रन्थेष्वपि गोर्वत्सं व्याकरोतीति श्रूयते, तत्र पृथक्करोतीत्यर्थश्च स्वीक्रियते ।

**सत्यां क्षितौ किं कशिपोः प्रयासैः (२, २, ४) ।**

कशिपुः शय्या । अत्रार्थ इहैव प्रयोगः । अन्यत्रापीह पुराणे कशिपुः पर्यङ्के तूलिकायां च पठ्यते तद्यथा **क्वचित्प्रासादपर्यङ्के कशिपौ वा परेच्छया** (७, १३, ४०) । कशिपौ तूलिकायामिति टीकाकारः । **संविष्टं कशिपौ सुखम्** (१०, ४६, १५) । कशिपुः पर्यङ्कः । कोषश्चापि नैतमर्थं प्रमाणीकरोति । कशिपुः त्वन्नमाच्छादनं द्वयमित्यमरः । एकोक्तया कशिपुर्भक्ताच्छादने च द्वयोः पृथग् इति विश्वश्च ।

**श्रीलक्ष्मणं कौस्तुभरत्नकन्धरम् (२, २, १०) ।**

श्रीरेव लक्ष्मीरेव लक्ष्मणं चिह्नं यस्य । लक्ष्मणम् इति लक्ष्मणि लक्षणेऽत्यन्तमप्रसिद्धम् । लक्ष्मणमिति तु पामादित्वान्नप्रत्यये मत्वर्थीये रूपम् ।

**क्षेत्रज्ञ एतां निनयेत्तमात्मनि** (२, २, १६)।

निनयेत् लीनां कुर्यादिति विवक्षति। निनयतिस्त्वावर्जनेऽवसेचने वाऽपां रूढः। बहुला अत्रार्थे सूत्रग्रन्थेषु प्रयोगाः।

**विसृज्य दौरात्म्यमनन्यसौहृदाः** (२, २, १८)।

दौरात्म्यं देहादिष्वात्मभाव इत्येवमर्थापयते श्रीधरः सानुगः। यद्येषोऽर्थस्तदा परा निरङ्कुशता कवेः। अनात्मन्यात्मबुद्धिर्दौरात्म्यमिति कः श्रद्दधीत।

**अष्टाधिपत्यं गुणसन्निवाये** (२, २, २२)।

सन्निवाय इति समवायेऽर्थे प्रयोगः। न केवलमप्रसिद्धिर्दोषो वाग्भ्रंशोऽपि।

**निर्याति सिद्धेश्वरजुष्टधिष्ण्यम्** (२, २, २६)।

धिष्ण्यमिति विमानेऽर्थे प्रयुक्तम्। स न प्रसिध्यति। अमरश्च—धिष्ण्यं स्थाने गृहे भेऽग्नाविति पठति। स्थाने यथा शाकुन्तले क्लृप्तधिष्ण्या वैतानास्त्वां वह्नयः पावयन्त्वित्यत्र। इहापि—**यथाऽञ्जसान्वीयुरकुण्ठधिष्ण्यम्** (३, ५, ४५) इति। विमानव्यतिरिक्तेषु कोषासङ्गृहीतेष्वप्यर्थेषु प्रयोगा इह पुराण उद्देशेन निर्दिश्यन्ते—**अर्चितं सर्वधिष्ण्यपैः** (१०, ६९, ७)। धिष्ण्यानि लोकाः। धिष्ण्यपा लोकपालाः। **ब्रह्मा बिभेत्यलमतो द्विपरार्ध्यधिष्ण्यः** (१२, ८, ४३)। धिष्ण्यं स्थितिरवस्थानम्।

**कथा हरिकथोदर्काः सतां स्युः सदसि ध्रुवम्** (२, ३, १४)।

हरिकथोत्तरा इति विवक्षति। लोके तूदर्कशब्दः फलमुत्तरमाह, न तूत्तरमात्रम्। अन्यत्रापीह पुराणे (८, १५, ३१) उदर्कशब्दः एष विप्रबलोदर्कः सम्प्रत्यूर्जितविक्रम इत्यत्र दृश्यतेऽधिकार्थश्च व्याख्यायते।

**श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः** (२, ३, १९)।

इह संस्तुतः समानार्थे पठितः। नायं तत्र प्रसिध्यति। संस्तुतः परिचितो भवति। संस्तवः स्यात्परिचय इति चामरः।

**जीवञ्छवो भागवताङ्घ्रिरेणुं न जातु मर्त्योऽभिलभेत यस्तु** (२, ३, २३)।

अभिपूर्वो लभिरिहैव। लभेः स्पर्शनमर्थो वेदे प्रसिद्धः, परं तत्राङ्पूर्वस्य स नियम्यते।

**शाब्दे ब्रह्मणि निष्णातः परस्मिंश्च भवान् खलु (२, ४, १०)।**

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीति वाक्यस्यानुवादोऽयम्। तत्र तद्धितप्रिय इति शब्दाच्छैषिकमणं करोति शब्दब्रह्मणोस्तादात्म्यं च भनक्ति।

**सतामसम्भवायाखिलसत्त्वमूर्तये (२, ४, १३)।**

असम्भवोऽनैश्वर्यम्, अनुद्भवो वा। अभ्युदयरोधक इति च तात्पर्यार्थः। सम्भवोऽभ्युदये न प्रसिध्यति।

**निरस्तसाम्यातिशयेन राधसा (२, ४, १४)।**

इह राध ऐश्वर्यम्। लोके राध इति सान्तं प्रातिपदिकं न प्रयोगमवतरद् दृष्टम्। वेदेऽस्य प्रचुरः प्रयोगः। तत्रेदं दानमाह। अत्र पुराणे नानार्थको राधः शब्दः। **भवता राधसा राद्धम्** (४, २४, ३३)। राधः स्वानन्दस्वरूपमिति टीकाकृतः। **अनन्यराधसः** (९, २१, १७)। इह राध आकाङ्क्षोक्ता। ईश्वरातिरिक्तफलाकाङ्क्षारहितस्येत्यर्थः।

**आत्मन्भावयसे न पराभावयन्स्वयम्** (२, ५, ५)।

स्वयं स्वं न पराभावयन् विकारमप्रापयन्नित्यर्थं विवक्षति। नायं शब्दमर्यादया लभ्योर्थः। पराभवस्तिरस्कारो वा भवति विनाशो वा।

**कर्मफलस्वभावस्थो जीवोऽजीवमजीवयत्** (२, ५, ३४)।

जीवयतीति जीव ईश्वरः। जीवशब्द ईश्वरमाचक्षीतेतीन्द्रस्येव बलकृतिर्भवति। न हि लोकवेदयोः क्वचिदीश्वरेऽर्थे जीवशब्दः श्रूयते।

**पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः (२, ६, १३)।**

मूलविभुजादित्वात्के विद्याध्र इति सिध्यति नाम। प्रयोगस्तु न प्रसिध्यति।

**अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु (२, ६, १८)।**

त्रयाणां भूर्भुवः स्वर् इतिनाम्नां लोकानां मूर्धा श्रेष्ठो महर्लोकः। तस्य ये मूर्धान उपरितना लोका जनस्तपःसत्याख्याः, तेषु क्रमादमृतादिकं भगवता व्यधायीति वाक्यार्थो गहने गभीरेऽस्योदरे निलीनः, तं कथञ्चिदुद्घाटयन्ति ये कृतिनस्ते सुकृतिनो नाम।

**पुंसः स्थितिपदः (२, ६, १८)।**

तिष्ठन्ति जीवा अत्रेति स्थितयो भूरादिलोकाः। एवं प्रसिद्धैः शब्दैरप्रसिद्धानर्थानर्पयितुकामोऽकाम्यो भवति जनस्य विज्ञजनस्य च।

**गृहमेधोऽबृहद्व्रतः (२, ६, १९)।**

गृहमेधो गृहमेधी। अबृहद्व्रतो ब्रह्मचर्यादिव्रतरहितः। एकत्र शब्दाकृतिरप्रसिद्धाऽपरत्रार्थः।

**सृती विचक्रमे विष्वङ् साशनानशने उभे (२, ६, २०)।**

साशना कर्मफलभोगसहिता (सृतिः)। अनशना कर्मफलभोगरहिता। अस्फुटार्थे पदे।

**श्रीह्रीविभूत्यात्मवदद्भुतार्णं तत्त्वं परं रूपवदस्वरूपम् (२, ६, ४४)।**

अर्णो वर्णो वाऽक्षरं वा। अत्यन्तमप्रसिद्धौ शब्दश्चार्थश्च।

**श्रुत्वा हरिस्तमरणार्थिनमप्रमेयः (२, ७, १६)।**

अरणार्थी शरणार्थी। वेदेऽरणं विप्रकृष्टं विदेशस्थं वाऽऽह। यतो लौकिकोऽरण्यशब्द आत्मनं लभते। अयं तु व्युत्पत्तिमात्रसमाश्रयो गत्यपरपर्याये शरणेर्थे प्रयुङ्क्ते। नूत्नः शब्दो नूतनश्चार्थः। इह पुराणेऽरणशब्दः शरणार्थोऽसकृत्प्रयुक्तः। केचित्प्रदेशाः प्रदिश्यन्ते—**तमरणं भज वासुदेवम्** (४, २२, ३९)। **यत्र निर्विष्टमरणं कृतान्तो नाभिगण्यते** (४, २४, ५६)। **भीतं प्रपन्नं परिपाति यद्भवान् मृत्युः प्रधावत्यरणं तमीमहे** (८, २, ३३)। ईमहे ईङ्गतौ दिवादिः। **संत्रस्तचित्तोऽरणमेषमाणः** (९, ४, ५२)। **नारायणं तमरणम्** (१०, १६, ३०)। **तत्ते गतोऽस्म्यरणमद्य पादारविन्दम्** (१०, ८५, १९)। **सन्तोऽर्वाग् बिभ्यतोऽरणम्** (११, २६, ३३) इति।

**आत्मानमङ्ग शिरसा हरयेऽभिमेने (२, ७, १८)।**

अभिमेनेऽर्पयाञ्चकार। न ह्यभिपूर्वो मन्यतिरत्रार्थे प्रसिद्धः। क्व प्रसिद्ध इति जिज्ञासा चेदस्मत्कृतिरुपसर्गार्थचन्द्रिका द्रष्टव्या।

**वक्षःस्थलस्पर्शरुग्णमहेन्द्रवाहदन्तैर्विडम्बितककुब्जुषः (२, ७, २५)।**

विडम्बिताः स्वधवलिम्ना धवलीकृता इति श्रीधरादयः। कुतोऽस्यार्थस्योपलब्धिरिति कथं केनाभ्यूह्यम्। ककुभो जुषते सेवत इति ककुब्जुषः (श्रीरामः)। दिशामधिपतिरित्यर्थश्चापि यत्नलभ्यः।

**अह्न्यापृतं निशि शयानमतिश्रमेण (२, ७, ३१)।**

पृङ् व्यायामे इत्यस्य व्याङ्पूर्वस्यैव प्रयोगो दृष्टः। अयं तु परोक्षप्रियोऽपूर्वताकामो विमुत्सृजति केवलमाङं च प्रयुङ्क्ते।

**औपधर्म्यम् (२, ७, ३७)।**

उपधर्म एव औपधर्म्यम्। उपधर्मः पाखण्डधर्मः। शब्दे चार्थे च समानाऽप्रसिद्धिः।

**पूर्भिर्मयेन विहिताभिरदृश्यतूर्भिः (२, ७, ३७)।**

त्वरणं तूः, वेगो जवो गतिः। अनुप्रासे समादृतोऽत्यन्तमप्रसिद्धं शब्दरूपमाश्रयते।

**यस्मात् त्रिसाम्यसदनादुरुकम्पयानम् (२, ७, ४०)।**

त्रिसाम्यं प्रकृतिरूपादानम्। सत्त्वरजस्तमसां साम्यावस्था प्रकृतिरिति तल्लक्षणात्। सदनमावरणम्। त्रिसाम्यसदनेन पातालमुच्यत इति पुराणकारो वेद श्रीधरादयो वा तद्धृदयज्ञाः। सदनमावरणं भवतीति कोऽन्यो विद्यात्।

**येषां स एव भगवान् दययेदनन्तः (२, ७, ४२)।**

दययेत् दयां कुर्यात्। दयतेः केवलाण्णिच्सहचरिताद्वा रूपं न सिध्यतीति दयाप्रातिपदिकाण् णिच् कृतः। छन्दसि वशो नास्तीत्यगतिकस्य गतिरेषा। युद्धयः कुब्जगामिन्य इत्यस्य निदर्शनं वा।

**सध्र्यङ् नियम्य यतयो यमकर्तहेतिं जहुः स्वराडिव**
**निपानखनित्रमिन्द्रः (२, ७, ४८)।**

सहाञ्चतीति सध्र्यक् सहचरमाह। इह तु मनः। तत्कस्मात्। उत्प्रेक्षायाः, न तु लक्षणायाः। तस्याः प्रकृतेऽप्रस्तावात्। कर्त्तो भेदः। कृती छेदने। घञ्। तन्निरासोऽकर्त्त इति कश्चिन्महता यत्नेन व्याचष्टे। स मुग्धः प्रष्टव्यः कर्त्तशब्दः क्वान्यत्र भेदे दृष्टः। वेदे कर्त्तशब्दः श्रूयते स च गर्तपर्यायः। यदि कर्तं पतित्वा संशश्रे (अथर्व० ४, १२, ७)। पञ्चविंशब्राह्मणेपि कर्त्तः, कर्त्तपत्यं चेति द्वयं स्थितम्। भेदे कर्त्तशब्द इहैव पुराणे नान्यत्र। अकर्त्त इत्यत्र नञा तन्निरासः कथं लभ्यते। तत्सादृश्यादिषु प्रकीर्तितेषु षट्सु नञोर्थेषु निरासार्थो नान्तर्भवति। हेतिश्चापि शस्त्रमाह, न साधनमात्रम्। प्रकृते न समवैति प्रयोगः। स्वराट् स्वयं पर्जन्यरूपेण विराजमान इति कथमुत्प्रेक्षितम्। स्वयं राजत इति स्वराडितीन्द्रस्यैव नामस्वन्यतमम्। पर्जन्यरूपेणेत्यतिरिक्तोर्थः कथमुपज्ञातः। यत्सत्यमियं प्रवह्लिका नाम विदां विमोहनाय समाश्रिता पुराणकारेण यत्र प्रतिपदं कल्पिताः शब्दाः कल्पिताश्चार्थाः।

**सम्प्लवः सर्वभूतानां विक्रमः प्रतिसङ्क्रमः (२, ८, २१)।**

सम्प्लवः समुत्पत्तिः। विक्रमः स्थितिः। द्वे अपि पदे सममप्रसिद्धार्थके। सम्प्लव इत्याभूतसम्प्लवम् इत्यादिषु प्रलयमाह। व्युत्पत्तिरप्युत्पत्त्यर्थस्य

नानुगुणा भवति। इयं निरङ्कुशता कवेः। विक्रमः स्थितिमाचक्षीतेति परं विस्मयनीयम्।

**न मेऽसवः परायन्ति ब्रह्मन्ननशनादपि।**
**पिबतोऽच्युतपीयूषमन्यत्र कुपिताद् द्विजात्॥** (२, ८, २६)

अन्यत्र कुपिताद् द्विजादिति वाक्यखण्डेन किमाहायं मूकः। कुपिताद् द्विजाद् हेतोर्यन्मरणं ततोऽन्यत्र तद्विनेति विवक्षति। न चेदं शब्दोक्तं भवति। अनीशोऽयं मनोगतमभिप्रायं शब्दैरसन्देहं वक्तुम्।

**तथापि नाथमानस्य नाथ नाथय नाथितम्** (२, ९, २५)।

नाथय आशंसय देहीत्यर्थः। नाथमानस्येत्यधिकम्। ममेति वाच्यम्। प्रार्थयमानस्य मे प्रार्थितमित्युक्तिर्हास्या भवति। अनुप्रासप्रियो हास्यं न पश्यति।

**अविक्लवस्ते परिकर्मणि स्थितः** (२, ९, २९)।

इह परिकर्म परिचर्यामाह। परिकर्माङ्गसंस्कार इति तु कोषकाराः पठन्ति।

**गतिं जिजीषतः पादौ रुरुहातेऽभिकामिकाम्** (२, १०, २५)।

जिगीषतः। जेतुमिच्छत इति नार्थः। प्रसिद्ध इति नास्य रुचेर्विषयः। इह धात्वर्थो न विवक्षितः। सन्नर्थ इच्छैव विवक्षितः। तेनाभिकामिकामभीष्टां गतिमिच्छत इत्यर्थो लभ्यते। प्रायोगिकी विवक्षा प्रभवति न प्रायोक्त्रीति श्रीभोजवचः स्मरणीयम्।

**संनियच्छति कालेन घनानीकमिवानिलः** (२, १०, ४३)।

संनियच्छति संहरति। अपूर्वोऽर्थः।

**पौरवेन्द्रगृहं त्यक्त्वा प्रविवेशात्मसात्कृतम्** (विदुरस्य गृहम्, ३, १, २)।

आत्मसात्कृतमात्मीयमिति बुद्ध्या स्वीकृतम्। **विभाषा सातिः कार्त्स्न्ये** (५, ४, ५२), **अभिविधौ सम्पदा च** (५, ४, ५३), **तदधीनवचने** (५, ४, ५४), **देये त्रा च** (५, ४, ५५) इति सातिविधायिका चतुःसूत्री। नैकतमेनापि सूत्रेण कविकल्पितेऽर्थे सातेः प्राप्तिः। एषा ह्यस्य कवेः शैली यदयं शास्त्रं च लोकं चासूर्क्षित्वा नवं नवमर्थं कल्पयति। अन्यत्रापीह पुराणे **कृतागस्स्वात्मसात्कृत्वा शिक्षादण्डं न युञ्जते** (४, २६, २१), **(नः) कृत्वात्मसात् पाति युगे युगे** (६, ९, २६) इत्यत्र सातिर्निरुक्तार्थको दृष्ट इति बुद्धिपूर्वकोऽस्य प्रयोगो न तु घुणाक्षरमिव जातः।

**प्रत्यङ्गमुख्याङ्कितमन्दिराणि (३, १, २३)।**

अङ्गमङ्गं प्रति वर्तन्त इति प्रत्यङ्गाण्यायुधानि। प्रत्यङ्गाणां मुख्यं चक्रं सुदर्शनाख्यम्। तद्भसात्। प्रत्यङ्गमिति वीप्सायामव्ययीभावः। प्रत्यङ्ग-शब्दश्चेदायुधमाचक्षीत सर्वः सर्वं ब्रुवीत, उन्मत्तप्रलपितमिव न किमपि विज्ञायेत।

**यमावुत स्वित्तनयौ पृथायाः पार्थैर्वृतौ पक्ष्मभिरक्षिणीव (३, १, ३९)।**

यमौ यमजौ नकुलसहदेवौ माद्रीपुत्रौ भवतो न पृथापुत्रौ। पृथायाश्चेमौ भवत इत्ययं वक्ति। पार्थैर्युधिष्ठिरादिभिर्वृतावित्यनेनापि तौ पार्थौ न भवतः। तत्केन पृथायास्तावित्युक्तम्। पृथया कुन्त्या लालिताविति तत्र हेतुरनुक्तोपि वेद्यः। अनृजुवर्त्मा कविः। अन्यथाऽभिप्रैति, अन्यथा च वर्णयति। प्रतिपत्तिगौरवे च नन्दति।

**प्रतिवक्तुं न चोत्सेहे औत्कण्ठ्यात्स्मारितेश्वरः (३, २, १)।**

उत्कण्ठैव औत्कण्ठ्यम्। स्वार्थे ष्यञ्। प्रयोगस्तु विरलः।

**गीर्णेष्वजगरेण ह। किं नु नः कुशलं ब्रूयां गतश्रीषु गृहेष्वहम् (३, २, ७)।**

गीर्णेष्वित्यत्र नेरुपसर्गस्य त्यागोऽप्रसिद्धिहेतुः। गृधातोरर्थनिर्देशेपि निपूर्वता स्थिता—गॄ निगरण इति। तेन ज्ञायतेऽभिनिष्पन्नेषु प्रयोगेष्वव्यभिचारो नेरिति।

**आप्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरौ (३, २, १०)।**

उप्तोऽर्पितः। अपूर्वो वपेरर्थ इहाश्रितः। कामं प्रतिपूर्वस्य वपेर्निखनन-मर्थो दृष्टः।

**अर्वाक् सृतौ कौशलम् (३, २, १३)।**

सृतिः संसारः। लक्षणया संसारनिर्माणम्। न च सृतिस्तत्र प्रसिद्धा। सृतिस्तु मार्गमाह।

**उरुशङ्कितानाम् (३, २, १७)।**

अतिभीतानामित्याह। उरुरतिशये। नायं तत्र प्रसिध्यति। मा प्रसिधत्। उरुशब्दप्रियोऽयमिति यत्र तत्रार्थे बहुलं प्रयुङ्क्ते। यथेहैव—अन्नं चोरुरसं तेभ्यो **दत्त्वा भगवदर्पणम्** (३, ३, २८) इत्यत्र। उरुरसं नानारसम्। विष्णुनामन्युरुक्रमे उरुः पूर्वपदमिति तत्रास्य प्रेमा।

**किरीटकोटचेडितपादपीठः (३, २, २१)।**

ईडितः स्तुतः। इह किरीटसंघट्टनध्वनिरेव स्तुतित्वेन रूप्यत इत्यन्वितार्थप्रकाशिका। अहो अयोनिजोत्प्रेक्षा प्रेक्षावतां सचेतसां चेतोहरा। अहो अव्यक्तध्वनयोऽप्यस्य मुग्धस्य स्तुतयो भवन्ति।

**तत्तस्य कैङ्कर्यमलं भृतान्नो विग्लापयत्यङ्ग (३, २, २२)।**

भृता भृत्याः। प्रैष्यपर्यायेषु कोषकारा अपि नेदं पठन्ति। भृतकोऽध्यापक इत्यादिषु भृतो वैतनिक इत्यर्थे कुत्सायां कनि प्रसिध्यति प्रयोगः। तत्तस्य कैङ्कर्यमलंकृतान्न इति पाठान्तरम्। तत्र कर्तरि क्त इति स्वीकरणीयं भवति। तच्छास्त्रं विरुन्धे।

**निपात्य तुङ्गाद् रिपुयूथनाथम् (३, ३, १)।**

तुङ्गाद् राजमञ्चात्। अविदिततमोऽर्थः।

**श्रियः सवर्णेन बुभूषयैषाम् (३, ३, ३)।**

श्रियः सवर्णेन लक्ष्म्याः समानेन रूपेण साधनेन। वर्णो रूपम्। इति प्रथमः कल्पः। श्रियो लक्ष्मीरूपाया रुक्मिण्याः सवर्णेन भ्रात्रा रुक्मिणा। सवर्णः सजातीयः स बन्धुः। इति द्वितीयः कल्पः। समानं वर्णद्वयं वाचकं यस्य स श्रियः सवर्णो रुक्मी। इति तृतीयः। इत्थं वक्तुरभिप्रेतस्याप्रसिद्धेर्नाना विकल्पाः समुत्तिष्ठन्त्यसन्तोषात्। दूरान्वयपरिहारेच्छया सवर्णेन बुभूषयेत्येवं केचिद् योजयन्ति। तया सह बुभूषया विभूतिर्भवत्वेषामितीच्छयेत्येवं व्याख्यानयन्ति। ते विस्मरन्ति च्छन्दस्येव परेच्छायां सन्नभ्यनुज्ञायते न तु लोके।

**प्रियं ··· विधित्सुराच्छंद् द्युतरं यदर्थे (३, ३, ५)।**

आच्छंद् आच्छिनद् आहरत्। अत्रैवाङ्पूर्वस्य आच्छिद्यानयनेऽर्थे ऋच्छतेः प्रयोगो नान्यत्र।

**अपाश्रितार्भकाश्वत्थमकृशं त्यक्तपिप्पलम् (३, ४, ८)।**

त्यक्तपिप्पलं त्यक्तविषयसुखम्। अपाश्रिताश्वत्थः त्यक्तपिप्पलश्चेति विरोधपरिहारायोक्तार्थाश्रयणमवशं करोति विवरणकारः। जानाति खल्वसौ नात्रार्थे शिष्टप्रयोगः कश्चिदस्ति।

**विस्रम्भादभ्यधत्तेदं मुख्यं कृष्णपरिग्रहे (३, ४, २४)।**

परिग्रहो मित्रवर्ग इति कश्चित्। सेवकव्रात इत्यपरः। कोषकारास्तु पत्नीपरिजनादानमूलशापाः परिग्रहा इति पत्न्यादीन् परिग्रहार्थानाहुः।

**कालिन्द्याः कतिभिः सिद्ध अहोभिर्भरतर्षभः प्रापद्यत स्वःसरितम् (३,४,३६)।**

सिद्ध इति सप्तम्यन्तम्। भावे क्तः। कतिभिरहोभिरिति कर्तरि तृतीया। कतिषुचिदहःसु गतेष्वित्यर्थः। यद्यपि सेधतिर्गत्यर्थे पठितः, प्रयोगस्तु

विरलः । किं च । षिध गत्यामिति धातुरुदात्तोपदेशः । तस्य निष्ठायां सिधितमिति स्यात् ।

**यत्र मित्रासुतो मुनिः (३, ४, ३६) ।**

पाणिनीयास्तु मित्रयोरपत्यं मैत्रेयमिच्छन्ति । तद्रूपनिष्पत्तय आचार्यः केकयमित्रयुप्रलयानां यादेरियः (७, ३, २) इत्यनेन यादेरियादेशं शास्ति, दाण्डिनायन-हास्तिनायनेत्यादिना च युलोपं विधत्ते । यदि मित्राशब्दाद् ढकि मैत्रेय इति स्यान्नार्थः सूत्रद्वयेन । मन्ये पुराणकार ऐतिह्यं व्यस्मार्षीत् ।

**यः कर्णनाडीं पुरुषस्य यातः (३, ५, ११) ।**

कर्णनाडी कर्णविवरम् । नाडीति विवरे न प्रसिध्यति ।

**आत्मेच्छानुगतावात्मा नानामत्युपलक्षणः (३, ५, ३३) ।**

कश्चिदाह—आत्मेच्छा माया, तस्या अनुगतौ लये सति । उभयमप्यमूलम् । आत्मेच्छा माया भवतीत्यत्र किं मानम् । अनुगतिर्लय इति परं साहसम् । अनुगतिरनुवृत्तिर्व्याप्तिः सम्बन्ध इत्यादिः प्रसिद्धोऽर्थः । अपर आह—आत्मन एकाकित्वेनावस्थानेच्छेहाभिप्रेयते । अत्रापि किं मानम् । नानामत्युपलक्षण इति नानामतिभिर्नोपलक्ष्यत इत्यर्थ इति कश्चित् । नञः पूर्वपदस्य पूर्वरूपं पश्यन् । अपरो नञोऽभावं प्रतियन् सृष्टौ नानामतिभिरुपलक्ष्यत इत्यर्थमाचष्टे । नैकत्र निश्चय एषां पुराणकारेणान्धतमसे पातितानाम् ।

**यस्तून्मुखत्वाद् वर्णानां मुख्योऽभूत् (३, ६, २९) ।**

उन्मुख उत्पन्नो मुखात्, मुखोद्भवः । अन्यत्रोन्मुखोऽभिमुख उत्सुकः सज्जो भवति ।

**बाहुभ्योऽवर्तत क्षत्रं क्षत्रियस्तदनुव्रतः (३, ६, ३०) ।**

क्षत्रं क्षत्रियवृत्तिः । अन्यत्र क्षत्रं क्षत्रियजातिमाह—यत्र ब्रह्म च क्षत्रं च उभे भवत ओदनः । नाक्षत्रं ब्रह्म ऋध्नोति इत्यादिषु दर्शनात् ।

**अद्‌दध्यादुपाकर्तुं योगमायाबलोदयम् (३, ६, ३४) ।**

अद्‌दध्याद् उज्जृम्भेत उत्सहेत, प्रगल्भेत साहसमाचरेदित्यर्थं इह विवक्षितः । स इहैव लक्ष्यते नान्यत्र ।

**··· स्वां सत्कर्तुं गिरमन्याभिधाऽसतीम् (३, ६, ३५) ।**

सत्कर्तुं पवितुमवदातुं शुन्धितुमिति विवक्षति । सत्करोतिरत्वादरे रूढः । न हि सत्क्रिया पूतिर्भवति ।

**क्रीडायामुद्यमोऽर्भस्य (३, ७, ३)।**

अर्भक इति शिशौ प्रसिद्धः। अयं त्वप्रसिद्धेरापिपादयिषया ककारं लुम्पति। नैकत्र चेत्थमाचरति। यथा—अर्भभावादारभ्य (५, १, २६)। **चारयन्तोऽर्भलीलाभिर्विजह्रुस्तत्र तत्र ह** (१०, १२, ३) इत्यत्र।

**यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः।**
**प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः॥ (३, ७, १०)**

उपद्रष्टा स्वप्नद्रष्टा। अन्यत्र उपद्रष्टा साक्षी भवति।

**वद नः सर्गसंव्यूहं गार्भस्वेदद्विजोद्भिदाम् (३, ७, २७)।**

गार्भेत्यादि दुःश्लिष्टपदकं समस्तमेकं पदम्। गर्भाज्जाता गार्भा इति साधु शब्दतोऽर्थतश्च। शिष्टे पदत्रये द्विजं वर्जयित्वा स्वेदः स्वेदजे वर्तते उद्भिच्च उद्भिज्जे। नहीमे तत्र शक्ते।

**स्वपन्स्वयोदीरितया स्वशक्त्या (३, ८, १२)।**

स्वया स्वशक्त्येति पुनरुक्तं भवति। स दोषः। तत्परिजिहीर्षया कश्चिदाह—**स्वया स्वेन आत्मना प्रेरितयेति**। एवमात्मानमायासयन्स न पश्यति प्रेरितयेत्यर्थं उदीरितयेत्यनेनैवोक्तः। पारिशेष्यात्स्वशब्द आत्मवचन एवावतिष्ठते। आत्मवचनः स्वशब्दश्च नित्यं नपुंसकम्। स्वो ज्ञातावात्मनि स्वमित्यमरात्। तेन स्वेनेति वाच्यमवाच्यतायै।

**एतत्कुतो वाब्जमनन्यदप्सु (३, ८, १८)।**

अनन्यद् अन्यमनाश्रितम् इति विवक्षति। न च शब्दमर्यादयैषोऽर्थो लभ्यते।

**आत्मसर्गं विचिन्वतोऽभूत्सुमहांस्त्रिणेमिः (३, ८, २०)।**

त्रीणि चातुर्मास्यानि नेमयो यस्य स कालः। इहैव प्रयोगो नान्यत्र।

**प्रेक्षां क्षिपन्तम् (३, ८, २४)।**

शोभां हरन्तमित्याह। प्रेक्षाशब्दो नाट्यादिदर्शने बुद्धयादौ च दृष्टः। शोभायां तु न क्वचिदन्यत्र दृष्टः।

**स्वमानदेहेन (३, ८, २५)।**

स्वानुरूपप्रमाणेन देहेन। सु शोभनश्चासावमानो निरुपाख्योऽपरिच्छिन्नो वा, तेन देहेन। स्वमानशब्देन किमभिप्रागान्मूलकार इति कथमवसीयेत।

**प्राधानिकैर्दुरासदम्** (३, ८, ३१) ।

प्रधनं युद्धं प्रयोजनमस्य प्राधानिकम् । प्राधानिका योद्धारः । शब्दश्च अंशश्च सममप्रसिद्धौ । अन्यत्रेह तेषां प्राधानिकं शृणु (६, ५) इत्यत्र स्वार्थे प्रत्ययं कृत्वा प्रधानेऽर्थे प्रयोगः ।

**पश्यामि विश्वसृजमेकमविश्वम्** (३, ९, ३) ।

अविश्वं विश्वस्मादन्यदित्यभिप्रैति । सोयमभिप्रायः शब्देन न गम्यते ।

**शश्वत्स्वरूपमहसैव निपीतभेद-**
**मोहाय बोधधिषणाय नमः परस्मै** (३, ९, १४) ।

बोध एव धिषणमाश्रयो यस्य तस्मै । धिषणमाश्रय इति केन कदा क्व च श्रुतम् । धिषणो बृहस्पतिर्भवति धिषणेति स्त्रियां च बुद्धिरिति लोके । वेदे वागर्थे सूक्तार्थे चेति विशेषः । आश्रयार्थस्त्विहैव पुराणे । अन्यत्रापीह धिषणशब्दप्रयोगो दृश्यते—**ये पारमेष्ठ्यं धिषणमधितिष्ठन्न कञ्चन प्रत्युत्तिष्ठे-दिति ब्रूयुः** (६, ७, १३) । पारमेष्ठ्यं महाराज-सिंहासनम् । **तस्मादिदं जगद् ... ... स्वप्नाभमस्तधिषणम्** (१०, १४, २२) । धिषणा प्रतिभासो ज्ञानं वा ।

**उत्स्रोतस्तमःप्राया अन्तःस्पर्शा विशेषिणः** (३, १०, १९) ।

ऊर्ध्वं स्रोत आहारसंचारो येषां ते । किमुक्तं भवतीति सुधियामगम्यम् ।

**अर्वाक्स्रोतस्तु नवमः (सर्गः)** (३, १०, २५) ।

अर्वाग् अधोऽर्थे । अप्रसिद्धिदूषितोऽर्थः ।

**विद्याध्राः किन्नरादयः** (३, १०, २८) ।

विदिततरं विद्याधरशब्दं परिहृत्य विद्याध्रशब्दप्रयोगे वैचित्र्यमात्रं प्रयोजनम् । न हि यत् किंचिद् व्याकरणसाध्यं तत्प्रयोगार्हमपि । व्यवहारोऽनुसार्यः ।

**सुनाभसन्दीपिततीव्रमन्युः** (३, १३, ३१) ।

सुनाभं चक्रम् । चक्रार्थे त्विहैव । सुनाभ्यर्थे विशेषणत्वेन प्रयोग-स्त्वन्यत्रापि सुलभः ।

**दितिर्दाक्षायणी क्षत्तर्मारीचं कश्यपं पतिम् ।**
**अपत्यकामा चकमे सन्ध्यायां हृच्छयार्दिता ॥** (३, १४, ७)

चकमे रतिं संभोगं प्रार्थयामासेत्यर्थः । तत्र च कामयतिरप्रसिद्धः ।

**अत्रापि काममेतं ते प्रजात्यै करवाण्यलम्** (३, १४, २१)।

अलं पूर्णं करवाणीत्याह। अलं भूषणपर्याप्तिशक्तिवारणवाचकम् इत्यमरः। तत्र पूर्णार्थस्तु न संगृहीतः। अन्यत्र क्व संगृहीत इति मृग्यम्।

**अभूतशत्रुर्जगतः शोकहर्ता** (३, १४, ४८)।

अजातशत्रुरित्यनुक्त्वाऽप्रसिद्धमभूतशत्रुरिति व्यपदेशमूरीकुरुते। तत्कस्मात्। तच्छीलो हि सः।

**प्रत्याचष्टात्मभूर्देवान्प्रीणन् रुचिरया गिरा** (३, १५, ११)।

प्रत्यवदित्यर्थः। अत्रार्थे नेदं प्रसिध्यति। निराकरणे तु प्रसिध्यति।

**नाराधनं भगवतो वितरन्त्यमुष्य** (३, १५, २४)।

वितरन्ति कुर्वन्ति। विपूर्वस्तरतिस्तु दाने प्रसिध्यति। अयं त्वन्यत्राप्यत्रार्थे प्रयुज्यते तद्यथा—अहो **ममामी वितरन्त्यनुग्रहम्** (४, २१, ३६), **वितरिष्ये सुहृत्प्रियम्** (१३, ४१, १७) इत्यत्र।

**वक्तुं भ्रुवा कुटिलया स्फुटनिर्गमाभ्याम्** (३, १५, २८)।

स्फुटनिर्गमौ स्फुटनासापुटे। निर्गमो नासिकारन्ध्रे क्वान्यत्र पठितः।

**आत्मवत्कुहकयोः** (३, १५, ३२)।

कुहकयोः कुटिलयोः कुटिलचित्तयोर्वा।

**कामानुजेन सहसा त उपप्लुताक्षाः** (३, १५, ३१)।

कामानुजः क्रोधः। कामात्क्रोधोऽभिजायत इत्युक्तेः कामस्य क्रोधभ्रातृत्वं क्रोधानुजत्वं विरुध्यते। विरोध इत्यतिरिक्तो दोषः। कामानुज इति क्रोधमाहेत्यभ्यूहस्तावद् दुर्लभः।

**व्युत्पादितं ह्युदरभेदि भयं यतोऽस्य** (३, १५, ३३)।

उदरभेदि भयं देहभेदप्रयुक्तं भयम्। उदरं शरीरमित्यपूर्वोऽर्थः। उदरभेदो यस्य यस्मिन्वाऽस्ति तद् उदरभेदि। व्रीह्यादित्वादिनिः। उदरं भिनत्तीति वा उदरभेदि। ताच्छील्ये णिनिः। उभयथापि विवक्षितार्थप्रतीतेरसम्भवः।

**कर्तुं प्रकृष्टमिह धीमहि मन्दधीभ्याम् (वाम्)** (३, १५, ३४)।

इह=अस्मिन्नपराधे। प्रकृष्टं भद्रम्। धीमहि चिन्तयामः। प्रतिपदमस्फुटता स्थिता।

**पापीयसस्त्रय इमे रिपवोऽस्य यत्र (३, १५, ३४) ।**

इमे त्रयः=कामक्रोधलोभाः । अस्य=जीवस्य । मूको यथाङ्गुल्यादिनाऽर्थं निर्दिदिक्षति तथाऽयं कविर्नामान्यनुपादाय सर्वनामानि केवलानि प्रयुङ्क्तेऽर्थं निह्नोतुकामः ।

**मा वोऽनुतापकलया भगवत्स्मृतिघ्नः, मोहो भवेत्** ··· ··· (३, १५, ३६)।

अनुतापः कृपा । अनुतापः पश्चात्तापो भवति न कृपा । अयं त्वन्यत्राप्यत्रार्थे प्रयङ्क्ते—**यत्तेऽनुतापविदितैर्दृढभक्तियोगैः** ··· (३, १५, ४७) । इहापि कृपार्थोऽनुतापः । अत्र किं मानमिति तूष्णीकामासते टीकाकृतः ।

**प्रतिहृतौपयिकम्** (३, १५, ३८) ।

प्रतिहृतमर्पितम् । औपयिकं योग्यमुचितं छत्रचामरादि यस्मै तम् । प्रतिपूर्वो हरतिर्नार्पणे प्रसिध्यति । न ह्युपस्य स्थाने प्रतिः शक्यः प्रयोक्तुम् । प्रतिनियतविषयाः शब्दाः ।

**नेमुर्निरीक्ष्य नवितृप्तदृशो मुदा कैः (३, १५, ४२) ।**

कैः शिरोभिः । मारुते वेधसि व्रध्ने पुंसि कः कं शिरोऽम्बुनोः इति नानार्थवर्गेऽमरः । कं वारिणि च मूर्धनि इति चाव्ययवर्गे सः । वेधोऽर्थं विवर्ज्य शिरोम्ब्वाद्यर्थेषु स्वतन्त्रप्रकृतित्वेन वाक्येऽस्य प्रयोगो दुर्लभः । सोऽयमिह कैरिति प्रयोगोऽप्रसिद्धिदोषानास्कन्नो नेत्यवश्यमूरीकरणीयम् । **अन्यत्रापि विष्णुर्भुजमुखमुरुकम ईश्वरः कम्** (१०, ६, २२) । साहित्ये समासावयवः पूर्वपदमुत्तरपदं वा सन्नेव कशब्दः प्रयोगमवतरन्दृष्टः कमलकपाटकन्धरादिषु, न केवलः । अन्यत्र श्लेषात् ।

**समगुणन्युतमष्टभोगैः** (३, १५, ४५) ।

अष्ट भोगा अणिमादयोऽष्टसिद्धाः । अप्रसिद्धिसिद्ध्यर्थमेव सिद्धेः स्थाने भोगप्रयोगः ।

**पित्राऽनुर्वर्णितरहाः** (अहम्, ३, १५, ४६) ।

रह इति सकारान्तमव्ययमनव्ययं च । एकान्ते विविक्ते वर्तते न क्वचिद्रहस्ये ।

**अत्रैव नो नयनमूलमनन्त राद्धः (३, १५, ४६) ।**

राद्धो गतः । राधेः संसिद्धिरर्थः प्रसिध्यति न गत्यर्थः ।

**कीर्तन्यतीर्थयशसः** (भगवतः ३, १५, ४८) ।

कीर्तन्य: कीर्तनीय:। ईकारलोपेनाप्रसिद्धिमापादयति। कीर्तन्यमिति भ्रष्टं रूपमिहैव स्थितमिति परा परोक्षप्रियताऽस्य। ऋग्वेदे (१, १०३, ४) कीर्तेन्यं मघवा नाम बिभ्रद् इति श्रूयते तस्येदं वैकृतं स्यात्। छन्दोऽनुकार्येष कवि:।

**सद्यः पुनाति सह चन्द्रललामलोकान्** (३, १६, ९)।

चन्द्रललाम: चन्द्रशेखरो भव:।

**गृध्रा रुषा मम कुषन्त्यधिदण्डनेतु:** (३, १६, १०)।

अधिकृतो दण्डनेताऽधिदण्डनेता। अप्रसिद्धः शब्दोऽप्रसिद्धश्चार्थ:। गृध्रा गृध्राकारा दूता इति विवक्षति। **ये मे तान् द्विजवरान् दुहतीर्मदीया:** (३, १६, १०) दुहतीर्दोग्ध्रीर्गा:।

**ये ब्राह्मणान् मयि धिया क्षिपतोऽर्चयन्तः** (३, १६, ११)।

एते ब्राह्मणा मदात्मान इति धियेत्यर्थं विवक्षति बहुमूक: कवि:।

**यत्कल्पतामचिरतो भृतयोर्विवास:** (३, १६, १२)।

कल्पतां समाप्नोत्वित्यर्थ:। क्लृपिस्तु सम्पद्यर्थे प्रतीत:। तेन सम्पन्नो भवत्विति प्रीति: स्यात्। सा च नेष्टा।

**त्रिभि:स्वै: पद्भिश्चराचरमिदं** ···

**नूनं भृतं** ··· ··· ··· ··· ··· ··· (३, १६, २२)।

त्रीणि पदानि तपो दानं दया च। तपोदानदयात्मकानीत्यूहन्ते कुशला विवरीतार:। कुशलतराश्चान्यथाप्यर्हन्त्यभ्यूहितुम्। छन्दोगानामुपनिषदि दद्द इत्यनेन यथा।

**तत्रास्मदीयविमृशेन कियानिहार्थ:** (३, १६, ३७)।

व्यवहारावतीर्णं प्रसिध्यन्तं विमर्शशब्दं विहाय व्याकरणैकशरणं विमृशशब्दं प्रयुङ्क्ते परोक्षप्रिय:।

**शृगालोलूकटङ्कारै:** (३, १७, ९)।

टङ्कारो धनुर्घोषे प्रसिद्धः। शृगालादीनामाक्रोशं वाशितमप्याहेत्ययमेव वेद।

**व्यमुञ्चन् विविधा वाचो ग्रामसिंहास्ततस्तत:** (३, १७, १०)।

ग्रामसिंहा: श्वान:। मृगा इत्यन्ये। इह पुराणेऽन्यत्रापि प्रयोग:— **युष्मद्विधान् मृगये ग्रामसिंहान्** (३, १८, १०)। **इहैवात्रार्थे प्रयोग इत्यस्याप्रसिद्धि: स्थिता।**

**मौर्व्याऽभिजघ्ने गदया विभावरीम्** (३, १७, २६)। मुरुर्नाम लोह-विशेषस्तस्य विकारो मौर्वी। अर्थोऽप्रसिद्ध इत्यभ्युपगमः। रूपं च न सिध्यतीत्यत्यभ्युपगमनीयम्। मुरुशब्दादणि पूर्वस्य भसंज्ञायाम् ओर्गुण इति गुणे मौरवीति स्यात्।

**स गामुदस्तात्सलिलस्य गोचरे विन्यस्य** ··· ··· ··· (३, १८, ८)।

उच्छब्दादस्तातिं करोति। बाल इव पुत्तलिका नवनवान् स्वस्याभिमताँल्लोकेऽप्रचरिताञ्शब्दान् कल्पयत्यभीः। गोचरे व्यवहारयोग्ये प्रदेशे। शब्दः प्रसिद्धोऽर्थस्त्वप्रसिद्धः।

**त्वं पद्रथानां किल यूथपाधिपः** (३, १८, १२)।

पद्रथाः पादचारिणः पदाजय इत्ययमर्थं इहैव लभ्यते।

**घटस्व नोऽस्वस्तय आश्वनूहः** (३, १८, १२)।

अनूहो निःशङ्को विस्रब्धः। ऊहो वितर्को भवति नाशङ्का।

**तावज्जह्यघमच्युत** (३, १८, २५)।

अघवत्यघशब्द इहैव। अर्श आदित्वं प्रयोगानुसारितया कल्प्यम्, न तु स्वैरितया।

**निस्तर दुस्तरमसुरम्** (३, १८, २७)।

निस्तर जहीत्यर्थः। सोऽयमन्यत्र दुर्लभः।

**स तदा लब्धतीर्थोऽपि न बबाधे निरायुधम्** (३, १९, ४)।

लब्धतीर्थः=लब्धावसरः। बह्वर्थोऽपि तीर्थशब्दो न क्वचिदवसरमाह।

**द्यौर्नष्टभगणाऽभ्रौघैः सविद्युत्स्तनयित्नुभिः** (३, १९, १९)।

स्तनयित्नुः स्तनितम्। अमरस्तु स्तनयित्नुं मेघपर्यायेषु पठति। कर्तरि औणादिकः प्रत्ययः।

**रूपद्रविणपण्येन दुर्भगान्नो विबाधसे** (३, २०, ३४)।

दुर्भगा दरिद्राः। स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम् इत्यादिषु दुर्भगं विरूपमाह।

**घ्नन्त्या मुहुः करतलेन पतत्पतङ्गम्** (३, २०, ३६)।

पतङ्गः कन्दुकः। अत्रार्थ इहैव प्रयोगः। अप्रसिद्धिकामस्य सदृशमेतत्।

**स किन्नरान् किम्पुरुषान्प्रत्यात्म्येनासृजत्प्रभुः (३, २०, ४५)।**

प्रत्यात्म्यं प्रतिबिम्बम्। शब्दश्चार्थश्चेत्युभयमप्रसिद्धम्।

**देहेन वै भोगवता शयानो बहुचिन्तया (३, २०, ४७)।**

भोग आभोगो विस्तारः। किमयं भोगाभोगयोर्विशेषं न वेद यद् उभे संकिरति। बाढं वेद। चापलेन प्रयुङ्क्त इत्थमाचरति।

**सांसिद्ध्यमक्ष्णोस्तव (३, २१, १३)।**

प्रियतद्धितः कविः। नार्थः स्वार्थे ष्यञा। अप्रसिद्धिश्च।

**विदित्वा तव चैत्यं मे (३, २१, २३)।**

चैत्यं चित्तगमभिप्रायम्। चित्ते भवं चित्त्यम्, ततः स्वार्थेऽण्। चित्तं दिगादिषु न पठितम्। तेन दुर्लभो यत्। दुर्लभतरश्चाण्। स्तूपे पाषाणदिबन्धे सुगतमन्दिरे प्रसिध्यति चैत्यम्।

**सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति (३, २१, २८)।**

नृपवधू राजकन्या। वधूशब्दो नवोढायां स्नुषायां च प्रसिद्धः। कन्यार्थस्त्वनेनोपज्ञातः। अनु भागवतकारमाभिधानिकाः।

**मनुः स्यन्दनमास्थाय शातकौम्भपरिच्छदम् (३, २१, ३६)।**

परिच्छदोऽलङ्कारः। अन्यत्र तु च्छत्रचामरादि राज्ञामलङ्कारोपकरणमाह।

**सर्वात्मनानुरूपां ते गृहमेधिषु कर्मसु (३, २२, ११)।**

गृहमेधिनस्तु गृहस्था मताः। गृहमेधिनामिति षष्ठ्यन्तेन सम्बन्धो वाच्यः।

**य उद्यतमनादृत्य कीनाशमभियाचते (३, २२, १३)।**

कीनाशः कृपणः। आभिधानिकास्तु कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु (इत्याहुः)।

**वत्सां मनोरुच्चपदः स्वसारम् (३, २२, १८)।**

उत्तानपादस्येति वक्तव्ये स्वैरं कल्पितां शब्दाकृतिं प्रयुङ्क्ते हास्यश्च भवति लोकस्य।

**तथेति कृत्यमुपशिक्ष यथोपदेशम् (३, २३, ११)।**

उपशिक्ष सम्पादय। अपूर्व उपसर्गयोगः, अपूर्वश्चार्थः।

**स्रग्भिश्चित्रमाल्याभिः (३, २३, १५)।**

मालानिर्माणयोग्यानि पुष्पाणि माल्यानि। लोके मालैव माल्यमित्यभेदोऽभ्युपेयते, न तु क्वचिन्मालागुम्फनयोग्यानि कुसुमान्याह।

**दिव्यान् (विभवान्) नरैर्दुरधिगमान् नृपविक्रियाभिः (२, २३, ८)।**

विक्रियाऽभिमानविशेषः। नृपा वयं भोगयोग्या इत्येवंरूपोऽभिमानः।

**बभ्राज उत्कचकुमुद्गणवान् (३, २३, ३८)।**

उत्कचा विकचाः। उत्कच इति नूतनं निर्माणमनुरूपं शिल्पिनो वैयाकरणस्य।

**नोधा विधाय रूपं स्वम् (३, २३, ४७)।**

नवधेति विवक्षति। नवार्थे नोशब्दो हिन्द्या गृहीतः स्यात्।

**निरुध्याश्रुकलां शनैः (३, २३, ५०)।**

अश्रुकलाऽश्रुधारा। कलिवली कामधेनू इति मत्वा कलाशब्दं यत्र तत्रार्थे प्रयुङ्क्ते प्रसिद्धिं च नाद्रियते।

**ज्ञानविज्ञानयोगेन कर्मणामुद्धरन् जटाः (३, २४, १७)।**

जटा मूलानि। तत्रास्य प्रसिद्धिर्न।

**योऽवग्रहोऽहं ममेतीत्येतस्मिन् योजितस्त्वया (३, २५, १०)।**

अवग्रहो दुराग्रहः। अवग्रहः प्रतिबन्धो भवति वर्षप्रतिबन्धो वा। दुराग्रह इति कवेरुपज्ञा।

**नो मेऽनिमिषो लेढि हेतिः (३, २५, ३८)।**

अनिमिषः कालः। क्रान्तदर्शनोऽयमेव वेदाऽनिमिषः कालो भवतीति।

**क्षेमाय पादमूलं मे प्रविशन्त्यकुतोभयम् (३, २५, ४३)।**

क्षेमो मोक्षः। दूरे खलु क्षेमान्मोक्षः। क्षेम इति स्वस्तिमत्ता भवति रक्षा वा।

**अहङ्कारविमूढस्य कर्तुः प्रकृतिमीयुषः (३, २६, १६)।**

कर्तुर्जीवस्य। प्रकृतिरविद्या। जीवशब्दं प्रतीततरं कुतो न प्रयुङ्क्ते।

**करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक् (३, २६, ४५)**

करम्भो मिश्रगन्धः। अत्रार्थं इहैव प्रयोगः। कोषस्तु करम्भो दधिसक्तव इति।

**ग्राम्यधर्मनिवृत्तिश्च मोक्षधर्मरतिस्तथा (३, २८, ३)।**

ग्राम्यधर्मस्त्रैवर्णिकधर्म इति विवक्षितोऽर्थः। ग्राम्यधर्मो मैथुनम् इति च प्रसिध्यति।

**यत्रात्मयोनिर्धिषणाखिललोकपद्मम् (३, २८, २५)।**

धिषणमाश्रयः। धिषणः सुरगुरुरिति तु रूढिः।

**यथोल्मुकाद् विस्फुलिङ्गाद् धूमाद्वापि स्वसम्भवात्।**
**अप्यात्मत्वेनाभिमताद्यथाग्निः पृथगुल्मुकात्॥ (३, २८, ४०)**

अलातमुल्मुकम् इत्यमरः। अयमर्धदग्धकाष्ठवचनः। अत्रोल्मुकस्य दुरुक्त्या क्षुभिताष्टीकाकृत उल्मुकं द्व्यर्थकं पश्यन्ति। प्रथमं ज्वलत्काष्ठमाह, द्वितीयं ज्वालारहितं ज्वलदङ्गारम्। तत्र किं मानम्। वस्तुतो मूले पौनरुक्त्यं दुःसमाधानम्।

**यथा वातरथो घ्राणमावृङ्क्ते गन्ध आशयात् (३, २९, २०)।**

वातो रथः प्रापकोऽस्य वातरथो गन्धः। अत्रार्थे रथशब्दो न प्रसिध्यति। शरीरं तु रथमिति बहुलं रूपयन्त्यृषयः। आङ्पूर्वो वृजिनान्तिरेण णिचमाकर्षण-माचष्टे।

**आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् (३, २९, २६)।**

अन्तरा मध्ये उदरं शरीरं करोति शरीरप्रयुक्तं भेदं पश्यतीत्यर्थ इति कश्चित्। तत्रान्तरायोगे षष्ठी दुष्यतीति न पश्यति। अपर आह—अन्तराऽन्तरं भेदम्। उत् अपि। अरमल्पम्। अल्पमपि भेदं करोतीत्यर्थः। इह तु कल्पना-जालोत्थं सर्वमुद्वेगकरम्। उतशब्दोऽप्यर्थो भवति नोत्। अरमपि क्वचिदल्पं नाह। अरमङ्गे रथाङ्गस्य शीघ्रशीघ्रगयोरपीति शाश्वतः।

**जनं जनेन जनयन्मारयन्मृत्युनान्तकम् (३, २९, ४५)।**

जनेन पित्रा जनं पुत्रादिं जनयन् मृत्युना द्वाराऽन्तकं चौरव्याघ्रादिकं मारयन्। जनादिशब्दाः सर्वे समं परोक्षार्थकाः प्रहेलिकोचिताः।

**नाद्रियन्ते यथापूर्वं कीनाशा इव गोजरम् (३, ३०, १३)।**

गोजरो जरद्गवः, जरठो वृषः, उक्षतरः। गोजर इत्यस्येहैव प्रयोग इत्यप्रसिद्धिर्नातिशङ्कनीया।

**नाथमान ऋषिर्भीतः सप्तवध्रिः कृताञ्जलिः (३, ३१, ११)।**

सप्तवध्रिः सप्तबन्धनः। इहैव प्रयोगः। कामं बाह्वृच्य एतन्नामा आत्रेय ऋषिः।

**प्रजामनु प्रजायन्ते (३, ३२, २०)।**

प्रजामनु=पुत्रादिषु। शब्दमर्यादया दुर्लभोऽर्थः।

**तुष्टाव तत्त्वविषयाङ्कितसिद्धिभूमिम् (कपिलम्)** (३, ३३, १)

तत्त्वानि विषयास्तैरङ्किता सिद्धिः साङ्ख्यज्ञानं तस्य भूमिं क्षेत्रं प्रवर्तकमिति टीका। सर्वमिदं मोहविजृम्भणं मूलकारमोहस्योपबृंहणम्। असमर्थपदोच्चयो वाक्याभासोऽयमित्येव शक्यं व्यपदेष्टुम्।

**नष्टस्मृतिः पुनरयं प्रवृणीत लोकं**
**युक्त्या कया मदनुग्रहमन्तरेण॥** (३, ३१, १५)

लोकं प्रवृणीत स्वरूपं जानीयात् इति श्रीधरादयः। इत्यर्थस्य कथमुपलब्धिरिति त एव प्रष्टव्याः।

**यत्प्रह्वणाद् यत्स्मरणादपि क्वचित्** (३, ३३, ६)।

प्रह्वणं प्रणतिः। कथंचिद्रूपसिद्धावपि प्रयोगोऽस्यास्मात्पुराणाद्बहिर्न लक्ष्यते। इमानि चेह प्रदेशान्तराण्यस्य प्रयोगस्य—वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु (१०, ४७, ६६)। अकृत प्रह्वणाञ्जलिम् (१०, ७८, २३)। न तस्मै प्रह्वणं स्तोत्रं चक्रे (१०, ८९, ३)।

**असुरेन्द्रावरोधेषु पुरुषाः सह पुरुषीभिर्धारयन्ति (हाटकाख्यं सुवर्णम्)**।

जातिलक्षणे ङीषि सिद्धोपि पुरुषी इति प्रयोगो विरलतमः।

**गिरः श्रुताथाः पुष्पिण्याः** (४, २, २५)।

श्रुता गिर इत्यनेन श्रुतिं विवक्षति। न हि श्रुता गिर इत्युक्ते सुनिपुणोप्यूहवान्कश्चिच्छ्रुतिं प्रतिपद्यते।

**अनाहुता अप्यभियन्ति सौहृदं भर्तुर्गुरोर्देहकृतश्च केतनम्** (४, ३, १३)।

सौहृदं केतनम्। सुहृद इदं सौहृदम्। शैषिकेऽणि रूपम्। प्रयोगस्त्वत्रार्थ इहैव।

**गीतायनैर्दुन्दुभिशङ्खवेणुभिः** (४, ४, ५)।

गीतायनानि गानसाधनानि। इहैव प्रयोगः। अहो बलवती नूतनशब्दनिर्मित्सा।

**प्रसूतिमिश्राः स्त्रिय उद्विग्नचित्ताः** (४, ५, ९)।

प्रसूतिर्दक्षपत्नी। तन्मिश्रास्तत्प्रधानाः स्त्रियः। अत्रार्थे मिश्रशब्दोऽस्यैव कवेर्विदितः। संहितार्थे तु दृश्यते यथा-मिश्रं चानुपसर्गमसन्धौ (६,२,१५४) सूत्रे।

**करालदंष्ट्राभिरुदस्तभागणम्** (४, ५, ११)।

भा-गणो नक्षत्रसमूहः। नक्षत्रे भशब्दः प्रसिध्यति न तु भाः।

**त्वमेव धर्मार्थदुघाऽभिपत्तये (४, ६, ४४)।**

धर्मार्थयोर्दोग्ध्री वेदत्रयी, तस्या अभिपत्ती रक्षा। सर्वमप्रसिद्धयाक्रान्तम्।

**विश्वं सृजसि पास्यत्सि क्रीडन्नूर्णपटो यथा (४, ६, ४३)।**

ऊर्णनाभिरित्यनुक्त्वोर्णपट इत्याहाऽप्रसिद्धेरैकान्तिकतायै।

**तदा वृषभध्वजद्वेषकलिलात्मा प्रजापतिः (४, ७, १०)।**

कलिलः कलुषितो मलिनः। कोषस्तु कलिलं गहनं समे इत्याह। **यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति इत्यत्र गीतासु** (२, ५२), कलिलं गभीरं शिथिलं कर्दममाह।

**गृहीतार्हणसादनोत्तमम् (४, ७, २५)।**

सादनानि पात्राणि। छन्दसि प्रसिध्यति न लोके।

**यदर्थमधिदैवमदो व्यवस्थाः (४, ७, २७)।**

यदर्थमधिदैवमित्यादि पदकदम्बकमत्यन्तं परोक्षार्थम्। कश्चिदाह—अद इति पृथक् पदम्। कर्मणि द्वितीयान्तम्। व्यवस्था इति व्यवपूर्वस्य तिष्ठतेर्लुङि मध्यमैकवचने रूपम्। अडभावः परस्मैपदं चार्षम्। अन्तर्णीतण्यर्थकश्च प्रयोगः। अपर आह—अदो व्यवस्था इत्येकं पदम्। आस्थितवानसीत्यध्याहार्यम्। अधिदैवम्—अस्मिन्कर्मणीयमेव देवतेति (व्यवस्था)। त्रिवृद् वेदत्रयी। तया प्रतिपादितोऽध्वर आख्या यस्य तदिदं वस्तु। प्रतिपदमस्फुटता स्थिता।

**... ... ... ... विलज्जते यां**

**भार्येति वा वोढुमिडस्पतिर्माम् (४, ८, १८)।**

इडस्पतिर्भूपतिः। लोकेऽत्रार्थेऽप्रसिद्धिः। **ऋग्वेदे** (६, ५८, ४) इडस्पतिरिति पूष्णो नामधेयम्।

**आतिष्ठ तत्तात विमत्सरस्त्व-**

**मुक्तं समात्रापि यदव्यलीकम् (४, ८, १९)।**

विमात्रर्थे समातृशब्दः स्वकपोलकल्पितोऽपशब्दः। समानस्य सभावो दुर्लभः। समानार्थकेन सहशब्देन समास इति चेन्नेष्टसिद्धिः। बहुव्रीहावेव वोपसर्जनस्येति सहशब्दस्य सभावः। न चायं बहुव्रीहिः। **भूयोपि यत्समातुरसह्यचः** (४, ८, २६)। इत्यत्रापभ्रंशमिमं प्रयुङ्क्ते। नूतनशब्दनिर्मितसा हि रुजाऽस्य कवेरनुपचार्या।

नान्यं ततः पद्मपलाशलोचनाद्
दुःखच्छिदं ते मृगयामि कञ्चन (४, ८, २३)।

जानामीत्यर्थः। तत्र मृगयतिरसमर्थोऽप्रसिद्धश्च।

वितुदन्नटते वीणां हितार्थं जगतोऽर्कवत् (४, ८, ३८)।

वितुदन्वादयन्। वीणाविषये वितुदः प्रयोगो न केवलमप्रसिद्ध उद्वेजकश्च। अन्यत्रापि प्रयुङ्क्ते—आतोद्यं वितुदञ्श्लोकान्सत्रेऽगायत्प्रचेतसाम् (४, १२, ४०) इति। वितुर्दिविलुञ्चने व्यधने विलेखने विकर्षणे वा दृष्टः।

आभृतात्मा मुनिः शान्तः (४, ८, ५६)।

आभृतात्मा संयतचित्तः। भृञ् धारणपोषणयोरिति धात्वर्थनिर्देशे धारणं संयमनं नाह। आङ्पूर्वस्य भृञः प्रयोगोप्याभरणे प्रसिध्यति नेतरत्र।

अर्हिताईणको राज्ञा (४, ८, ६३)।

अर्हितमर्पितमर्हणं पूजा यस्मै सः। अत्रार्थे प्रसिद्धयेऽर्पितमिति कस्मान्नोक्तम्।

प्रावृङ्क्ते यद्यशो जगत् (४, ८, ६८)।

प्रावृङ्क्ते प्रावरीष्यति आच्छादयिष्यति व्याप्स्यति। आङ्पूर्वस्य वृजिर्वर्जने इत्यस्य प्रयोग एव तावद् दुर्लभः, प्रावरणाद्यर्थस्तु दुर्लभतरः।

त्वद्दत्तया वयुनयेदमचष्ट विश्वं
सुप्तप्रबुद्ध इव नाथ भवत्प्रपन्नः (४, ९, ८)।

अचष्टेत्यस्य कर्ता नोक्तः। स च ब्रह्मेति टीकाकृतस्तर्कयन्ते। वयुना (वयुनम् इत्यपि) इतिच्छन्दो मात्रगोचरम्। प्रज्ञानमर्थः।

यत्स्पर्शजं निरयेपि नृणाम् (४, ९, ९)।

स्पर्शजं विषयसंसर्गजं सुखम्। स्पर्शशब्दः केवलो विषयं नाह। मात्रास्पर्श इत्यादिषु तु बाढमाह।

तिर्यङ् नगद्विजसरीसृपदेववैत्यमर्त्यादिभिः
परिचितं सदसद्विशेषम् (रूपम्) (४, ९, १३)।

परिचितं व्याप्तम्। अत्रार्थेऽस्य प्रसिद्धिर्न।

उपदेवमहाभटाः (४, १०, ७)।

उपदेवो यक्षः। अभिधानेष्वप्ययं न पठ्यते किमुत साहित्ये।

**यदात्मानं पराग्गृह्य (४, ११, १०)।**

पराग् बहिर्भूतं देहम् आत्मानं गृह्य गृहीत्वेत्यर्थः।

**विसर्गादानयोस्तात पुंसो दैवं हि कारणम् (४, ११, २४)।**

विसर्गादाने जन्ममरणे। उभयमपि पदं सममप्रसिद्धार्थकम्।

**अन्वस्मरद् (ध्रुवः) अगं हित्वा दीनां (मातरम्)**
**यास्ये त्रिविष्टपम् (४, १२, ३२)।**

अगं दुर्गमं त्रिविष्टपं यास्यामीत्याह। शैलवृक्षौ नगावगौ इति कोषः। दुर्गमेर्थे त्विहैव प्रयोगः। क्वचिद्गन्तुमसमर्थ इत्यर्थोपि—**अगो वृषलः शीतेन।**

**स्वर्ग्यं ध्रौव्यं सौमनस्यम् (ध्रुवचरितम्, ४, १२, ४५)।**

ध्रौव्यं ध्रुवपदप्रापकम्। सौमनस्यं मनः शुद्धिकरम्। लोके तूभयोर्ध्रुव-सुमनसो भावे ष्यञ् प्रसिध्यति।

**उन्नद्धोऽष्टविभूतिभिः (४, १४, ४)।**

उन्नद्धो गर्वितः। अन्यत्रोर्ध्वं नद्धो बद्ध इति भवति। यथा उन्नद्धो जटाजूटः। अयं त्वर्थान्तरेप्याह—**राज्यश्रियोन्नद्धमदस्य** (१०, ५१ ४८)। उन्नद्धो वृद्धः। **राज्यैश्वर्यमदोन्नद्धः** (१०, ७३, १०)। उन्नद्ध उच्छृङ्खलः।

**को वैनं परिचक्षीत वेनमेकमृतेऽशुभम् (४, १४, ३३)।**

परिचक्षीत निन्देत्। परिपूर्वश्चक्षिङ् निन्दायां न प्रसिध्यति।

**तत्रासीद् बाहुको नरः (४, १४, ४३)।**

बाहुको वामनः। इहैव प्रयोगः। बाहुभ्यां तरतीति बाहुक इति (४, ४, ७) सूत्रे वृत्तिः।

**तितिक्षत्यक्रमं वैन्य उपर्याक्रमतामपि (४, १६, ७)।**

अक्रमम् अतिक्रमम्। अत्यर्थे नञ् न क्वचिदन्यत्र दृष्टः। उपर्या-क्रमतामिति वर्तमानेन हिन्दी-व्यवहारेण संवदति।

**पृथुः प्रचेता इव संवृतात्मा (४, १६, १०)।**

संवृतात्मा संयतचित्तः। अन्यद्धि संवरणमन्यच्च संयमनम्। अयं तूभे संकिरतीति चित्रम्।

**पर्यस्यते (भुवो मण्डलम्) दक्षिणतो यथार्कः (४, १६, २०)।**

परिक्रमिष्यतीति विवक्षति। परिपूर्वोऽसु क्षेपण इति धातुः परितः क्षेपणे परिवेष्टने वा व्यवहृतो दृश्यते।

**दीर्घं दध्यौ कुरुश्रेष्ठ निमित्तं सोऽन्वपद्यत (४, १७, १२)।**

अन्वपद्यत अजानात् । प्रतिपदिस्तत्र समर्थो नानुपदिः ।

**अपावर्तावपि भद्रं ते उपावर्तेत मे विभो (४, १८, ११)।**

उपावर्तेत सर्वत्र वर्तेत । उपावृतिस्तु समीपगमनं ब्रूयान्नार्थान्तरम् ।

**सर्वकामदुघां पृथिवीं दुदुहुः पृथुभाविताम् (४, १८, २६)।**

भावितां वशेकृताम् । अपूर्वोऽर्थः ।

**आमुक्तमिव पाखण्डं योऽधर्मे धर्मविभ्रमः (४, १९, १२)।**

पाखण्डं पाखण्डवेषम् । आमुक्तः कवचीत्येकीयं मतम् । प्रायेणामुक्तः पिनद्धो भवति ।

**ऐन्द्रीं च मायामुपधर्ममातरम् (४, १९, ३८)।**

उपधर्मोऽधर्मः । उपमितो धर्मेणेत्यर्थः स्यात् । यथोपपतिः पत्योपमितः । पतिसदृशः ।

**न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यपर्यगुः (४, २१, ४१)।**

पारमहंस्यपर्यगुरिति प्रहेलिकाप्रायम् । प्रहेलिकार्थावबोधेऽभ्यूहमात्रं शरणम् । कश्चिदाह—पारमहंस्यपरा ज्ञानिनः, तानर्हन्ति अधिकुर्वन्ति पारमहंस्याः । पर्यस्ता गावो वाचो यत्र स पारमहंस्यपर्यगुः । इदं ह्यसंविदानस्य कथावाचकस्येव लपितं यत्रावयवार्थोपपादनया नार्थः, शब्दशक्तिमनादृत्य च समुदायार्थसमर्पणा भवति । अपर आह—परमहंसानां गम्यः पारमहंस्यः, ज्ञानरूपः । परितो न गच्छन्ति गावो वाचो यस्मिन् स पर्यगुः । अयमपि पूर्वेण सदृशो ग्राम्यगोष्ठ्यां प्रवचनपटुः । अत्रार्थेऽगुरिति नञ्पूर्वपदे समासे गमिजे चोत्तरपदेऽशास्त्रीयायां रूपसिद्धौ वाच इति कथं लभ्यत इति न चिन्तयति व्युत्पत्तिराभस्यात् । उभयत्र पारमहंस्यार्थापनापि सममनुपपन्नेत्यलं परकृतार्थकदर्थनेन ।

**गृहीताध्यर्हणासनान् (४, २२, ४)।**

अध्यर्हणमर्घ्यम् । कल्पितः शब्दः कल्पितश्चार्थः ।

**क्षेमस्य सध्र्यग्विमृशेषु हेतुः (४, २२, २१)।**

विमृशेषु विमर्शेषु । सध्र्यक् सम्यक् । पूर्वत्र रूपमप्रसिद्धमपरत्रार्थः । विमृश इति क्वाचित्कः । सध्र्यग् इति सहचरार्थकः ।

**भ्रंशितो ज्ञानविज्ञानाद्येनाविशति मुख्यताम् (४, २२ ३३)।**

मुख्यतां स्थावरताम्। वृक्षादियोनिषु जायत इत्यर्थः। अप्रसिद्धोऽर्थः।

**त्रैवर्ग्योऽर्थो यतो नित्यं कृतान्तभयसंयुतः (४, २२, ३५)।**

त्रिवर्ग एव त्रैवर्ग्यः। इदं न घटते। स्वार्थष्यञन्तानि प्रायेण नपुंसकानि दृष्टानि यथा सन्निधिरेव सान्निध्यम् इति।

**देहेन्द्रियासुधिषणात्मभिरावृतानाम् (४, २२, ३७)।**

देह इति प्रसिद्धोर्थः। आत्माऽहङ्कार इत्यप्रसिद्धः।

**आत्मवत्त्वे स्वयं हरिः (४, २२, ६२)।**

आत्मवत्त्वम् आत्मज्ञानमिति कश्चित्। जितेन्द्रियत्वमित्यपरः। अप्रसिद्धार्थस्यानेकधाऽभ्यूहः।

**प्राचीं वृकसंज्ञाय तुर्यां द्रविणसे विभुः (४, २४, २)।**

तुर्यां चतुर्थीमुत्तरामिति यावत्। दिशो हि पूर्वादिभिः प्राच्यादिभिर्वा शब्दैर्व्यपदिश्यन्ते न जातु प्रथमादिभिः।

**पूररेचकसंविग्नबलिवल्गुदलोदरम् (रूपम्) (४, २४, ५०)।**

पूररेचकौ श्वासोच्छ्वासौ। पूररेचकौ तु प्राणायामविशेषौ प्रसिद्धौ।

**नखद्युभिर्नोऽन्तरघं विधुन्वता (४, २४, ५२)।**

द्युर्द्युतिः। इहैव प्रयोगः। अन्यत्रापीह पुराणेऽसकृत्प्रयुक्तः। ते कतिपये प्रदेशा निर्दिश्यन्ते—**स्वः स्यन्दने द्युमति मातलिनोपनीते (९, १०, २१)। वितानानि द्युमन्ति च (१०, ८१, ३०)। विद्याधरद्युभिः (१०, ८२, ८)। तपतां द्युमतां सूर्यं (मां विद्धि) (११, १६, १७)** इति।

**स्वाराज्यस्याप्यभिमत एकान्तेनात्मविद्गतिः (४, २४, ५४)।**

**स्वः स्वर्गः, तत्र राज्यमस्येति स्वाराज्य इन्द्रः। प्रसिद्धिस्त्वस्यात्रार्थे नास्ति। स्वराड् इन्द्रः, तस्य भावः स्वाराज्यम् इति तु प्रसिध्यति। प्रसिद्धि च नायं रोचयते।**

**यस्तेऽवमानव्ययमानकेतनः (४, २४, ६७)।**

**व्ययमानं भयात् कम्पमानम्। नाशं प्राप्तमिव। व्यय गतौ भूवादिः स्वरितेत्। केतनं शरीरम्। उभे अपि पदे सममप्रसिद्धे।**

**पुत्रदारधनार्थधीः (४, २५, ६)।**

अर्थशब्दः परमार्थमाह। यद्येवमर्थपरमार्थयोरैकार्थ्यं स्यात्। न चैतदिष्टम्।

**अन्वेषमाणामृषभमप्रौढां कामरूपिणीम् (४, २५, २१)।**

ऋषभं जीवं चेतनं भोक्तारम्। क्वान्यत्रायमर्थः।

**त्वयोपसृष्टो भगवान् मनोभवः (४, २५, ३०)।**

उपसृष्टः प्रेरितः। अप्रसिद्धोऽर्थः।

**लोका विशोका विरजा यान्न केवलिनो विदुः (४, २५, ३९)।**

केवलिन ऐकात्म्यनिष्ठा ध्यानवन्तो यतयः, मोक्षमार्गपथिकाः। शब्दस्तु नैतमर्थमाह।

**एकनीडम् (रथम्) (४, २६, २)**

नीड आसनमुपस्थः। शब्दः प्रसिद्धोऽर्थस्त्वप्रसिद्धः।

**एकदमनम् (रथम्) (४, २६, २)।**

दमनः सारथिः। इहैव दृश्यते नान्यत्र।

**तीर्थेषु प्रतिदृष्टेषु राजा मेध्यान्पशून्वने (४, २६, ६)।**

तीर्थेषु नित्यश्राद्धादिषु। प्रतिदृष्टेषु शास्त्रविहितेषु। तीर्थं शास्त्राध्वर-क्षेत्रोपायनारीरजःसु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु॥ इति मेदिनी। पुराणगृहीतोऽर्थस्तु न संगृहीतः।

**पुरञ्जनः स्वमहिषीं निरीक्ष्यावधुतां भुवि (४, २६, १८)।**

अवधुता पतिता। अवपूर्वो धुञ् नात्रार्थे शक्तः। त्यक्तदेहादरेति तात्पर्यमिति टीकाकाराः। तदपि दुर्लभम्।

**प्रेयस्याः स्नेहसंरम्भलिङ्गमात्मनि नाभ्यगात् (४, २६, १९)।**

अभ्यगाद् अजानात्। अभिपूर्वस्येणस्तत्र प्रसिद्धिर्नेत्यभ्युपगमः।

**न कालरंहो बुबुधे दुरत्ययम् (४, २७, ३)।**

कालगतिमित्याह। रंहस्तु वेगं वेगवतीं गतिं वाह न तु गतिसामान्यम्। तथा च कविकुलपतेः कालिदासय प्रयोगः—**न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य (रघु० १, ३४) इति।**

**कौटुम्बिकः कुटुम्बिन्या उपातप्यत साध्वयः (४, २८, १२)।**

कुटुम्बेन दीव्यति क्रीडतीति कौटुम्बिक इति कश्चित्। कुटुम्बीति प्रसिध्यति। अयं त्वन्यत्राप्यप्रसिद्धमिदं शब्दरूपं प्रयुङ्क्ते—**कौटुम्बिकः क्रुध्यति वै जनाय (५, १३, ८)। यत्र कौटुम्बिका दारापत्यादयो नाम्ना कर्मणा वृकशृगालाः** (५, १४, ३) इति।

**प्रबोधयति माविज्ञं व्युषिते शोककर्शिता (४, २८, २०)।**

अविज्ञं कृतप्रमादम्। अविज्ञस्त्वज्ञो भवति विशेषेण। परदेशगमने प्रपूर्वो वसतिः प्रसिध्यति, विप्र-पूर्वो वा, न तु विपूर्वः। प्रवासो विप्रवास इति समानार्थकौ प्रसिध्यतः, न तु विवासः, स हि विवाससमाह।

**अन्वद्रवन्ननुपथाः शोचन्तो भृशमातुराः (४, २८, २३)।**

अनुपथा अनुचराः। अन्यत्रापीह पुराणे बहुलोऽस्य प्रयोगः—**क एतेऽनुपथा ये न एकादश महाभटाः (४,२५,२६)। अनुपथा अनुगाः। अर्हसि मुहुरर्हत्तमार्हण-मस्माकमनुपथानाम् (५, ३, ४)। भवन्नियमानुपथाः** (५, १०, ४) इति च। **आपथयो विपथयोऽन्तस्पथा अनुपथाः** (ऋ० ५, ५२, १०)। अत्रानुपथा मार्गगा उच्यन्ते। स एव शब्दमर्यादया लभ्योऽर्थः।

**सध्रीचीनेन वैराग्यं ज्ञानं च जनयिष्यति (४, २९, ३७)**

सध्रीचीनेन सम्यक्प्रकारेण। अन्यत्र तु सध्रीचीनं सहचरितमाह। इह पुराणेऽन्यत्रापि प्रयोगोऽस्य दृश्यत एतस्मिन्नर्थे—**पितृसन्निधावेवासध्रीचीनमिव स्म करोति (५, ९, ५)।** अत्रासध्रीचीनम् असदृशं विरुद्धम् इत्यर्थः। **सध्रीचीनो ह्ययं लोके पन्थाः क्षेमोऽकुतोभयः (६, १, १७)।** समीचीन उत्तम इत्यर्थः।

**स जहाति मतिं लोके वेदे च परिनिष्ठिताम् (४, २९, ४६)।**

परिनिष्ठिताऽऽसक्ता। अन्यत्र परिनिष्ठितमिति सम्यङ् निष्पन्नं निर्वृत्तमाह। यथा परिनिष्ठितरूपैः शब्दैर्व्यवहारो भवति न तु प्रक्रियमाणैः। यथा वाऽन्याय्यमपरिनिष्ठितस्योपदेशस्य प्रदर्शनम् इत्यत्र मालविकायाम्।

**कर्म यत् क्रियते प्रोक्तं परोक्षं न प्रकाशते (४, २९, ५९)।**

प्रोक्तं शिष्टम्। अन्यत्र तु प्रोक्तं व्याख्यातमध्यापितं भवति। परोक्षं प्रकाशते इत्यस्यायमर्थः—परोक्षमदृश्यं सत् क्षणविध्वंसि भवतीति। अयमप्यूह-मात्रशरणो यत्नलभ्यः।

**मधुभिच्चरित्रपीयूषशेषसरितः (४, २९, ४०)।**

मधुभिद् मधुसूदनः। प्रसिद्धिद्वेषोपादानो न्यासः।

**आहुर्धूम्रधियो वेदं सकर्मकमतद्विदः (४, २९, ४८)।**

सकर्मकं स्वर्गादिसाधनकर्मबोधकम्। इममर्थं कः कथमुन्नयेत्परिणतप्रज्ञोपि।

**क्षुद्रं चरं सुमनसां शरणे मिथित्वा (४, २९, ५३)।**

सुमनसां कुसुमानां शरणमाश्रयः, गृहाराम इत्यर्थः। इदं कस्य भायात्।

**जह्याङ्गनाश्रममसत्तमयूथगाथम् (४, २९, ५५)।**

अङ्गनाश्रमो गृहाश्रमः। नूतनशब्दप्रक्लृप्तिः। किमस्य गृहाश्रमशब्दो गृहस्थाश्रमशब्दो वोद्वेजको यदलौकिकमङ्गनाश्रम इति शब्दं कल्पयति।

**नव्यवद्धृदये यज्ज्ञो ब्रह्मैतद् ब्रह्मवादिभिः (४, ३०, २२)।**

यद् यस्मात्तेषां नव्यवद् हृदय आविर्भवामि अहं ज्ञस्तस्मात्तमिममाविर्भावं ब्रह्मवादिनो ब्रह्म ब्रह्मसाक्षात्कारं व्यपदिशन्तीत्यर्थः कथंचिल्लभ्यः। प्रथमे चरणे क्रियापदस्य वर्ते विद्ये प्रादुर्भवामीत्यादेरश्रवणाद् नव्यवद् हृद् (द्वितीयान्तं क्लीबम्) अये प्राप्नोमीत्येवं कश्चित्पदच्छेदमूरीकुरुते। एतच्छन्देन यदत्र स्फुरणलक्षणमाविर्भावात्मकं प्रापणमुक्तं तत्परामृश्यते। ब्रह्मशब्देन च ब्रह्मसाक्षात्कार उच्यत इति कल्प्यते। ब्रह्मवादिभिरित्यनुक्ते कर्तरि तृतीयाश्रुतेर्व्यपदिश्यत इति क्रियाऽध्याह्रियते। वस्तुत इष्टार्थस्य वाचा समर्पणे सर्वथा पङ्गुरयं कविर्दुःखो व्याख्यातॄणाम्। विश्लिष्टान्यसमर्थानि पदानि प्रयुञ्जानो व्याकुलयति धियः श्रोतॄणाम्।

**यस्यां महद्वज्ञानादजन्यजनयोनिजः (४, ३०, ४८)।**

अजनयोनिजः। अजनो नारायणः। अजनो योनिर्यस्य सोऽजनयोनिर्ब्रह्मा। तस्माज्जातो ब्रह्मपुत्रो दक्षः। अहो गहनेन पर्यायोक्तेनालङ्कारेण कविरुचिविषयभूतेन पुराणमिदं काव्यतां नीतं कविवरेण।

**बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा (४, ३१, ११)।**

राधस्तेज इति कश्चित्। राधः पाटवमित्यपरः। नवेस्मिन्पुराणकारे सर्वं नवमिव भवति। असकृच्चायं शब्दो नवनवेष्वर्थेषु प्रयुक्तो यथा—स्वेनैवावाप्तराधसे (४, ७, ५७)। राध ऐश्वर्यम्। कमण्डलुजलेनौक्षद् दिव्येनामोघराधसा (७, ३, २२)। राधः प्रभावः। उद्वाहो मेऽल्पराधसः (१०, ५३, २३)। अल्पराधसो मन्दभाग्यायाः। इत्यत्र।

**न सरति छिद्रवदक्षरः सतां हि (४, ३१, २०)।**

छिद्रं हृदयाकाशम्। छिद्रं हृदयाकाशं भवतीत्यस्यैव विदितोऽर्थः।

**पितापुत्राभ्यामवहिताञ्जलिरुपतस्थे (५, १, ९)।**

अञ्जल्यवधानं तु न क्वचिदन्यत्र श्रुतम्। इहैव श्रोतव्यं जातम्।

**किं त्वन्यदेहाय गुणान्न वृङ्क्ते (५, १, १६)।**

वृजि वर्जने इत्यस्य सम्भजने वृत्तिर्न शक्या स्वीकर्तुम्, विरोधात्। वृङ् प्रयोज्यः। वृणुत इति वाच्यम्।

**अवाङ्मनसमव्यवहृतम् (५, १, २१)।**

अवाङ्मनसम्=अवाङ्मनसगोचरम् (स्वं रूपम्)। अव्यवहृतं सर्वव्यवहारातीतम्। शब्दं लुम्पति तन्नान्तरीयकतयाऽर्थं च। वाग्घि परत्र बोधसङ्क्रान्तये प्रयुज्यत इत्यन्तर्गतं भवति।

**प्रतिसन्धितमनोरथः (५, १, २२)।**

प्रतिसन्धितः सम्पन्नः। प्रतिसन्धा संजाताऽस्येति व्युत्पत्तिः। का नाम प्रतिसन्धा। प्रतिसन्धा प्रतिसन्धानमिति चेत्। प्रतिसन्धानमिति स्मरणे रूढम्। स्मृतिविषयतां गत इत्यर्थः स्यात्। स न सङ्गच्छते।

**°यौषिण्यव्रीडाप्रमुषितहासावलोक- (५, १, २९)।**

यौषिण्यं योषित्स्वभावकृतं शृङ्गारानुभावविजृम्भणम्। योषिणीति योषिदर्थे स्वतन्त्रां प्रकृतिं प्रकल्पयति पुराणकारः। अहो निःसीमानोऽस्य कल्पनाः।

**नैवंविधः पुरुषकार उरुक्रमस्य पुंसाम् (५, १, ३५)।**

इह भक्ताः पुमांस उक्ताः। पुरुषशब्दस्तु दासे प्रसिध्यति राजपुरुष इत्यत्र यथा। पुमानिति तु तत्रार्थे न दृश्यते।

**विदूरविगतः सकृदाददीत**
**यन्नामधेयमधुना स जहाति बन्धम् (५, १, ३५)।**

विदूरगतो विदूरं गतोऽन्त्यजादियोनिं प्राप्त इति विवक्षति। अधुना सद्य इत्यर्थे व्यवहरति।

**पुरुषानुजनप्रियः (५, १, ४१)।**

पुरुषो भगवान्। अनुजनो भक्तः। अप्रसिद्धौ शब्दार्थौ।

**वाचं ... ...**
**ब्रह्मन्नरूपमुखरां शृणवाम तुभ्यम् (५, २, १०)।**

अरूपमुखरा वाक् किलक्षणा भवति। अरूपाऽदृष्टवक्तृका भवतीति कश्चिन्मूलकारेण तुल्यधर्मा वृत्तिकारः। अदृष्टवक्तृका वागाकाशभाषितमुच्यते

न क्वचिदरूपेति । मुखरा स्पष्टं श्रूयमाणेत्यपि कश्चित् । कश्चिन्मुखरो वाचालो भवति न तु तदीया वाक् ।

लब्धा कदम्बरुचिरङ्कविटङ्कबिम्बे (५, २, १०) ।

अङ्को नितम्बः । विटङ्कः सुन्दरः । बिम्बो मण्डलम् । इति पदत्रितयं सममप्रसिद्धार्थकम् ।

का वाऽऽत्मवृत्तिरदनाद्धविरङ्ग वाति (५, २, १३) ।

वर्ततेऽनयेति वृत्तिर्जीवनोपायः । भोजनमित्यर्थः । यस्य भोजनस्यादनाद् हविर्वाति हव्यगन्धो वदनान्निःसरतीत्याह । यद्यपि वृत्तिर्भोजनमिति तात्पर्यं तथापि वृत्तेरदनमित्युक्तिर्नौचित्यमेति । हविरपि हव्यगन्धं नालं वक्तुम् । वदनादिति चाध्याहरणीयं भवतीति बह्वत्र दूष्यम् ।

परिजनानुरागविरचितशबलसंशब्दाः (५, ३, ६) ।

परिजनो भक्ताः । अन्यत्र परिजनः परिवारो भवति परिचारकवर्गः । शबलाः सगद्गदाः स्खलिताक्षराः । संशब्दाः स्तुतयः । प्रतिपदमस्फुटार्थता स्थिता ।

वर्षधराभिवादिताभिवन्दितचरणः (५, ३, १६) ।

वर्षधरो भारतवर्षपतिः । वर्षम् इति भारतवर्षमाह । वर्षधर इति भारतवर्षपतिम् । नूत्नौ शब्दार्थौ ।

समाहमेवाभिरूपः (५, ३, १७) ।

अभिरूपः सदृशोऽनुरूपः । अद्वितीयतया हेतुभूतया । अभिरूपो विद्वान्भवति रूपवान्वा ।

तदवरोधायने (५, ३, २०) ।

अवरोधः शुद्धान्त इति प्रसिद्धम् । तत्रार्थेऽवरोधायनम् इति स्वकपोल-कल्पितम् ।

ऊर्ध्वमन्थिनाम् (५, ३, २०) ।

ऊर्ध्वरेतसाम् इति विवक्षति । तत्रेदमप्रसिद्धम् । अन्यत्राप्रयोगात् ।

लब्धवरैर्गुरुभिरनुज्ञातः (५, ४, ८) ।

लब्धवरैः प्राप्तदक्षिणैः । वरो दक्षिणामभ्याचष्ट इत्ययमेव वेद । तत्रार्थे वरं प्रयुञ्जानस्यास्य कथमुद्वेगो न जायते ।

**गृहेषु जायात्मजरातिमत्सु (५, ५, ३)।**

रातिर्धनम्। रातिर्दानमिति लोकवेदयोः प्रसिद्धम्। धातुसाम्येपि रातयो रायो न भवन्ति।

**जनेषु देहंभरवार्तिकेषु (५, ५, ३)।**

देहभरणेन हेतुना ये वार्तिका वार्तया दीव्यन्ति ते वार्तिकाः। वार्तायां साधव इति वा। उभयमप्रसिद्धं शब्दश्चार्थश्च।

**साक्षात्कृतं मे परिबर्हणं हि**
**विना ··· ···**
**कृतान्तपाशान्न विमोक्तुमीशेत् (५, ५, २७)।**

परिबर्हणमाराधनम्। अत्र चेदमशक्तमिति नेक्षतेऽप्रसिद्धिकामः।

**उन्मादकवत् (५, ५, २९)।**

उन्मादक उन्मत्तः। सिध्यति रूपम्। अर्थस्तु न प्रसिध्यति।

**उच्चरित आदिग्धोद्देशः (५, ५, ३२)।**

उच्चरितमुच्चारोऽवस्करः। उद्देशा गात्राणि। तत्रोद्देशोऽप्रसिद्धः।

**चचार धर्मं यदकर्महेतुम् (५, ६, १४)।**

अकर्म=अकर्मप्राप्यो मोक्ष इत्यर्थः। तस्य हेतुम्। यावदप्रसिद्धोऽयमर्थो न परिगृह्यते तावदर्थवद् वचो न भवति। पारवश्यादिमादिरर्थः कल्प्यो भवति।

**क्व च किङ्करो वः (५, ६, १८)।**

क्व च=कदाचित्। इहेदम्पदद्वयमत्रार्थेऽसकृत्प्रयुक्तम्। किङ्करो दूत इति चेहैवार्थः।

**उपभृतोपशमः (५, ७, ११)।**

उपभृतः संवृद्धः। अन्यत्र दुर्लभौ शब्दश्चार्थश्च।

**सुरेतसाऽदःपुनराविश्य चष्टे**
**हंसं गृध्राणं नृषद्रिङ्गिरामिमः (५, ७, १४)।**

सुरेतसा शोभनेन तेजसा। अद इदं जगत्। जजानेति पूर्वेणान्वयः। तत्रैव भर्ग इति सान्तं क्लीवं कर्तृ। हंसं जीवम्। गृध्राणं गृध्यन्तम्, काङ्क्षन्तम्। सुखमिति शेषः। नृषु सीदन्त्युपाधितया तिष्ठन्ति इति नृषदो बुद्धीन्द्रियप्राणादयः, तेषां रिङ्गिं गतिं राति ददातीति नृषद्रिङ्गिराम् (भर्गः)। अमिपूर्वत्वस्याभावश्छान्दसः। इत्थम्भूतं सवितुस्तद्भर्गं इमः शरणं याम इति भरतस्य राज्ञ उक्तिः। प्रतिपदमप्रसिद्धिः स्थिता। राज्ञो विसदृशस्तिरोहितार्था इमा गिर इति नेक्षते कविः।

**एणकुणकम् (५, ८, ७)।**

कुणकः सद्योजातः शावः। इहैव प्रयोगः।

**पुरुषपरिचर्यादय एकैकशः कतिपयेनाहर्गणेन**
**वियुज्यमानाः किल सर्व एवोदवसन् (५, ८, ८)।**

उदवसन् उत्सन्ना अभूवन्। लौकिके साहित्य उद्वसेर्दुर्लभः प्रयोगः। वैदिकेपि ण्यन्तस्य तस्य पृथक्करणे निर्वासने वृक्षादेरुन्मूलनेऽर्थे प्रयोगो लक्ष्यते। इह पुराणे—**कृत्वा शिरसि तच्छेषां देवमुद्वासयेत्ततः (८, १६, ४३)** इत्यत्रो-द्वसिर्ण्यन्तो विसर्जने वर्तते। **संयावमुद्वास्य (१०,१९,५)**। चुल्ल्या अवतार्येत्यर्थः। **स्वधाम्न्युद्वास्य सत्कृतम् (११, ३, ५४)**। उद्वास्य स्थापयित्वा। शब्दशक्ति-मसमीक्ष्य स्वस्य मनीषितेऽर्थे प्रयोगः।

**अथ पणयस्तं स्वविधिनाभिविच्य (५, ९, १७)।**

पणयश्चौराणां पुरोहिता इति टीकाकारः। पणिर्वणिग्भवतीति तु यास्कः। लोके तु पणिशब्दो न प्रसिध्यति।

**तत्पादमूलमकुतश्चिद्भयम् (५, ९, २०)।**

अकुतोभयमिति तु प्रसिध्यति चिच्छब्देन व्यवहितेन भयेन समासस्त्विहैव दृष्टः। अन्यत्रेह पुराणे चकारव्यवधाने समासो दृश्यते—**अकुतश्चभयौ (१०, ८२, ३९)**। चकारप्रक्षेपेपि समास इति महाननर्थः।

**पीवेति राशौ न विदां प्रवादः (५, १०, ९)।**

राशौ देहादिसङ्घाते। इहैवानार्थे प्रयोगः।

**क्षेमाय नश्चेदसि नोत शुक्लः (५, १०, १६)।**

शुक्लः शुद्धसत्त्वः (कपिलो महर्षिः)। अस्यार्थस्य कुत उपलब्धिः।

**वचांसि योगग्रथितानि साधो न नः क्षमन्ते मनसापि भेत्तुम् (५, १०, १८)।**

अत्र विवक्षितार्थस्य विचितौ विविधा विकल्पा विवरीतृणाम्। नोऽस्माभिर्मनसापि भेत्तुं न क्षमन्ते न क्षम्यन्ते। अत्र कर्मणि लटि वक्तव्ये कर्तरि लटः प्रयोगः प्रमादपतितो मत्या वा कृतः। इदं वाच्यमिव भवतीति शङ्कमाना अन्यथा कल्पयन्ति—नोऽस्माकं मध्ये मनसा युक्ता अपि सूक्ष्मदृष्टयोपि त्वद्वचांसि (कर्म) भेत्तुं न क्षमन्त इत्यर्थः। मनसेत्यादि कथमिममर्थमर्पयतीति प्रष्टव्या भवन्ति। अत्रासन्तोषं भजन्तोऽपरे—वचांसि ते नोऽस्माकं मनसापि भेत्तुं न क्षमं न शक्यम् इत्येवमूहन्ते। अत्र क्षमं ते इति पदद्वयम् इत्यभ्यूहः। कामं शक्यमिति

वाक्योपक्रमे सामान्ये नपुंसकमेकवचनान्तं प्रयुज्यते न तथा क्षममित्यपीति कल्प्यम्। अयमतिदेशो व्यवहारं नानुपततीति चापलमात्रकारितः। अन्ये तव वचांसि नोऽस्मान् प्रति मनसा युक्ता योगिनोऽपि भेत्तुं न क्षमन्त इत्येवमर्थापयन्ते। अतः प्रतिरध्याहार्यो भवतीति कवेर्दूषणायाऽलमिति न पश्यन्ति।

**दृष्टः श्रमः कर्मत आत्मनो वै भर्तुर्गन्तुर्भवतश्चानुमन्ये (५, १०, २१)।**

अनुमन्येऽनुमिमे। अत्रार्थेऽनुमन्यतिर्न प्रसिध्यतीति न वेदनीया व्यवहारस्य कोविदाः।

**तत्तापतस्तण्डुलगर्भरन्धिः (५, १०, २२)।**

रन्धिर्विक्लित्तिः। रन्धिरिति स्वकपोलकल्पितम्। रध्यतेरजादिप्रत्यये नुम् शिष्यते। रन्धयति। रन्धकः। साधुरन्धी। रन्धः। क्तिनि तु नुम् दुर्लभः। तेनापशब्दोऽयं न प्रसेद्धुमर्हति।

**न सूरयो हि व्यवहारमेनं तत्त्वावमर्शेन सहामनन्ति (५, ११, १)।**

अत्र तत्त्वावमर्शेन सहेत्यस्य कोऽर्थः कविना विवक्षितः। तत्त्वचिन्तनकाले तत्त्वचिन्तने प्रवृत्ताः, व्यवहारं (त्वयोक्तम्) तत्त्वेषु नामनन्ति नोदाहरन्तीत्येवं ग्रन्थिं भेत्तुमीहते कश्चिन्न चेष्टे। वस्तुत इत्थं चेष्टमानो विदुषां हास्यो भवति।

**स्वप्ने निरुक्त्या गेहमेधिसौख्यम् (५, ११, ३)।**

निरुक्त्या दृष्टान्तेन। निरुक्तिर्निर्वचनं व्युत्पादनं स्पष्टीकरणं वा भवति।

**चेतोभिराकूतिभिरातनोति (५, ११, ४)।**

चेतांसि धीन्द्रियाणि। आकूतयः कर्मेन्द्रियाणीति कश्चिदुत्स्वप्नायते। आकूतिरिति च्छन्दोमात्रगोचरः शब्दः। तत्रास्याभिप्रायोऽर्थोऽभिलाषो वा।

**संसृतिचक्रकूटः (५, ११, ६)।**

संसृतिः संसारः। तस्याः चक्रं समूहः। तत्र कूटयति छलयतीति संसृतिचक्रकूटः। कूटयतिश्छलने न प्रसिध्यति।

**मात्राणि कर्माणि पुरं च तासाम् (५, ११, ९)।**

मात्राणीति पञ्चतन्मात्राणीत्यर्थेऽत्रैव प्रयोगः। क इदमभ्यूहेत् प्रकरणं चेच्छरणं न स्यात्।

**शय्यामहं द्वादशमेक आहुः (५, ११, १०)।**

शय्या शरीरम्। अहमहङ्कारः। स्वैरं कल्पितावर्थौ।

**गन्धाकृतिः स्पर्शरसश्रवांसि (५, ११, १०)।**

श्रवः शब्दः। अन्यत्र श्रवः कर्णमाह।

**आविर्हिताश्च क्वापि तिरोहिताश्च (५, ११, १२)।**

आविर्भूता आविष्कृता इत्यर्थे ध्वनिसाम्याय कल्पयत्याविर्हिता इति।

**स्वरूपतुच्छीकृतविग्रहाय (५, १२, १)।**

स्वरूपेणात्मानन्दानुभवेन। शब्दमर्यादया दुर्लभोऽर्थः।

**रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद् गृहाद्वा।**
**न च्छन्दसा नैव जलाग्निसूर्यैः (५, १२, १२)॥**

गृहात् =तन्निमित्तपरोपकारात्। जलाग्निसूर्यैः =जलाग्निसूर्याणामुपासनया, तत्करणकृतपसा वा। किमिति स्वमभिप्रायं शब्देन न वक्ति। किमित्यस्थाने वचः संक्षिपति।

**गोमायवो यत्र हरन्ति सार्थिकम् (५, १३, २)।**

गोमायवः =तद्रूपा दारपुत्रादयः। सार्थिकं सार्थे स्थितमन्नवस्त्रादिकम्। नास्यात्रार्थे प्रसिद्धिः। सार्थोऽस्यास्त्यवयवित्वेनेति सार्थिक इति तु न्याय्योऽर्थः। सार्थे समवेतो जनः सार्थिकः।

**शय्यासनस्थानविहारहीनः (५, १३, १२)।**

विहरत्यनेनेति विहारो यानम्। नानार्थोपि विहारशब्दो यानेर्थं इहैव।

**अन्योन्यवित्तव्यतिषङ्गवृद्धवैरानुबन्धः (५, १३, १३)।**

कोऽयं वित्तव्यतिषङ्गो नाम। नायमन्यत्र क्वचिच्छ्रुतः। अत्र कविविवक्षितेऽर्थे नानाविकल्पा व्याचिख्यासतां विदाम्। वित्तव्यतिषङ्गो धनसाङ्कर्यं विनिमयो वा। परस्परजिघृक्षा वा। मोहं ब्रुवन्पुराणकारः क्लिश्नाति टीकाकाराञ्छ्रद्धाजडान्।

**तत्र च क्वचिदातपोदकनिभान् विषयान् उपधावति (५, १४, ६)।**

आतपोदकं मृगतृष्णा, मरुमरीचिका। प्रसिद्धव्यपदेशपरिहारेण नूतनकल्पितेनाभिधानेनाभिधेयमर्पयति, तदस्य शीलम्।

**प्रमदयाऽऽरोहमारोपितः (५, १४, ९)।**

आरोह उत्सङ्गः। आभिधानिकास्तु आरोहं नितम्बमाहुः। वरारोहा वरवर्णिनीति सत्तमस्त्रीनामसु पठितम्। अन्यत्रापीह पुराणेऽत्रार्थे प्रयोगो यथा—**एकदाऽऽरोहमारूढं लालयन्ती सुतं सती (१०, ७, १८), गोपी साऽऽरोप्यारोहमात्मजम् (१०, ८, ४४)** इत्यत्र।

**पराभिध्यानेन (५, १४, १०)।**

देहात्माभिमानेन। परशब्दो देहपर इति शुकस्येङ्गितम्। अभिध्यानमभिमान इत्यपि तादृगेव। अन्यत्राभिध्यानं सस्पृहं ध्यानं स्पृहा भवति। क्वचिद् ध्यानमात्रमपि।

**अतिपरुषरभसाटोपम् (५, १४, ११)।**

अतिपरुषो दुःसहः। रभस उत्साहः तेनाटोपः सम्भ्रमो यथा भवति तथा। अत्र सर्वत्राप्रसिद्धार्थपरिग्रहः। परुषः कर्कशो भवति श्लक्ष्णप्रतिद्वन्द्वी। रभसो वेगहर्षयोरिति कोषः। आटोप इति च वृद्धौ प्रसिध्यति न सम्भ्रमे त्वरायाम्।

**तदा हि पितृपुत्रबर्हिष्मतः पितृपुत्रान्वा स खलु भक्षयति (५, १४, १४)।**

भक्षयति निगरीतुमिच्छति। यद्येषोऽर्थस्तर्हीषेः प्रयोगः कुतः परिहृतः। पितृपुत्रबर्हिष्मत इत्यनेन किं वक्तुमिच्छति। वा शब्दोऽप्यर्थे। पितृपुत्रबर्हिष्मत इति द्वितीयाबहुवचनम्। बर्हिःशब्देन सम्पत्तिकणो लक्ष्यते तृणादिवदवस्तुभूतं धनं वा। बर्हिष्मच्छब्दस्य यजमाने लक्षणा—**यथा बर्हिष्मते रन्धया शासदव्रतान्** (१, ५१, ८) इत्यत्र ऋग्वर्णे। कविरयं शब्दानां स्वेन प्रयुयुक्षितानां छान्दसं रूपमादत्ते न त्वर्थमित्येषाऽस्य शैली।

**पाखण्डदेवता आर्यसमयपरिहृताः साङ्केत्येनाभिधत्ते (५, १४, २९)।**

साङ्केत्येन=सङ्केतेन प्रमाणशून्येन पाखण्डिभिः स्वयं निर्मितेन शास्त्रेण। अन्यत्रापीह पुराणे स्वार्थेष्यञन्तस्य साङ्केत्यशब्दस्य प्रयोगो यथा—**साङ्केत्यं पारिहास्यं च स्तोभं हेलनमेव वा** (६, २, १४) इत्यत्र। यथा वा—**साङ्केत्यवृत्त्या** (११, ८, ३२) इत्यत्र। इहैव पुराणे प्रयोगो नान्यत्र।

**पूर्ववासनया मिथ उद्वहत्यथापवहति (५, १४, ३७)।**

अपवहति त्यजति। ऊढपूर्वाम्। ण्यन्तस्य वाहयतेरपपूर्वस्य प्रसिध्यन्ति प्रयोगाः।

**सर्वा एवाशिष आत्मन आशास्ते न काञ्चन परत इति (५, १४, ४६)।**

आत्मनः सकाशादाप्नोतीति विवक्षति। आङः शासु इच्छायाम् इति धातुर्न क्वचित्प्राप्तौ वर्तते। प्रसिद्धान्स्वानर्थान् व्यभिचारयति शब्दान्।

**भगवत्पदीत्यनुपलक्षितवचोऽभिधीयमाना (गङ्गा) (५, १७, १)।**

उपलक्षणरहितं वचो नामधेयम् इहानुपलक्षितवच इत्युक्तम्। इदं किंविवरणम्। यत्सत्यं संवरणमिदम्। न हि शब्दः शब्दान्तरमुपलक्षयति किन्तर्हि

स्वार्थमपर्यन्नधिकार्थं लक्षयति। उपशब्द आधिक्ये। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काक उपलक्षणम्।

सर्वगुणसंख्यानाय (५, १७, १८)।

गुणानां गुणकार्याणां संख्यानं प्रकाशो यस्मात्, तस्मै। अप्रसिद्धार्थः पदोच्चयः।

यमाहुरस्य स्थितिजन्मसंयमम् (५, १७, २१)।

संयमः संहार इत्यप्रसिद्धोऽर्थः। स्थित्यादिना स्थित्यादीनां हेतुं तत्कारकं वाऽऽह। तदप्यनृजु।

क्षीबेव मध्वासवताम्रलोचनः (५, १७, २०)।

क्षीबन् इति नान्तां प्रकृतिं कल्पयति। आचार्यस्तु अनुपसर्गात्फुल्ल-क्षीबकृशोल्लाघाः इति शास्त्रेण निष्ठायां क्षीब इत्यदन्तं निपातयति। अयं त्वन्यत्रापि नान्तं प्रातिपदिकमूरीकुरुते यदाह—अपश्यन्नारदो देवौ क्षीबाणौ समबुध्यत (१०, १०, ५) इति।

सुविस्मितं कृत्यम् (५, १८, ४)।

सुविस्मितमाश्चर्यं चित्रं विस्मयजनकं विस्मापकम्। अस्मिन्नर्थेऽसमर्थं क्रान्तं शब्दरूपम्।

अकर्तुरङ्गीकृतमप्यपावृतः (५, १८, ५)।

अपावृत इति क्विबन्तात्षष्ठी। आवृत् आवरणम्। साऽपगता यस्य, तस्य। नष्टमायावरणस्य भगवतः।

स्वस्त्यस्तु विश्वस्य खलः प्रसीदताम् (५, १८, ९)।

दुर्जनः क्रौर्यं त्यजत्वित्यर्थः। स कथं लभ्यते। दुर्जनस्तु क्रौर्येण तुष्यति तत्र रमते, न तज्जहाति। क्रौर्यं चेज्जह्याद् दौर्जन्यमेव जह्यात्। प्रसादः क्रौर्यत्याग इति कथमुत्प्रेक्षितमसामान्यप्रेक्षेणान्वितार्थप्रकाशिकाकारेण।

यद्भग्नयाच्ञा भगवन्प्रतप्यते (४, १८, २१)।

भग्नयाच्ञेत्यनेन किं विवक्षति। कश्चिदाह—भग्ना भोगेन क्षीणा याच्ञा याचितोऽर्थो यस्याः सेत्थम्भूतेति। कथमस्यार्थस्योपलब्धिः।

अन्तर्बहिश्चाखिललोकपालकैरदृष्टरूपो विचरस्युरुस्वनः (५, १८, २६)।

उरुस्वनो वेदात्मकमहानादयुक्तः।

**नमो वर्ष्मणे** (५, १८, ३०)

वर्षीयस इत्यर्थमर्पिपयिषति। स च न शक्योऽर्पयितुम्। वर्ष्मन्निति शरीरे शरीरायामे वा रूढम्।

**गूढं क्रियार्थैर्नम ईरितात्मने** (५, १८, ३६)।

ईरितः प्रकटितः। इहैवात्रार्थे प्रयोगः। अन्यत्र ईरितः प्रेरि[illegible] भवत्युदीरितो वा।

**भूयो वनौका इव यान्ति बन्धनम्** (५, १९, २५)।

ओक इत्यदन्तां प्रकृतिं कल्पयति।

**स्वयं विधत्ते भजतामनिच्छाम् इच्छापिधानं निजपादपल्लवम्** (५, १९, २७)।

इच्छापिधानमिच्छानां पूरकं निवर्तकं वेत्यर्थ इति टीकाकृतः।

**असुरवधूनां प्रायः पुंसवनानि भयादेव स्रवन्ति पतन्ति च** (५, २४, १५)।

पुंसवनानि गर्भाः। अपूर्वोऽर्थः स्वैरं कल्पितः।

**अतिगम्भीरवयसः कालस्य मन्वन्तरपरिवृत्तम्** (५, २४, २४)।

वय इत्यत्र गतिमाचष्टे। केवलं धात्वर्थमादाय प्रयोगः। कालकृता-शरीरावस्था यौवनादिवर्य इति लोकेऽभ्युपगतोऽर्थः। अन्यत्र कालेऽर्थेऽपि प्रयुङ्क्ते— **नैषां वयं न च वयः प्रभवाम दण्डे** (६, ३, २७)।

**सुललितमुखरिकामृतेन** (५, २५, ७)।

मुखरिका वचनम्। अन्यत्र दुर्लभो शब्दश्चार्थश्च।

**यस्त्विह वा असंविभज्याश्नाति**

**यत्किञ्चनोपनतमनिर्मितपञ्चयज्ञो वायससंस्तुतः** (५, २६, १८)।

वायससंस्तुतो वायसतुल्यः। संस्तवः परिचय इति कोषप्रामाण्यात् संस्तुत इति परिचितमाचक्षीत। सोऽर्थः प्रकृते न सङ्गच्छत इति कश्चिद् हठात् संगमने प्रवृत्त आह—**वायसैः काकैः संस्तुतः समत्वेन वर्णित इति।** सम्पूर्वस्य ष्टुञः समत्वेन वर्णनायां न रूढिरस्ति।

**अनिर्वेशमात्मानं यातयते** (५, २६, १८)।

निर्वेशः प्रायश्चित्तम्। कोषस्तु निर्वेशो भृतिभोगयोरित्याह। तत्रैव चार्थे प्रसिध्यन्ति कवीनां प्रयोगाः। अयं त्वन्यत्रापीह पुराणे प्रायश्चित्तेऽर्थे प्रयुङ्क्ते यथा—**अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि** (६, २, ७)। **करिष्ये वधनिर्वेशम्** (१०, ७८, ३३) इत्यत्र। क्वचिन्निष्कृतावर्थेऽपि प्रयोगो यथा—

**भर्तुर्निर्वेशकारिणः** (१०, ४४, ४०) इत्यत्र । यथा वा—**न तयोः निर्वेशं पित्रोर्मर्त्यः शतायुषा** (१०, ४५, ५) इत्यत्र । उभयत्र आनृण्यमर्थः ।

**ये त्विह वा अनागसोऽरण्ये ग्रामे वा**
**वैश्रम्भिकैरुपसृतान्** (५, २६, ३२) ।

वैश्रम्भिकैर्विश्रम्भोपायैः, विश्रम्भप्रयोजनैरुपायैः । तद्धितप्रियताऽपूर्वशब्दनिर्माणे प्रयोजिका ।

**न चेदिहैवापचितिं यथांहसः**
**कृतस्य कुर्यान्मन उक्तिपाणिभिः** (६, १, ७) ।

अपचितिः प्रायश्चित्तम् । अन्यत्रापचितिः पूजायां प्रसिध्यति । तथा चामरः पठति—**पूजा नमस्याऽपचितिः सपर्याऽर्चार्हार्हणाः समा इति** । अयन्त्वत्रानेकत्र अपचितिं प्रायचित्तेर्थे पठति—**विधेहि तस्यापचितिविधातः** (९, ४, ६२) । **अजानतस्त्वपचितिम्** (१०, ७८, ३७) । इत्यत्र यथा । आनृण्येऽप्यर्थेत्र बहुलः प्रयोगः—**यास्याम्यपचितिं पितुः** (१०, ६६, २७) । **सख्युः सोऽपचितिं कुर्वन्वानरो राष्ट्रविप्लवम्** (१०, ६७, ३) । **नैवोपयन्त्यपचितिं कवयस्तवेश** (११, २९, ६) इत्यादिषु यथा । यथा प्रायश्चित्तार्थोऽविदितः कवीनां तथाऽऽनृण्यं निष्कृतिर्वेत्यर्थोऽपि ।

**चीर्णनिष्कृताः** (६, १, १९) ।

चरितनिष्कृतय इत्यर्थः । कृतवैरनिर्यातनाः । शब्दोऽर्थश्च सममप्रसिद्धौ ।

**वन्द्यक्षकैतवैश्चौर्यैर्गर्हितां वृत्तिमास्थिताः** (६, १, २२) ।

वन्दीशब्दो वन्दीकरणे वर्तते । तत्रापि लोकस्य पथिकजनस्य वेति शेषः ।

**वैवस्वतपुरःसराः** (६, १, ३२) ।

वैवस्वतो यमः । पुरःसरा भृत्याः । पुरःसरः पुरोगमोऽग्रेगा भवति, न त्वनुचरः । शब्दशक्तिविरोधात् ।

**एवं हताज्ञो विहतान्मुरारे-**
**र्नैर्देशिकैर्यस्य वरो जनोऽयम्** (६, ३, १) ।

नैर्देशिकाः किङ्कराः । अयमाभिधानिकैरप्यसङ्गृहीतः ।

**वार्क्षी ह्येषा वरा कन्या पत्नीत्वे परिगृह्यताम्** (६, ४, १५) ।

वृक्षैः पालिता वार्क्षीत्यभिप्रैति । पुराणकार एवेममर्थं प्रतीयान्नेतरः ।

**देहोऽसवोऽक्षा मनवो भूतमात्राः (६, ४, २५)।**

मनवोऽन्तःकरणानि। मनुशब्दस्तत्रार्थे न प्रसिध्यति।

**वह्निं यथा दारुणि पाञ्चदश्यं**
**मनीषया निष्कर्षन्ति गूढम् (६, ४, २७)।**

पञ्चदशभिः सामिधेनीभिर्मन्त्रैर्लभ्यम्।

**आपूरितमनोद्वारैः (६, ४, ४१)।**

द्वाराणि करणानीन्द्रियाणि।

**बिलस्वर्गं गतो यथा (६, ५, १३)।**

बिलस्वर्गः पातालम्।

**दाक्षायणाः संशृणुत गदतो निगमं मम (६, ५, ३०)।**

निगम उपदेशः।

**भ्रातृणां प्रायणं भ्राता योनुतिष्ठति धर्मवित् (६, ५, ३१)।**

प्रायणं प्रकृष्टमुत्तममयनं मार्गम्। विरलः प्रयोगः। इतो लोकात्प्रयाणे प्रस्थाने तु बहुलः।

**नाद्यापि ते निवर्तन्ते पश्चिमा यामिनीरिव (६, ४, ३३)।**

पश्चिमा अतीताः।

**यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः (६, ७, ११)।**

कात्कृतः = तिरस्कृतः। अपूर्वः शब्दोऽपूर्वोऽर्थः।

**प्रसादयिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् (६, ७, १५)।**

निशठः शाठ्यरहितः। अत्रार्थ इहैव प्रयोगः।

**ब्रह्मवर्चं उपव्ययम् (६, ७, ३५)।**

उपव्ययोऽधिको व्ययः क्षयः। इहैव प्रयोगः।

**विष्णुररीन्द्रपाणिः (६, ८, २०)।**

अरि चक्रम्। अराः सन्त्यस्येति इन्नन्तं वा स्यात्। इहैव पुराणे प्रयोगः। कल्पितः शब्दः। अत्र त्वसकृत्प्रयुक्तः। काश्चिद् दिशः स्थूलोच्चयेन निर्दिश्यन्ते—ग्राहाद् विपाटितमुखादरिणा गजेन्द्रम् (८, ३, ३३)। तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाऽऽद्यः (८, १०, ५७)। शङ्खार्यसिगदाशार्ङ्ग- (१०, ६६, १३)। आयोधनं तद्रथवाजिकुञ्जरद्विपत्खरोष्ट्रैररिणाऽवखण्डितैः (१०, ६६, १७)। अरिणाऽवखण्डितैः (१०, ६६, १८)। इति।

**दोषे हृषीकेश उत्तरार्धे (६, ८, २१)।**

दोष इति प्रदोषेऽर्थे प्रयुङ्क्ते। छन्दोवशाच्चापलाद्वा प्रशब्दं लुम्पति।

**ईरणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते (६, ९, ७)।**

ईरणमूषरम्। ऊषः क्षारमृत्तिका। ईरणशब्दस्यायमर्थः कोषकारैरप्यसंगृहीतः। मन्वादौ तु इरिणशब्दोऽत्रार्थे पठितः।

**स नोस्तु पारः (६, ९, २४)।**

पारः पारं नेता, तारकः। कामं छन्दसि—**त्वमपो यदवे तुर्वशायाऽरमयः सुदुघाः पार इन्द्र** (ऋ० ५, ३१, ८) इत्यत्र पुराणगृहीतोर्थो लक्ष्यते। लोके त्वत्रार्थे प्रयोगो दुर्लभः।

**येनानुसृजाम विश्वम् (६, ९, २५)।**

अनुसृजाम=अनुगृहीताः सृजाम इति विवक्षति। लोके त्वनुपूर्वस्य सृजेः प्रयोग एव दुर्लभः।

**अस्माकं तावकानां तव नतानां तत ततामह (६, ९, ४१)।**

अथर्ववेदे (५, २४, १७) श्रुतोपि ततामहशब्दो लोके न प्रचरति। नतानाम्=प्रणतानाम्।

**परीष्टगतये हरये नमस्ते (६, ९, ४५)।**

परीष्टा इष्टतमा सत्तमा गतिर्यस्मात् स परीष्टगतिः। परिपूर्वस्य इषेरनिच्छार्थस्य परीक्षाऽर्थः परीष्टिः पर्येषणेत्यादिषु।

**हंसाय दह्रनिलयाय (६, ९, ४५)।**

दह्रं हृदयाकाशः। उपनिषत्सु दहरमिति श्रूयते। अयं त्वकारलोपेन पठत्यप्रसिद्धयै।

**भवपान्थनिजाश्रमाप्तौ (६, ९, ४५)।**

आश्रमः शरणं त्राणम्। अपूर्वोऽर्थः।

**धर्मं वः श्रोतुकामेन यूयं मे प्रत्युदाहृताः (६, १०, ७)।**

प्रत्युदाहृताः प्रत्युक्ताः प्रत्याख्याताः। उदाहरणविरोधिवचनं प्रत्युदाहरणं भवति। इह तु नूत्नार्थकल्पना।

**··· निर्मितं विश्वकर्मणा, मुनेः शुक्तिभिः ··· (६, १०, १३)।**

शुक्तयोऽस्थीनि। इहैवार्थे प्रयोगः।

**समञ्जस त्वा विरहय्य काङ्क्षे (६, ११, २५)।**

(हे) समञ्जस=सर्वसौभाग्यनिधे। गड्डरिकावत् प्रवाहपतितो विवेकविश्रान्तैरङ्गीकृतः।

**द्विजा इव शिचा बद्धाः (६, १२, ८)।**

शिचा=जालेन। शब्दोऽर्थश्चोभावपि भागवतादन्यत्र न दृश्येते।

**लेलिहोल्बणजिह्वया (६, १२, २७)।**

लेलिहः सर्पः। सिध्यति रूपमर्थस्तु न प्रसिध्यति।

**ज्योतिषामयने वार्त्रहत्ये (६, १२, ३३)।**

वार्त्रहत्ये वृत्रहत्यायाम्। स्वार्थे ष्यञ्। अन्यत्र दुर्लभः प्रयोगः।

**हत्वापि सब्रह्म सचराचरं त्वं न लिप्यसे किं खलनिग्रहेण (६, १३, ९)।**

किम्=किमुत।

**पठेयुराख्यानमिदं सदा बुधाः शृण्वन्त्वथो पर्वणि पर्वणीन्द्रियम् (६, १३, २३)।**

इन्द्रियमिन्द्रियपाटवकरम् इति कश्चित् कल्पयति। यद्यपि इन्द्रियमिन्द्रलिङ्गम् (५,२,९३) इत्यादि सूत्र आचार्येणार्थनिदर्शनं कृतं न त्वर्थपरिगणनमिति मतं तथापीहानुक्तेऽर्थे समाश्रीयमाणायां यस्यां कस्यांचिद् व्युत्पत्ताविन्द्रः प्रकृतित्वेनावश्यं समाश्रेयो भवति। प्रकृते स्वीकृतेऽर्थे तु न तथेति निष्प्रमाणो नितमामप्रसिद्धोऽयमर्थो नाभ्युपेयो भवति।

**सान्तानिकश्चापि नृपो न लेभे तासु सन्ततिम् (६, १४, ११)।**

सन्तानार्हः सन्तानोत्पादनसमर्थोपीति श्रीधरः। सन्तानप्रयोजनः सन्तानार्थीति तु प्रसिध्यत्यर्थः।

**एवं विकल्पितो राजन् विदुषा मुनिनापि सः (६, १४, २२)।**

विकल्पितो विकल्पपूर्वं पृष्ट इत्यर्थः। अशक्तोऽत्रार्थे क्लृपिर्विपूर्वः।

**ताश्च व्यलीकं रुरुदुः कृतागसः (६, १४, ४९)।**

व्यलीकं मिथ्या। अलीकं तदर्थकं न व्यलीकम्। व्यलीकं दुःखं भवत्यपराधो वा। व्यलीकनिश्वासमिवोत्ससर्जेत्यत्र दुःखं वक्ति।

**विमूर्च्छितोऽनुप्रकृतिर्द्विजैर्वृतः (६, १४, ५०)।**

अनुगतः प्रकृतिभिर्मन्त्र्यादिभिरित्यनुप्रकृतिः। अवादयः क्रुष्टाद्यर्थे तृतीययेति प्रादिः समासः। यत्नप्रक्लृप्तोऽत्यन्तमप्रसिद्धः शब्दः।

**परोऽनुजीवत्यपरस्य या मृतिः (६, १४, ५४) ।**

परः प्रवयाः । अपरोऽवरवयाः । प्रसिद्धिस्त्वत्रार्थे नास्ति ।

**अतवर्हमनुस्मृत्य महापुरुषगोचरम् (६, १५, १८) ।**

महापुरुषगोचरम् = भगवद्भक्तम् ।

**निर्हृत्य ज्ञातयो ज्ञातेर्देहं कृत्वोचिताः क्रियाः (६, १६, १३) ।**

निर्हृत्य संस्कृत्य, दग्ध्वा । निर्हरणं तु शवस्य ग्रामाद् बहिर्नयनं भवति रणाजिरात्क्षतविक्षतानां योधानां शिबिरं प्रति नयनं वा ।

**यं चेकितानमनु चित्तय उच्चकन्ति (६, १६, ४८) ।**

उत्पूर्वस्य चकेर्भौवादिकस्य प्रयोगः । चक तृप्तौ प्रतीघाते च । अनुदात्तेत् । उच्चकन्ति उच्चैः प्रकाशयन्तीति श्रीधरादयः । चकितमिति निष्ठायामेव प्रसिध्यति प्रयोगः । तिङि तु दुर्लभोऽन्यत्र भागवतात् । उपसर्गपूर्वस्य तु दुर्लभतरः ।

**न वेद धर्मं किल पद्मयोनिः (६, १७, १२) ।**

किलेति प्रश्नमाह । आभिधानिकास्तु वार्तासंभाव्ययोः किलेत्याहुः ।

**त्वया भर्तरि सुप्रीते कः काम इह चागमः (६, १८, ३२) ।**

अगमः = नास्ति गमः प्राप्तिरस्य । व्युत्पत्तिलभ्येस्मिन्नर्थे प्रयोगो न दृश्यते । अगमो गन्तुमशक्तो भवति । अगमोऽग इव वृक्षो भवति पर्वतो वा ।

**शुक्ले मार्गशिरे पक्षे (६, १९, २) ।**

अदन्तः शिरशब्दोऽपभ्रंशः । वर्तमानायां हिन्द्यां 'सिर' इति प्रसिध्यति ।

**बिभ्रियात्सर्वकर्माणि पत्न्या उच्चावचानि च (६, १९, १७) ।**

उच्चावचानि = उत्कृष्टापकृष्टानि । उच्चावचं नैकभेदमिति तु कोषः ।

**रजस्तमस्कान् प्रमिणोत्युरुश्रवाः (७, १, ११) ।**

प्रमिणोति हिनस्ति । अन्यत्र प्रमाणीकरोति प्रमिमीते इत्येवार्थः ।

**उपधावनैः (७, २, ६) ।**

उपधावनैः सेवनैः । उपासनाभिः । अपूर्वोऽर्थः ।

**तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः (७, २, ७) ।**

अंशुज्वालातरङ्गेषु घृणिः प्रसिध्यति । इह तु दीप्तिरर्थः, दीप्तिमान्वा । वनौकाः सूकरः । अमरस्तु सूकरनामसु नेदं संगृह्णाति । आहायम्—वराहः

**समञ्जस त्वा विरहय्य काङ्क्षे (६, ११, २५)।**

(हे) समञ्जस=सर्वसौभाग्यनिधे। गड्डुरिकावत् प्रवाहपतितो विवेकविश्रान्तैरङ्गीकृतः।

**द्विजा इव शिचा बद्धाः (६, १२, ८)।**

शिचा=जालेन। शब्दोऽर्थश्चोभावपि भागवतादन्यत्र न दृश्येते।

**लेलिहोल्बणजिह्वया (६, १२, २७)।**

लेलिहः सर्पः। सिध्यति रूपमर्थस्तु न प्रसिध्यति।

**ज्योतिषामयने वार्त्रहत्ये (६, १२, ३३)।**

वार्त्रहत्ये वृत्रहत्यायाम्। स्वार्थे ष्यञ्। अन्यत्र दुर्लभः प्रयोगः।

**हत्वापि सब्रह्म सचराचरं त्वं न लिप्यसे किं खलनिग्रहेण (६, १३, ९)।**

किम्=किमुत।

**पठेयुराख्यानमिदं सदा बुधाः शृण्वन्त्वथो पर्वणि पर्वणीन्द्रियम् (६, १३, २३)।**

इन्द्रियमिन्द्रियपाटवकरम् इति कश्चित् कल्पयति। यद्यपि इन्द्रियमिन्द्रलिङ्गम् (५,२,९३) इत्यादि सूत्र आचार्येणार्थनिदर्शनं कृतं न त्वर्थपरिगणनमिति मतं तथापीहानुक्तेऽर्थे समाश्रीयमाणायां यस्यां कस्यांचिद् व्युत्पत्ताविन्द्रः प्रकृतित्वेनावश्यं समाश्रेयो भवति। प्रकृते स्वीकृतेऽर्थे तु न तथेति निष्प्रमाणो नितमामप्रसिद्धोऽयमर्थो नाभ्युपेयो भवति।

**सान्तानिकश्चापि नृपो न लेभे तासु सन्ततिम् (६, १४, ११)।**

सन्तानार्हः सन्तानोत्पादनसमर्थोपीति श्रीधरः। सन्तानप्रयोजनः सन्तानार्थीति तु प्रसिध्यत्यर्थः।

**एवं विकल्पितो राजन् विदुषा मुनिनापि सः (६, १४, २२)।**

विकल्पितो विकल्पपूर्वं पृष्ट इत्यर्थः। अशक्तोऽन्त्रार्थे क्लृपिर्विपूर्वः।

**ताश्च व्यलीकं रुरुदुः कृतागसः (६, १४, ४९)।**

व्यलीकं मिथ्या। अलीकं तदर्थकं न व्यलीकम्। व्यलीकं दुःखं भवत्यपराधो वा। व्यलीकनिश्वासमिवोत्ससर्जेत्यत्र दुःखं वक्ति।

**विमूर्च्छितोऽनुप्रकृतिर्द्विजैर्वृतः (६, १४, ५०)।**

अनुगतः प्रकृतिभिर्मन्त्र्यादिभिरित्यनुप्रकृतिः। अवादयः क्रुष्टाद्यर्थे तृतीययेति प्रादिः समासः। यत्नप्रक्लृप्तोऽत्यन्तमप्रसिद्धः शब्दः।

**परोऽनुजीवत्यपरस्य या मृतिः (६, १४, ५४) ।**

परः प्रवयाः । अपरोऽवरवयाः । प्रसिद्धिस्त्वत्रार्थे नास्ति ।

**अतवर्हमनुस्मृत्य महापुरुषगोचरम् (६, १५, १८) ।**

महापुरुषगोचरम् = भगवद्भक्तम् ।

**निर्हृत्य ज्ञातयो ज्ञातेर्देहं कृत्वोचिताः क्रियाः (६, १६, १३) ।**

निर्हृत्य संस्कृत्य, दग्ध्वा । निर्हरणं तु शवस्य ग्रामाद् बहिर्नयनं भवति रणाजिरात्क्षतविक्षतानां योधानां शिबिरं प्रति नयनं वा ।

**यं चेकितानमनु चित्तय उच्चकन्ति (६, १६, ४८) ।**

उत्पूर्वस्य चकेर्भौवादिकस्य प्रयोगः । चक तृप्तौ प्रतीघाते च । अनुदात्तेत् । उच्चकन्ति उच्चैः प्रकाशयन्तीति श्रीधरादयः । चकितमिति निष्ठायामेव प्रसिध्यति प्रयोगः । तिङि तु दुर्लभोऽन्यत्र भागवतात् । उपसर्गपूर्वस्य तु दुर्लभतरः ।

**न वेद धर्मं किल पद्मयोनिः (६, १७, १२) ।**

किलेति प्रश्नमाह । आभिधानिकास्तु वार्तासंभाव्ययोः किलेत्याहुः ।

**स्त्रिया भर्तरि सुप्रीते कः काम इह चागमः (६, १८, ३२) ।**

अगमः = नास्ति गमः प्राप्तिरस्य । व्युत्पत्तिलभ्येऽस्मिन्नर्थे प्रयोगो न दृश्यते । अगमो गन्तुमशक्तो भवति । अगमोऽग इव वृक्षो भवति पर्वतो वा ।

**शुक्ले मार्गशिरे पक्षे (६, १९, २) ।**

अदन्तः शिरशब्दोऽपभ्रंशः । वर्तमानायां हिन्द्यां 'सिर' इति प्रसिध्यति ।

**विभ्रियात्सर्वकर्माणि पत्न्या उच्चावचानि च (६, १९, १७) ।**

उच्चावचानि = उत्कृष्टापकृष्टानि । उच्चावचं नैकभेदमिति तु कोषः ।

**रजस्तमस्कान् प्रमिणोत्युरुश्रवाः (७, १, ११) ।**

प्रमिणोति हिनस्ति । अन्यत्र प्रमाणीकरोति प्रमिमीते इत्येवार्थः ।

**उपधावनैः (७, २, ६) ।**

उपधावनैः सेवनैः । उपासनाभिः । अपूर्वोऽर्थः ।

**तस्य त्यक्तस्वभावस्य घृणेर्मयावनौकसः (७, २, ७) ।**

अंशुज्वालातरङ्गेषु घृणिः प्रसिध्यति । इह तु दीप्तिरर्थः, दीप्तिमान्वा । वनौकाः सूकरः । अमरस्तु सूकरनामसु नेदं संगृह्णाति । आहायम्—वराहः

सूकरो घृष्टिः कोलः पोत्री किरः किटिः । दंष्ट्री घोणी स्तब्धरोमा क्रोडी भूदार इत्यपि इति ।

**कृत्वा कटोदकादीनि (७, २, १७) ।**

पितृभ्यो देयमुदकं कटोदकम् । इहैव पुराणेऽयं शब्द इदमर्थः ।

**निग्रहसङ्ग्रहे प्रभुः (७, २, ३९) ।**

निग्रहः संहारः । सङ्ग्रहः पालनम् । इहैवायमर्थः ।

**अभिभूः (७, ३, ७) ।**

अभि अभितो भवतीति अभिभूः । लोकेऽभिपूर्वस्य भवतेः प्रसहनमर्थः प्रसिध्यति ।

**भक्षिताङ्गं पिपीलिकैः (७, ३, २२) ।**

पुंसि पिपीलक इत्येव साधु । शनैर्याति पिपीलक इति क्षीरस्वामी परकृतिमुदाहरति । पुराणे लिपिकरप्रमादो वा स्यात् ।

**किमुतानुवशान् साधून् (७, ३, ४६) ।**

अनुवशो वशः, आज्ञाकरः । अनुवश इतीहैव ।

**···आविरभूद् वाणी**
**अरूपा मेघनिःस्वना (७, ४, २४) ।**

अरूपा=अशरीरिणी । इह पुराणेऽन्यत्राप्यस्मिन्नर्थे प्रयोगः ।

**प्रतिमानं प्रकुर्वन्ति किमुतान्ये भवादृशाः (७, ४, ३५) ।**

प्रतिमानं दृष्टान्तः । अत्रार्थे विरलः प्रयोगः ।

**सम्यग् विधार्यतां बालो गुरुगेहे (७, ५, ७) ।**

विधार्यतां रक्ष्यतामवेक्ष्यताम् । विधारणमवलम्बनमवष्टम्भनं भवति ।

**तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया (७, ५, १४) ।**

यदृच्छया=इच्छया । यदृच्छा हि दैवयोगो भवति ।

**कददाः स्म मा नः (७, ५, २८) ।**

किमिदं कददा इति । कत् इति स्वतन्त्रा प्रकृतिर्नास्ति । कोरादेशोऽयमजादावुत्तरपदे तत्पुरुषे विहितः । अस्मासु दोषारोपं मा कृथा इत्यर्थं विवक्षति । कदिति तु कुत्सामाह ।

**देहश्च सर्वसङ्घातो जगत् तस्थुरिति द्विधा (७, ७; २३)।**

तस्थुः स्थावरः। इहैव प्रयोगो नाऽन्यत्र।

**सर्गस्थितिसमाम्नायैः (७, ७, २४)।**

समाम्नायः संहारः। अत्रार्थं इहैव प्रयोगः। शब्द-शक्तिनिरपेक्षः स्वस्येष्टं यं कमप्यर्थं प्रत्याययियिषति। इदमस्य शीलम्।

**अधोक्षजालम्भमिहाशुभात्मनः (७, ७, ३७)।**

आलम्भो मनसा स्पर्शः, चिन्तनम्। अन्यत्राङ्पूर्वो लभिः स्पर्शे वा वर्तते वधे वा।

**स्वे हृदि छिद्रवत्ततः (७, ७, ३८)।**

छिद्रमाकाशम्।

**मुमूर्षूणां हि मन्दात्मन्ननु स्युर्विप्लवा गिरः (७, ८, १२)।**

विप्लवन्त इति विप्लवा विपरीतार्थकाः। कर्तर्यचं स्वीकृत्य प्रयोगः। भावे करणे चापि विप्लवः प्रसिद्धः। राज्यविप्लवः (राज्यभ्रंशः) इत्यत्र भावेऽप्। उडुपः प्लवः कोल इत्यत्र करणे।

**स्तम्भस्य मध्यादनु निर्जिहानम् (७, ८, १९)।**

निःपूर्वो जिहातिरिहैव। उत्पूर्वस्तु प्रसिध्यति।

**प्रचण्डवक्त्रं न बभाज कश्चन (७, ८, ३४)।**

न बभाज सेवितुं समीपं न जगामेत्यर्थ इति कश्चित्। कथमस्यार्थस्य लब्धिः।

**अलक्षितद्वैरथम् (तं हरिम्) (७, ८, ३४)।**

अदृष्टप्रतिकञ्चुकमित्यर्थः। द्वैरथमिति द्विरथप्रयोगे द्वन्द्वे प्रसिध्यति प्रतिद्वन्द्विनं तु नाह।

**गन्धर्वाप्सरचारणाः (७, ८, ३८)।**

अप्सरोऽदन्त इहैव। नूतनशब्दनिर्मितेर्नोद्विजते बत।

**नतो स्म्यनन्ताय दुरन्तशक्तये (७, ८, ४०)।**

दुरन्तशक्तिरनन्तशक्तिः। अत्रार्थे दुरन्तशब्दमसकृत् प्रयुङ्क्ते न च ग्लायति प्रयोक्तुम्।

**तस्योदरान्नखविदीर्णवपाद्य आर्छत् (७, ८, ४४)।**

आर्च्छद् आहृत्यायच्छदित्यर्थो विवक्षितः। स च शब्दमर्यादया दुर्लभः।

**भवता हरे स वृजिनोऽवसादितः (७, ८, ५५)।**

पापशब्दस्य पाप्मवचनस्यार्शआदित्वादप्यभिन्नरूपस्य तद्वति वृत्तिर्यथा भवति तथा वृजिनशब्दस्यापीत्यभिमन्यते। प्रयोगस्तु तथाभूतो नान्यत्र श्रूयते।

**प्रतिमुखस्य यथा मुखश्रीः (७, ९, ११)।**

प्रतिमुखं मुखप्रतिबिम्बम्। विरलः प्रयोगः।

**रूपं नृसिंह विभयाय जनाः स्मरन्ति (७, ९, १४)।**

विभयं भयाभावः। इहैवात्रार्थे प्रयोगः।

**वशीकृतविसृज्यविसर्गशक्तिः (७, ९, २२)।**

विसृज्यानि कार्याणि। विसर्गाः कारणानि। अपूर्वोऽर्थः।

**कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः (७, ९, २५)।**

मृगतृष्णिरिति नितमामप्रसिद्धम्। मन्ये मृगतृष्णिकाशब्दे विद्यमानं काशब्दं कामतस्त्यजति, अप्रसिद्धि चेष्टामधिगच्छति। शब्दस्वरूपस्य विरूपीकरणे रूढोऽस्यानिरुद्धः प्रसरः।

**कामाभिकाममनु यः प्रपतन्प्रसङ्गात् (७, ९, २८)।**

प्रसङ्गः=सङ्गः। प्रसङ्ग आसङ्गो भवति न तु संसर्गमात्रम्।

**यत्त्वमाद्यन्तयोः पृथगवस्यसि मध्यतश्च (७, ९, ३०)।**

अवस्यसि विरामं करोषि। कारणत्वेनावधित्वेन च वर्तस इति भाव इति कश्चित्। अत्रपूर्वस्य षो अन्तकर्मणीत्यस्य नायमर्थः प्रसिध्यति। समाप्तिरथ निश्चयः प्रथेते।

**तद्वै तदेव वसुकालवदष्टितर्वोः (७, ९, ३१)।**

वसुशब्देन वस्तुमात्रं भूतसूक्ष्ममुच्यते। कालवच्छब्देन नीलत्वसाधारण-गुणयोगात्पृथिवी। अष्टिशब्देन बीजं कारणम्। तरुशब्देन च कार्यम्। एवम-प्रसिद्धार्थकपदन्यासेन किं लभ्यते।

**नाविन्ददब्दशतमप्सु निमज्जमानः (७, ९, ३४)।**

निमज्जमानोऽधोऽधो गच्छन्। अन्विच्छन्निति तु तात्पर्यार्थः।

**लोकान् विभावयसि**
**हंसि जगत्प्रतीपान् (७, ९, ३८)।**



विभावयसि पालयसि। अस्थल नायमर्थः प्रसिध्यति।

**भवसम्भवलोपहेतोः (७, ९, ४२)।**

सम्भवः स्थितिः। इतरत्र भवसम्भवौ पर्यायौ।

**नृणां विपर्ययेहेक्षा (७, ११, ९)।**

विपर्यया विपरीता अनर्थिकाः। ईहाश्चेष्टाः। तासामीक्षा पर्यालोचनम् इति कश्चित्। ईहाश्चेष्टाः प्रयत्नः। तासां विपर्यया विपरीतान्येव फलानि भवन्तीत्यस्य ईक्षा मीमांसेति चान्यः। कतरस्य वचः प्रमाणीक्रियेत। अप्रसन्नायां वाचोयुक्तौ विकल्पा जायेरन्निति किमाश्चर्यम्।

**अञ्जनाभ्यञ्जनोन्मर्दस्त्र्यवलेखामिषं मधु (७, १२, १२)।**

स्त्र्यवलेखः स्त्रीकर्मकमालेखनम्। प्रायेण चित्रकर्मण्यालिखतिः प्रयोगमवतरति, उल्लिखतिर्वा। अवपूर्वो लिखिस्त्विहैव।

**अग्निपक्वमथामं वा**
**अर्कपक्वमुताहरेत् (७, १२, १८)।**

आहरेत्=अभ्यवहरेत्। अत्रार्थे तिङन्तस्याङ्पूर्वस्य हरतेर्वृत्तिर्न। आहरणमानयनं भवति।

**सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनुः।**
**मनः संस्पर्शजान्दृष्ट्वाभोगान्स्वप्स्यामि संविशन् (७, १३, २६)।**

तनोतीति तनुः प्रकाशक इति श्रीधरादयः। अत्र किं मानमिति ते प्रष्टव्याः। संविशन् (प्रारब्धं) निर्विशन् इति कश्चित्। एकत्र तिष्ठन्नित्यन्यः। नहि संविशिस्तत्र वर्तते। स तु स्वापे प्रसिध्यति **सुप्तामनुसंविवेश** (रघु० २, २४)। **संविष्टः कुशशयने निशां निनाय** (रघु० १, ९५) इत्यत्र। क्वचित्संभोगे चापि **संविशेदार्तवे स्त्रियम्** (मनु० ३, ४८) इत्यत्र।

**विरक्तो रक्तवत्तत्र नृलोके नरतां न्यसेत् (७, १४, ५)।**

नरतां मनुष्यत्वं पुरुषकारं पुरुषार्थम्। न्यसेत् साधयेत्। यद्येषो विवक्षितोऽर्थः सर्वथाऽवाचके असमर्थे इमे पदे।

**विधर्मः परधर्मश्च आभास उपमा च्छलः (७, १५, १२)।**

उपमा उपधर्मः पाखण्डो दम्भो वा। इहैवात्रार्थे प्रयोगः।

**शब्दभिच्छलः (७, १५, १३)।**

शब्दस्य भिद् भेदोऽन्यथाव्याख्यानम्। भेदो व्याख्यानमित्यपूर्वोऽर्थः।

**सत्त्वं बृहद् बन्धुरमीशसृष्टम् (७, १५, ४१)।**

बन्धुरं बन्धनम्। कोषस्तु बन्धुरं तून्नतानतम् इति।

**पूतं सुरालयारामकूपाजीव्यादिलक्षणम् (७, १४, ४९)।**

आजीव्यशब्देन किं ग्राह्यमिति पुराणकार एव वेदाप्रतर्क्यवचाः। किं कूपारामादय आजीव्या न भवन्ति।

**शास्त्रेण चक्षुषा वेद जनस्थोपि न मुह्यति (७, १५, ५६)।**

जनः शरीरम्। इहैवात्रार्थे प्रयोगः। शब्दार्थेषु न कोषं प्रमाणयति नोत रूढिम्।

**विचुक्रुशुर्दीनधियोऽपरे गजाः**
**पार्ष्णिग्रहास्तारयितुं न चाशकन् (८, २, २८)।**

पार्ष्णिग्रहाः पार्श्वगताः। कोषस्तु पारिपार्श्विकमर्थं नाह। पार्ष्णिग्राहस्तु पृष्ठत इत्यमरः। यः शत्रुर्विजिगीषुं पृष्ठत आस्कन्दति स उच्यते पार्ष्णिग्राह इति तदर्थः।

**योस्मात्परस्माच्च परः (८, ३, ३)।**

अस्मात् स्थूलात् कार्यात्। परस्मात् सूक्ष्मात् कार्यात्। प्रहेलिकाक्षराणि चित्राणि।

**यथा नटस्याकृतिभिर्विचेष्टतो**
**दुरत्ययानुक्रमणः सः (८, ३, ६)।**

दुरत्ययानुक्रमणः=दुरवगमचारित्रः। अन्यत्र दुरत्ययं दुरतिक्रमं भवति। अनुक्रमणं यथासंख्यमानुपूर्व्या पदार्थानुवृत्तिर् भवति।

**चरन्त्यलोकव्रतमव्रणं वने (८, ३, ७)।**

अलोकव्रतं ब्रह्मचर्यादि। शब्दशक्त्यनुत्य ऊहमात्रशरणोऽर्थः।

**नामरूपविभेदेन फल्ग्व्या च कलया कृताः (८, ३, २२)।**

फल्गुः सूक्ष्मा। अन्यत्र फल्गु निःसारं तुच्छं भवति।

**निर्यान्ति संयान्त्यसकृत्स्वरोचिषः (८, ३, २३)।**

संयान्ति अपियन्ति लीयन्ते। संयानं संक्रमणं भवति समुद्रपारगमनं वा।

**छायातपौ यत्र गृध्रपक्षौ (८, ५, २७)।**

छायातपौ अविद्याविद्ये। गृध्रो रागादिमान् जीवः। अहो परोक्षप्रियता।

**आसाञ्चकारोपसुपर्णमेनम् (८, ५, २९)।**

सुपर्णो जीवः। सुपर्ण इति जीवनामधेयमिति बम्भ्रमीति मूलकारः। द्वा सुपर्णा सयुजा सखाया इति श्रुतौ सुपर्णशब्दः साक्षाज्जीवं नाह, शोभनपक्षः शकुन्त इत्येवाह। कामं तात्पर्यतः सुपर्णाविति जीवब्रह्मणी सङ्केतिते भवतः।

**ईशो जनानां प्रजनः प्रजानाम् (८, ५, ३४)।**

प्रजनो जनकः। प्रथमगर्भग्रहणे त्वस्य रूढिः। प्रजने सर्तेः (३, ३, ७१) इत्यत्र तदर्थस्य दर्शनात्।

**लोभोऽधरात् प्रीतिरुपर्यभूत् (८, ५, ४२)।**

उपरि उत्तरोष्ठात्। काममधरः केवलोप्यधरोष्ठमाह। उत्तरशब्दस्तु केवल उत्तरौष्ठं नाह। शब्दशक्तिस्वाभाव्यात्।

**गुणव्यवायेऽप्यगुणं विपश्चितः (८, ६, ११)।**

गुणव्यवायो गुणपरिणामः। लोके तु व्यवायः समवायविरोधिनमर्थं पृथक्त्वं विनाभवमाह, मैथुनं वा व्यवधानं व्यवधायकं वाऽऽह। पुराणकारेण परिगृहीतोऽर्थस्तु न क्वचिद् दृश्यते।

**न त्वां वयं नाथ समुज्जिहानम् (८, ६, १३)।**

समुज्जिहानमाविर्भवन्तम्। उत्पूर्वो जिहातिरूर्ध्वगतौ रूढः, उदये प्रादुर्भावे वा न प्रसिध्यति।

**बद्धाञ्जलीन् संवृतसर्वकारकान् (८, ६, १६)।**

संवृतानि रुद्धानि। कारकाणि इन्द्रियाणि। इयमविवेकोक्तिः। इन्द्रियाणि तु करणानीति प्रसिद्धानि।

**न संरम्भेण सिध्यन्ति सर्वेऽर्था सान्त्वया यथा (८, ६, २४)।**

सान्त्वया मृदुनोपायेन, सामप्रयोगेण, सुकोमलैर्मधुरैर्वचोभिः। इहैव प्रयोगो नान्यत्र।

**मथ्यमानेऽर्णवे सोऽद्रिरनाधारो**
**ह्यपोऽविशत् (८, ७, ६)।**

अपामधः प्रविष्टोऽभवत्। न्यमज्जदित्यर्थः। केवलं प्रवेशो नाभिप्रेतः। अनर्थकत्वात्।

**विसर्पदुत्सर्पदसह्यमप्रति (८, ७, २९)।**

अप्रतिशब्दोऽप्रतीकारेऽर्थे। अपूर्वः शब्दोऽपूर्वश्चार्थः। छन्दसि तु विरोधिरहितं निःसपत्नमर्थमाह, अविरोध्यमिति वा।

**गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यपायान् विभो**

**धत्से सदा स्ववृग् भूमन् ब्रह्मविष्णुशिवाभिधाम् (८, ७, २३)।**

धत्स इत्यावृत्त्या योजनीयम्। पूर्वार्धे विधित्सस इत्यर्थः। उत्तरार्धे धारयसीति। सर्वत्राप्राञ्जलः पन्थाः।

**कत्थन्त उग्रपुरुषं निरतं श्मशाने (८, ७, ३३)।**

कत्थ श्लाघायाम् इत्यस्यास्थाने प्रयोगः। वदन्तीत्येवेहार्थः। विशब्द-त्यागश्चाप्रसिद्धिमुपचिनोति।

**ते नूनमूतिमविदंस्तव हातलज्जाः (८, ७, ३३)।**

हातमित्यप्रसिद्धं दुष्टं च। ओहाङ् गताविति धातुरोदित्। निष्ठायां नत्वं दुर्वारम्।

**ममन्थुस्तरसा सिन्धुं हविर्धानी ततोऽभवत् (८, ८, १)।**

हविर्धानी कामधेनुः। न पूर्वे न च परेऽत्र रूढिं समाश्रयन्ते। **हविर्धानीमृषेर्दर्पात् (९, १५, २६)।** अत्रापि स एवार्थः।

**वीर्यं नपुंसोऽस्त्यजवेगनिष्कृतम् (८, ८, २१)।**

अजः कालः। निष्कृतं बहिष्कृतम्। इहैवाजः कालमाह यथा विवरणकारा विवृण्वते।

**सुमङ्गलः कश्चन काङ्क्षते हि माम् (८, ८, २२)।**

इह पुराणे कश्चेति पदद्वयं कश्चिद् इत्यर्थे बहुलं प्रयुक्तम्।

**निजैकाश्रयतया (८, ८, २३)।**

निज आत्मा। स्वरूपभूतपरमानन्दानुभूतिः। निज आत्मीयो भवति न त्वात्मा। अयमत्र विभ्रान्तो यथेतर एतेन समकक्षाः।

**यथोपजोषं वासांसि परिधायाहतानि ते (८, ९, १५)।**

दिष्टया समुपजोषं चेत्यानन्द इत्यव्ययवर्गेऽमरः। तेन यथेत्यनेनाव्ययी-भावोऽस्थाने।

**वातोद्धूतोत्तरोष्णीषैः (८, १०, १४)।**

उत्तरीयार्थे उत्तरशब्द इह पुराणेऽन्यत्रापि। यथा—**मौञ्ज्या मेखलया वीतमुपवीताजिनोत्तरम् (८, १८, २४)।**

**तेषां पदाघातरथाङ्गचूर्णितादा-**
**योधनादुल्बण उत्थितस्तदा रेणुः** (८, १०, ३८)।

आयोधनं युद्धभूः। नेदमत्रार्थे प्रसिध्यति। आयोधनं युद्धे रूढम्।

**अन्येप्येवं प्रतिद्वन्द्वान् वाय्वग्निवरुणादयः** (८, ११, ४२)।

प्रतिद्वन्द्विन इत्येव प्रसिध्यति।

**वणिक्पथा भिन्ननवो यथार्णवे** (८, ११, २५)।

अत्र वणिक्पथा नैगमा उक्ताः। अन्यत्रापीह पुराणेऽत्रार्थे प्रयोगः—**गजो गृध्रो वणिक्पथः** (११, १२, ६) इत्यत्र यथा। एतदर्थपरिग्रहे पथिशब्देन गड्डुभूतेन नार्थः। अन्यत्र साहित्ये वणिक्पथो विपणिर्भवति हट्टो वा।

**आद्यन्तावस्य यन्मध्यमिदमन्यदहं बहिः।**
**यतोऽव्ययस्य नैतानि तत्सत्यं ब्रह्मचिद् भवान्** (८, १२, ५)।

अस्य जगतः, यौ आद्यन्तौ। यन्मध्यं **स्थितिर्जीवनम्**। यच्च इदं प्रत्यक्षम्। यदन्यदप्रत्यक्षम्। यच्चाहम् **अहङ्कारास्पदं भोक्तृ**। यच्च बहिर्ममकारास्पदं भोग्यम्। तत्सर्वं यतो (भवति)। (यस्य च) अव्ययस्य नैतान्याद्यन्तादीनि सन्ति तत्सत्यं चिद् (-रूपं) ब्रह्म भवानेवेत्यर्थं कश्चिदूहते। अन्योऽन्यथाभ्यूहते—यतो यत्र इदं दृश्यम्, अहं द्रष्टृ, अन्यद् भोक्तृ, बाह्यं भोग्यम् इत्यादि नास्ति इति। शिष्टं पूर्वेण समानम्। शकुन्तस्येवाव्यक्तवाचोऽस्य कवेरभिप्राये नानाभ्यूहा अयोगिनो रुतज्ञानविधुरा विक्लवा व्याख्यातारोऽनुकम्पनीया वराकाः।

**सर्वं तदात्मकतयाऽवगमोऽवरुन्त्से** (८, १२, ११)।

अवगमो बोधो भवति। इह तु बोधस्वरूपो भगवानुच्यते। अवरुन्त्से= जानासि। नायमर्थोऽन्यत्र क्वचिद् दृश्यते।

**आवर्तनोद्वर्तनकम्पितस्तनप्रकृष्टहारोरुभरैः** (८, १२, १९)॥

आवर्तनोद्वर्तने नमनोन्नमने शरीरस्य (कन्दुकक्रीडानिमित्ते)। अपर आह—उद्वर्तनमुत्क्षेपः, उत्फालः। आवर्तनमाकाशमध्ये करेण ग्रहणं (कन्दुकस्य) इति।

**शुष्मिणो यूथपस्येव वासितामनुधावतः** (८, १२, ३२)।

शुष्मी मत्तः। विरलः प्रयोगः। इह पुराणे त्वन्यत्रापि—**कुसुमितावनराजिशुष्मिभृङ्ग—** (१०, २१, २)। मत्तेऽर्थे प्रयोगः।

**हेमजालाक्षनिर्गच्छद् धूमेन (८, १५, १९)।**

जालाक्षं गवाक्षम्। नूतना शब्दप्रक्लृप्तिः।

**उपदेवगीतकैः (८, १५, २१)।**

उपदेवा गन्धर्वादयः। इहैव प्रयोगः।

**तां देवधानीं स वरूथिनीपति-**
**र्बहिः समन्ताद् रुरुधे पृतन्यया (८, १५, २३)।**

पृतन्या सेना। इहैव प्रयोगः। अन्यत्र सेनार्थे पृतनेति प्रसिध्यति। कामं वेदे पृतन्यतीति श्रूयते, पृतन्युरिति च।

**कमण्डलुं वेदगर्भः (८, १८, १६)।**

वेदगर्भो ब्रह्मा। अत्रार्थ इहैव प्रयोगः।

**यस्य प्रमाणं भृगवः साम्पराये (८, १९, २)।**

साम्पराये धर्मसाधने। कोषस्तु—युद्धायत्योः सम्पराय इति। आयतिरुत्तरकालः। उपचारेण परलोकः। तत्सम्बन्धि यत्किञ्चित् साम्परायम्। वस्तुतः छन्दोनुकृतिरेतत्। न साम्परायः प्रतिभाति बालम् इति हि कठाः पठन्ति। अन्येषामपि दृश्यत इति दीर्घः।

**स तन्निकेतं परिमृश्य शून्यम् (८, १९, ११)।**

परिमृश्य=अन्विष्य। परिमर्शोऽन्वेषणं न भवति।

**अज्ञानप्रभवो मन्युरहंमानोपबृंहितः (८, १९, १३)।**

अहंमानोऽहङ्कारः। नूतना शब्दप्रक्लृप्तिः।

**भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा**
**ऋषयो यदासत (८, २०, २१)।**

यद्=यत्र। न हि यदिति यत्रार्थे क्वचिद् दृश्यते। अयं त्वगणितान्वारांस्तत्रार्थे प्रयुङ्क्ते।

**वाण्यां छन्दांसि रसे जलेशम् (८, २०, २७)।**

रसे रसनायाम्। अत्रार्थ इहैव प्रयोगः।

**विद्याधरोसिं शतचन्द्रयुक्तम् (८, २०, ३१)।**

शतचन्द्रं चर्म। अत्रार्थ इहैव प्रयोगः।

**स्वायम्भुवं धाम गता अकर्मकम्** (८, २१, २)।

अकर्मकं काम्यकर्माप्राप्यम्। अन्यत्राकर्मकमविद्यमानकर्मकं भवति। इह पुराणेऽकर्मकमिति कर्मानर्हम् इत्यर्थेपि—**चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम्** (९, ६, ८)। एतन्मांसं कर्मण्युपयोगं नार्हतीति। दुष्टं शिष्टमेतदित्यर्थः।

**अर्थत्वाय कल्पते** (८, २१, १४)।

अर्थत्वमानुकूल्यम्।

**त्वं नूनमसुराणां नः पारोक्ष्यः परमो गुरुः** (८, २२, ५)।

परोक्ष एव पारोक्ष्यः। इहैव प्रयोगः। तद्धितप्रियः कविर्दाक्षिणात्यो द्राविडो वा स्यात्।

**भवद्विपक्षेण विचित्रवैशसं सम्प्रापितः** (८, २२, ८)।

वैशसं यातना। वैशसं कदनं भवति।

**तत्को विचष्टे गतिमात्मनो यथा** (८, २२, १७)।

यथा=याथार्थ्येन=याथातथ्येन=तत्त्वतः।

**कर्तुः प्रभोस्तव किमस्यत आवहन्ति** (८, २२, २०)।

अस्यतः संहरतः। प्रवासनं परासनम् इति तु हिंसार्थे पठिते।

**ब्रह्मन् यमनुगृह्णामि तद्विशो विधुनोम्यहम्** (८, २२, २४)।

विशोऽर्था धनानीति यावत्। कोषादिपारायणिकोपि कथङ्कारमर्थमिमं प्रतीयात्।

**भक्त्य् उद्गलो गद्गदया गिराऽब्रवीत्** (८, २३, १)।

उद्गतं बाष्पं गले यस्य सः। उद्गतबाष्पकण्ठः। उद्बाष्पकण्ठः।

**निमङ्क्ष्यत्यप्ययाम्भोधौ त्रैलोक्यं भूर्भुवादिकम्** (८, २४, ३२)।

भुवस् इति भुवर् इति च द्वे रूपे। भुवश्च महाव्याहृतेरिति शासनात्। अदन्तो भुवशब्दस्त्वस्यैव विदितः।

**यत्सेवयाग्नेरिव रुद्ररोदनम्**

**पुमान् विजह्यान्मलमात्मनस्तमः** (८, २४, ४८)।

रुद्ररोदनं रजतम्। ब्राह्मणेऽर्थवादे रुद्राश्रुभ्यो रजतोत्पत्तिरुक्ता। तां मनसिकृत्य रजतेर्थे रुद्ररोदनमिति प्रयुङ्क्ते परोक्षप्रियः पण्डितः कविः। न चार्थवादं हेतूकृत्य रुद्ररोदनमिति रजतमभिधातुमलम्।

**त्वमर्कदृक् सर्वदृशां समीक्षण: (८, २४, ५०)।**

अर्कदृक् सूर्यवत् स्वत एव दृक् ज्ञानं यस्य । स्वयं प्रकाशक: सूर्यादीनामपि प्रकाशक: ।

**सा त्वं स्पर्धमानानामेकवस्तुनि मानिनि (९, १, ६)।**

स्पर्धमानानां विवदमानानाम् । स्पर्धतिस्तु सङ्घर्षे प्रसिध्यति ।

**श्रूयतां मानवो वंश: प्राचुर्येण परन्तप (९, १, ७)।**

प्राचुर्येण प्राधान्येन संक्षेपेण । प्रचुरस्तु बहुलो भवति ।

**एवं सुरासुरगणाः समदेशकालहेत्वर्थ-**
**कर्ममतयोपि फले विकल्पाः (९, १, २८)।**

विविध: कल्प: फलं येषां ते विकल्पा: केषांचिज्जातम्, केषांचिन्नेति वैषम्यवन्तः । इदम् परं निदर्शनं परोक्षप्रियतायाः पुराणकारस्य । विकल्प इति तत्पुरुष एव प्रसिध्यति न बहुव्रीहिः । किं च । बहुव्रीहित्वे कल्प: फलं चेदनर्थकं फलं तद्भवति । 'फले' इत्यनेन गतार्थत्वात् ।

**सुद्युम्नस्याशयन् पुंस्त्वम् (९, १, ३७)।**

आशयन्नित्यत्राशयशब्दात्तत्करोति तदाचष्ट इति णिचि शतरि च रूपमिच्छति कश्चित् । सत्यं सिध्यति रूपमर्थस्तु न प्रसिध्यति । आशयन्निच्छां कुर्वन्नित्यर्थः स्यात्तथा च पुंस्त्वमित्यत्र द्वितीया कथं स्यात् ।

**विचिन्वन्त्यङ्घ्रिपान् वने (९, ३, ३)।**

विचिन्वन्ति विपश्यन्ति । विचयनमन्वेषणं भवति ।

**ग्रहं ग्रहीष्ये सोमस्य वामप्यसोमपो: (९, ३, १२)।**

सोमपूर्णपात्रं दास्यामीत्यर्थो विवक्षितः । ग्रहणमिह ग्रहणपूर्वके दाने वर्तते । अप्रसिद्धश्चायमुपचार: ।

**प्रत्याचष्ट कुरुश्रेष्ठ द्विजागमनमेव स: (९, ४, ४१)।**

प्रत्याचष्ट प्रत्यैक्षत । छन्दसि चक्षिङ् दर्शनेऽपीति च्छन्दोनुकार्येष कविस्तमर्थमादाय प्रतिपूर्वं चक्षिङं प्रतीक्षणेऽर्थे प्रयुङ्क्ते, इदं च प्रस्मरति प्रतिनियतविषया: शब्दा इति, न हि प्रतिना युक्तश्चक्षिङ् ईक्षतिवत्प्रतीक्षां प्रतिपालनमर्थमाचक्षीत ।

**दुर्वासा यमुनाकूलात् कृतावश्यक आगतः (९, ४, ४२)।**

आवश्यकं नित्यकृत्यम् । रूढिस्त्वस्य मल-त्याग इति सर्वस्य विदितोर्थः ।

**गुहां विविक्षुः प्रससार मेरोः (९, ४, ५०)।**

प्रससार विदुद्राव । प्रसरतिरग्रतो गमने प्रसिध्यति । कण्डितगात्रसन्धेर्मे न पाणिपादं प्रसरतीति शाकुन्तले यथा । विततीभावेपि—प्रसरति कश्मला किंवदन्तीत्यत्रोत्तरे रामचरिते यथा ।

**कुतोऽन्यत् कालविद्रुतम् (९, ४, ६७)।**

कालविद्रुतं कालेन विद्रुतमनुगतम् । मृत्युनाक्रान्तं विनश्वरमित्यर्थः । विपूर्वस्य द्रवतेरनुगमनमर्थो दुष्परिग्रहो विरोधात् ।

**स एवं जगत्त्राणखलप्रहाणये**
**निरूपितः सर्वसहो गदाभृता (९, ५, ९)**

निरूपितो नियुक्तः । अपूर्वोऽर्थः शब्दशक्त्याऽत्यन्तदुर्लभः । असकृच्चेहात्रार्थे निपूर्वो रूपिः प्रयुक्तः ।

**ययौ विहायसामन्त्य ब्रह्मलोकमहैतुकम् (९, ५, २२)।**

हेतुः प्रयोजनं प्रयोजकमस्य स हैतुकः । स न भवत्यहैतुकः । निष्काम-कर्ममात्रलभ्य इत्यर्थः, स्वयं सिद्धोऽयत्नसिद्ध इत्यर्थस्तु विष्फुरेन्नाम । हैतुकाः शुष्कतर्कनिष्ठा न विद्यन्ते यत्रेत्यहैतुका इति च कश्चित्प्रलपति ।

**रथीतरस्याप्रजस्य भार्यायां तन्तवेऽर्थितः (९, ६, २)।**

तन्तुः सन्तानः पुत्रः । उपनिषदि प्रजातन्तुं मा विच्छेत्सीरिति श्रूयते । केवलस्तन्तुस्तु क्वचिदपि प्रजार्थे न श्रूयते ।

**स तु विप्रेण संवादं जापकेन समाचरन् (९, ६, १०)।**

जापको ज्ञानदः । सोऽयमर्थोऽप्रसिद्धः । अस्य तु प्रसिद्धः ।

**सुतास्ते च जज्वलुः (९, ६, २३)।**

जज्वलुर्दग्धा बभूवुः । ज्वलतिर्दीप्तौ वर्तते न दहने भस्मीकरणे । अत एवाग्निर्ज्वलतीत्याहुः, काष्ठानि ज्वलन्तीति नाहुः ।

**इन्द्रो देशिनीमवात् (९, ६, ३१)।**

प्रदेशिनीशब्द एव तर्जनीमाह न तु प्रशब्दविरहितः सः । अयं च कोषकारैरप्यसङ्गृहीतः ।

**यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ।**

**सर्वं तद् यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते (९, ६, ३७) ।**

यावद् उदेति=यत उदेति । यावत् प्रतितिष्ठति=यत्रास्तमेति । इमं कविं प्रति शब्दानां न लौकिकः कश्चिदर्थोऽस्ति । ते नाम तं तमर्थं ब्रुवन्ति यं यम् अयमिच्छति ते ब्रूयुरिति ।

**वली पलित एजत्कः प्रत्युदाहृतः (९, ६, ४१) ।**

एजत्कः कम्पमानशिराः । प्रत्युदाहृतः प्रत्युक्तः प्रत्याख्यातः । अत्रार्थे ऽन्यत्रापीह प्रयोगः ।

**मुनिः प्रवेशितः क्षत्त्रा कन्यान्तःपुरमृद्धिमत् (९, ६, ४३) ।**

क्षत्त्रा प्रतिहारेण । क्षत्तृशब्दः सारथौ प्रसिद्धः । छन्दसि प्रतिहारेपि—यथा अथर्व० ९, ६, ४९, वा० सं० ३०, १३ इत्यत्र । छन्दोनुकारि एष कविः ।

**स कदाचिदुपासीन आत्मापह्नवमात्मनः ।**
**ददर्श ... ... ... ... ... ... ... ... (९, ६, ४९) ।**

आत्मापह्नवम् आत्मापहारम् । सत्त्वभ्रंशम् इति विवक्षति । आत्मापहारस्तु स्वरूपाच्छादनं भवति । अन्यथा सतोऽन्यथा सत्सु भाषणम् ।

**पितामहेन प्रवृतो यौवनाश्वश्च तत्सुतः (९, ७, १) ।**

प्रवृतः पुत्त्र इति वृतः । प्रपूर्वो वृङ् इहैव ।

**भूतादौ तं महात्मनि (९, ७, २६) ।**

इह महत्तत्त्वं महात्मेत्युक्तः ।

**और्वेण जानतात्मानं प्रजावन्तं निवारिता ।**

अनुमरिष्यती महिषीति प्रकृतम् । आत्मा शरीरम् ।

**हन्यतां हन्यतां पाप इति षष्टिसहस्रिणः (९, ८, ११) ।**

षष्टिः सहस्राणीति वक्तव्ये मत्वर्थीय इनिरस्थाने । षष्टिसहस्रसंख्या परिच्छेदकतयाऽस्त्येषाम् । इत्थम्भूते रभसाद् व्याख्यानेपि इनिनाधिकेन कोऽभ्यधिकोऽर्थोऽभिधीयते इति बुद्धि नोपारोहति । यावदर्थं शब्दप्रयोग इत्यभियुक्तोक्तिरनादृता नूत्नशब्दनिर्मित्सया प्रयुक्तेन कविवरेण ।

न साधुवादो मुनिकोपभर्जिता
नरेन्द्रपुत्रा इति सत्त्वधामनि (९, ८, १३)।

सत्त्वधामनि विषये नेदं साधूच्यते। अन्यत्रेह पुराणे साधुवादः कीर्त्यर्थे पठितः।

न पश्यति त्वां परमात्मनोऽजनः (९, ८, २२)।

अजनोऽजो ब्रह्मा।

अद्य नः सर्वभूतात्मन् कामकर्मेन्द्रियाशयः (९, ८, २७)।

आशयो मूलम्। अत्रार्थेऽन्यत्र विरलः प्रयोगः।

कथ्यतां न रहो यदि (९, ९, १९)।

रह इत्यव्ययमेकान्ते रूढम्, अनव्ययं चापि। रहसि भवं रहस्यं तु नाह। रहस्यं गोपनीयं चेह विवक्षितम्।

वसिष्ठस्तदनुज्ञातः (९, ९, ३८)।

तदनुज्ञातः=तेन प्रार्थितः। तत्रार्थेऽनुपूर्वो जानातिर्न क्वचिदन्यत्र दृष्टः। अनुज्ञातोऽनुमतो भवति।

महीमकृत यस्त्रिरराजबीजाम् (९, १०, ७)।

त्रिरिति त्रिसप्तकृत्व इत्यर्थे प्रयुक्तम्, तत्र चेदमशक्तम्। अशक्ति च कवेर्व्यनक्ति।

मारीचमेवाशु विशिखेन यथा कमुग्रः (९, १०, १०)।

कः प्रजापतिर्ब्रह्मा भवति, न तु प्रजापतिविशेषो दक्षः। उग्र इति रुद्रे रूढो न तत्पारिषदे वीरभद्रे।

दग्ध्वाऽऽत्मकृत्यहतकृत्यम् (९, १०, १२)।

प्रहेलिकाप्रियोऽयं कविः किं विवक्षतीति नाना वर्णयन्ति विवरीतारः। कश्चिदाह—आत्मनो रामस्य कृत्यं प्रयोजनं सीतानिर्मोक्षरूपम्, तदर्थं (रावणेन सह युद्धे) हतं कृत्यं पौरुषं यस्य तं जटायुम्। अपर आह—आत्मनः स्वस्य कृत्येन सीतार्थं कृतेन पौरुषेण हतानि विनष्टानि कृत्यानि सञ्चितानि कर्माणि यस्य तम् इति।

भयगीर्णघोषः (९, १०, १३)।

भयेन गीर्णः स्तम्भितो घोषो येन सः। अर्थोऽप्रसिद्ध उपसर्गस्य नेस्त्यागोऽप्यप्रसिद्धः। धातुपाठे गॄ निगरणे इत्यर्थनिर्देशे निःपठितः साहचर्याव्यभिचाराभिव्यञ्जनाय।

**जहि विश्रवसोऽवमेहम् (९, १०, १५)।**

अवमेह उच्चारः पुरीषम्। अन्यत्र तु कस्यचिदुपरि मेहनमवमेहो भवति।

**निर्भज्यमानधिषणध्वजहेमकुम्भश्रृङ्गाटका (९, १०, १७)।**

धिषणं वेदिकास्थानम्। अत्रार्थ इहैव प्रयोगः।

**गोमूत्रयावकं (भ्रातरम्)।**

गोमूत्रपक्वयवान्नभोजिनम् इत्यर्थ इति टीकाकाराः। श्रुतान्यक्षराणि तु नेममर्थमर्पयन्ति।

**पारमेष्ठ्यान्युपादाय पण्यान्युच्चावचानि (९, १०, ३९)।**

पारमेष्ठ्यानि राजार्हाणीति श्रीधरः। परमेष्ठी राजानमाहेत्यत्र प्रमाणं मृग्यम्।

**स यैः स्पृष्टो वा संविष्टो वाऽनुगतोपि वा (९, ११, २२)।**

संविष्ट उपवेशितः कृतसहवासो वा। संविशिर्निद्रायां प्रसिध्यति।

**रेमे स्वाराममधीराणामृषभः (९, ११, ३५)।**

आत्माराम इति प्रसिद्धं शिष्टैः प्रचुरं प्रयुक्तं शब्दं विहाय नूतनं कल्पयति प्रसिद्धिद्वेषात्।

**सुमित्रो नाम निष्ठान्तः (९, १२, १५)।**

निष्ठा वंशस्थितिः, तस्या अन्तोऽवधिभूतः। यद्वा नामनिष्ठान्त इत्येकं पदम्। नामनिष्ठयोर्वाच्यवाचकयोरन्तो नाशो यस्मात्सः। तस्मात्परोऽन्यो न भविष्यतीति तात्पर्यार्थः। एकत्र निष्ठा वंशस्थितिः, अपरत्र निष्ठा वाच्योऽर्थ इति चित्रीकरणोऽर्थविकल्पो निष्प्रमाण इति हेयः।

**हतास्म्यहं कुनाथेन नपुंसा वीरमानिना (९, १४, २८)।**

अहो नूतनशब्दनिर्माणे रभसोऽस्य कवेः। पूर्वैर्नूतनैश्च समं प्रयुक्तं प्रसिद्धं नपुंसकमिति शब्दरूपं परिहृत्य वाचामीशोऽहम् इत्यहङ्कृतोऽपूर्वं शब्दरूपं कल्पयति नपुंस् इति।

**इति वाक्यसायकैर्विद्धः प्रतोत्रैरिव कुञ्जरः (९, १४ ३०)।**

प्रतोदेऽर्थे प्रतोत्रमित्यप्रसिद्धम्। तोत्रमित्येव प्रसिद्धम्।

**··· मुनिरर्हणमाहरत्। ससैन्यामात्यवाहाय**
**हविष्मत्या तपोधनः (९, १५, २४)।**

हविष्मती कामधेनुः। अत्रार्थ इहैव प्रयोगः।

पित्रोपशिक्षितो रामः (९, १६, १)।

उपशिक्षित आदिष्टः। उपदिष्ट इति वा। विरलः प्रयोगः।

आगामिन्यन्तरे राजन् वर्तयिष्यति वै बृहत् (९, १६, २५)।

बृहद् ब्रह्म वेदं प्रवर्तयिष्यतीत्याह। बृहच्छब्देन केवलेन न क्वचिद् वेद उच्यते।

वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् (९, १८, २६)।

प्रत्यनीका विरोधिनः (देवाः)। तेषु विवक्षितम् अभिप्रायः (जयेच्छा) यस्य तम्।

स इत्थमाचरन्कामान् स्त्रैणोऽपह्नवमात्मनः (९, १९, १)।
बुद्ध्वा ... ... ... ... ... ... ... ...

अपह्नवः=तिरस्कारः, अन्यथाभावः।

आसेवितं वर्षपूगान् षड्वर्गं विषयेषु सः।
क्षणेन मुमुचे ... ... ... ... ... ... (९, १९, २४)।

षड्वर्गं षडिन्द्रियसुखम्। आसेवितमनुभूतम् इति प्रथमः कल्पः। अत्र विषयेष्विरत्यनन्वितमिव भवति। यद्वा विषयेषु आसेवितं सेवां कारितं षड्-इन्द्रियवर्गं मुमुच उपेक्षाञ्चक्रे। अयमपि सदोषो विकल्पः। यद्यासेवितमिति णिजन्तान्निष्ठायां रूपं तदा षड्वर्गादनुक्ते कर्तरि तृतीया स्याद् विषयाच्च कर्मणि द्वितीया। यद्वा विषयेषु आ=सम्यक् सेवितमासक्तिर्यस्येति भावे क्तः। अर्श आदित्वादच्। तादृशमपि षड्वर्गं मुमुचे। इन्द्रियाधीनो न बभूवेत्यर्थः। आसेवितशब्दस्य सम्प्रतीतोऽर्थः षड्वर्गेण नाक्लेशेनान्वेतीति क्लिश्नाति विवरीतॄन् नानाभ्यूहांश्च कारयति।

विधुतत्रिलिङ्गः (९, १९, २५)।

त्रिलिङ्गं त्रिगुणकार्यं लिङ्गं शरीरम्। तद् विधुतं येन, सः। अहो व्यामोहकः वाचां संक्षेपः।

मेने प्रस्तोभमात्मनः (९, १९, २६)।

प्रस्तोभ उपालम्भः, निर्वृत्तिमार्गे प्रोत्साहनं वा। अन्यत्र च्छन्दः-पूर्त्यर्थमनर्थकपदप्रक्षेपः प्रस्तोभ उच्यते।

रेतोधाः पुत्रो नयति नरदेव यमक्षयात् (९, २०, २२)।

रेतोधाः=वंशस्य कर्ता। अपि वा स्वदेहोपादानत्वेन पितू रेतो धत्त इति रेतोधाः। इदं हास्यम्। पुत्रो हि पितू रेतसो जायते न तु तद् धारयति। कामं स्त्री (जननी) पुंसः पत्युर्वीर्यमात्मनि धत्ते।

**मृगाञ्छुक्लदतः कृष्णान् हिरण्येन परीवृतान् (९, २०, २८)।**

मृगान् हस्तिनः। इदमस्य केवलस्य स्वप्नसन्दर्शनम्।

**अग्निः साचीगुणे चितः।**

**सहस्रं बद्वशो यस्मिन्ब्राह्मणा गा विभेजिरे (९, २०, २७)।**

साचीगुणे प्रकृष्टगुणवति प्रदेशे। बद्वशः=महत्या संख्यया।

**लोकपालाख्यमैश्वर्यम् (९, २०, ३३)।**

आख्या समन्तात् ख्यातिः। आख्यासमाख्ये समानार्थके संज्ञाया अभिधाने।

**वियद्वित्तस्य (९, २१, ३)।**

वियतो गगनादिवायत्नादुपस्थितं वित्तं धनं यस्य सः। क्लेशलभ्योर्थः।

**स योगी गवि भार्यायां**
**विष्वक्सेनमधात् सुतम् (९, २१, २५)।**

गौः सरस्वती सरस्वतीनाम्नी, तस्याम्। गौरिति वाङ्नामसु पठितम्। वागिति सरस्वत्याः शारदाया नामान्तरम्। अवाक्पराया अपि पत्न्याः सरस्वत्या अर्थे गौरिति प्रयोगः परोक्षप्रियताया निदर्शनम्।

**अभवच्छन्तनू राजा प्राङ् महाभिषसंज्ञितः (९, २२, १३)।**

महाभिष इत्यदन्तं शब्दरूपमिहैव। मन्ये छन्दोवशात्ककारं लुम्पति।

**शन्तनुर्ब्राह्मणैरुक्तः परिवेत्तायमग्रभुक् (९, २२, १५)।**

दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते। परिवेत्ता स विज्ञेयः...इति परिवेत्तृलक्षणेन शन्तनुर्न परिगृह्यते। कथं तर्हि शन्तनौ परिवेत्तृपदव्यवहारः।

**शन्तनोर्दाशकन्यायां जज्ञे चित्राङ्गदः सुतः।**
**विचित्रवीर्यश्चावरजो नाम्ना चित्राङ्गदो हतः (९, २२, २०-२१)।**

तस्य सनाम्ना चित्राङ्गदेन गन्धर्वेण हत इति विवक्षति। अक्षरन्यासस्तु प्रहेलिकाकल्पः। नहि नामसनामनी समानार्थके इति पांसुलपादहालिकोपि वेद।

**बुभुजेऽक्षय्यषड्वसु (९, २३, २६)।**

षट्शब्दः षडिन्द्रियाण्याह। वसु च तद्विषयम् इति कः कथमूहेत।

**हयमेधशतस्य याट् (९, २३, ३४)।**

याट्=यष्टा। कामं सिध्यति रूपम् प्रयोगस्तु न प्रसिध्यति।

**कृत्वाऽतरन् वत्सपदं स्म यत्प्लवाः (१०, १, ५)।**

यत्रेतरे गोष्पदमिति प्रयुञ्जते तत्रायं वत्सपदम्। द्वेष्टि खल्वयं प्रसिद्धिम्।

**वासुदेवः कृतोद्वहः (१०, १, २९)।**

उद्वह इति कर्तर्यचि सिध्यति, वहनस्य कर्तारं चाह, कुलोद्वह इत्यत्र यथा। प्रकृते घञन्त उद्वाह एव युक्तः। उद्वहनमर्थ इति।

**व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति (१०, १, ४०)।**

व्रजन् व्रजिता गन्ता पुरुषः। शुद्धे कर्तरि तृच्प्रयोक्तव्यो ण्वुल्वा। अन्यथा व्रजन्नित्यनर्थकं स्याद् गच्छतीत्यनेन गतार्थत्वात्।

**यथा तृणजलूकैवं देही (१०, १, ४०)।**

जलूकेति दुर्घटम्। जलौका इति सकारान्तं शास्त्रदृष्टं प्रसिद्धं च। जलौकस इति च बहुवचनान्तं प्रसिध्यतितराम्। ऊक इति स्वतन्त्रा प्रकृतिर्नास्ति।

**एवं विमृश्य तं पापं यावदात्मनिदर्शनम् (१०, १, ५२)।**

आत्मा बुद्धिः। निदर्शनं ज्ञानम्। उभयोप्यप्रसिद्धोऽर्थः।

**किमकार्यं कदर्याणाम् (१०, १, ५८)।**

कदर्या अधमाः। कदर्या मितम्पचा इति तु रूढिः।

**काष्ठा यथानन्दकरं मनस्तः**
**(बाधार)··· ··· ··· ··· ···(१०, २, १८)।**

काष्ठा पूर्वा दिक्। मनस्त इति मनसो जातं चन्द्रमसम्। चन्द्रमा मनसो जात इति श्रुतिमाश्रित्य चन्द्रं मनस्तः (जातम्) इत्याह। बुद्धिव्यामोहाय जातमिति पदमपि जहाति।

**यशः श्रियं हन्त्यनुकालमायुः (१०, २, २१)।**

अनुकालमिति यथार्थेऽव्ययीभावः। कालस्य योग्यं कालानुसारितयेत्यर्थः स्यान्नतु तत्कालं सद्य इति विवक्षितार्थो लभ्येत। विभक्त्यर्थे वीप्सार्थे वाऽव्ययीभावेऽपि मनागप्यसङ्गतार्थता नापैति।

**गीर्भिर्वृषणमैडयन् (१०, २, २५)।**

वृषन्निति नकारान्तं प्रातिपदिकमिन्द्रमाह, न तूपेन्द्रं विष्णुम्। विष्णुश्चेह स्तूयते स्मेति नार्थवद् वचो भवति। छन्दोनुकारि एष कवि रिति वा षपूर्वस्य निगमे (६, ४, ९) इत्युपधाया वा वृद्धिमातिष्ठति।

**भवत्पदाम्भोरुहनावमत्र निधाय याताः (१०, २, ३१)।**

इह भक्तिमार्गं प्रवर्त्येत्याह। पदाम्भोरुहपदेन चरणारविन्दयोर्भक्ति-रुच्यत इति कल्प्यम्। सा च नौरिति रूप्यते। तस्या निधानं प्रतिष्ठापनम्, तदाचर्येति विवक्षति। अक्षराणि तु नैतमर्थं स्फोटयन्ति।

**देवक्रियायां प्रतियन्त्यथापि (१०, २, ३६)।**

क्रियेति व्यापारमात्रं चेष्टासामान्यमाह। तेनार्थेनेह गृहीतेन वाक्यार्थो न स्फुटति। अतो नानोहन्ते विवरणे बद्धपरिकराः—कश्चिदाह—क्रियायां भगवदुपासनायाम् इत्यर्थः। अपरः क्रियासु दैवतार्चादिषु। इतरः क्रियासु त्वल्लीलासु इति।

**निशीथे तम उद्भूते (१०, ३, ८)।**

तम उद्भूते तमसा व्याप्ते। उद्भवो व्याप्तिं नाहेत्याशङ्क्य निशीथेतम इति सप्तमीपूर्वपदमेकं पदमिति कल्पयति। घकालतनेषु कालनाम्न इति पूर्वपदे सप्तम्या अलुकं च पश्यति।

**श्रीवत्सलक्ष्मम् (१०, ३, ९)।**

लक्ष्मन्निति नान्तं क्लीबं प्रसिद्धम्। अयं त्वदन्तं तत् कल्पयति।

**…त्विषा परिष्वक्तसहस्रकुन्तलम् (१०, ३, १०)।**

कुन्तलः केशवचनो भवति नालकवचनः। इह चालकेऽर्थे प्रयोगः। तत्र चूर्णकुन्तल इति वर्तत इति विस्मरति।

**अस्पृशन्मुदा द्विजेभ्योऽयुतमाप्लुतो गवाम् (१०, ३, ११)।**

तौदादिकः स्पृशिर्दानेऽर्थे न प्रसिध्यति। ण्यन्तः स्पृशिरेव तत्र प्रसिध्यति। गां स्पृशतीत्युक्ते गां ददातीति न कश्चित्प्रत्येति। दानेऽर्थे ण्यन्तस्यैव प्रयोगः पूर्वैः कृतो दृश्यते स्मृत्यादिषु। यथा—आत्मनं स्पर्शयेद्यस्मै (मनु० ९, १७७)। काव्येषु खल्वपि—शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोध्नीः (रघु० २, ४९) इत्यत्र च यथा।

**अहो भगिन्यहो भाम मया वां बत पाप्मना (१०, ४, १५)।**

भाम=हे भगिनीभर्तः। तत्र आवुत्त इति प्रसिध्यति। भामशब्दस्तत्रार्थे इहैव। मया पाप्मना पापकृता। पापशब्द अर्श आदित्वात्तद्वति तदात्मनि पापकृति प्रसिद्धः, न तु तथा पाप्मा। अयं त्विममपि बलात्तत्र प्रवर्तयति।

**भुवि भौमानि भूतानि यथा यान्त्यपयान्ति च (१०, ४, १९)।**

भूमिर्मृदित्यर्थः। भौमानि मृन्मयानि घटादीनि।

**इत्युक्त्वाऽश्रुमुखः पादौ श्यालस्वस्रोरथाग्रहीत् (१०, ४, २३)।**

इह भगिनीपतिः श्याल उक्तः। भारते वर्षे कस्मिन्प्रदेशे एष व्यवहार इति मृग्यम्।

**मुक्तकच्छशिखाः केचित् (१०, ४, ३४)।**

मुक्ता विकीर्णाः कच्छशिखाः कतिपयकचा येषामिति कश्चित्। कच्छा वस्त्रग्रन्थय इत्यन्वितार्थप्रकाशिकाकारः। स च तत्र प्रमाणं नोद्धरति।

**वसुदेव उपश्रुत्य भ्रातरं नन्दमागतम्।**
**ज्ञात्वादत्तकरं राज्ञे ययौ तदवमोचनम् (१०, ५, २०)।**

अवमुच्यते शकटादिर्यत्र तदवमोचनमावसथः। इहैवात्रार्थे प्रयोगः।

**ददर्श तल्पेऽग्निमिवाहितं भसि (१०, ६, ७)।**

भस्मनि सकारान्तं भस् इति प्रातिपदिकमस्य कवेरुपज्ञा।

**वादित्रगीतद्विजमन्त्रवाचकैः (१०, ७, ४)।**

द्विजमन्त्रवाचकैः=द्विजकर्तृकैर्मन्त्रवचनैः। अस्थाने ण्वुल्।

**ते (द्विजातयः) चान्वयुञ्जत (१०, ७, १६)।**

अनुपूर्वो युजिः पृच्छायां वर्तते। इह तु सोऽर्थो न सङ्गच्छते। पश्चाद-युञ्जत (आशिषः) इति केचित् कल्पयन्ति। वाक्येऽनुः स्वतन्त्रा प्रकृतिर्न प्रयुज्यते। बाढं तदनु, अनुगमनम्, अनुरथम् इत्यादिषूत्तरपदं वा सन्प्रयोगमवतरति।

**अहो बतात्यद्भुतमेष रक्षसा**
**बालो निवृत्तिं गमितोऽभ्यगात् पुनः (१०, ७, ३१)।**

निवृत्तिं विनाशं गमितो लम्भितः। अभ्यगात् प्रत्यगात्। पुनर्जीवित-मापदित्यर्थः। तत्रार्थेऽप्रसिद्धिं निशाम्यान्यथा कल्पयति कश्चित्—अभ्यगाद् अभिमुखमागात्। अभि भयरहितं यथा स्यात्तथाऽगादिति वा। प्रत्यावर्तने आभिमुख्यस्य निर्भयताया वा क्वोपयोगः।

**दिष्टचा स्वबन्धून्प्रणयन्समागतः (१०, ७, ३२)।**

प्रणयन् प्रीणयन् उज्जीवयन्। प्रपूर्वस्य नयतेर्नायमर्थः प्रसिद्धः।

**महद् विचलनं नृणां गृहिणां**
**दीनचेतसां निःश्रेयसाय (१०, ८, ४)।**

विचलनं संचारः, गतागते। विचलनं स्थानविशेषात्प्रच्युतिर्भवति अन्यथाकरणं संख्यान्तरापादनं वा। **अधिकरणविचाले च** (पा० ५, ३, ४३) इत्यत्र यथा।

**घोषप्रघोषरुचिरम् (१०, ८, २२)।**

घोषाः कटिपादभूषणानि किङ्किण्यः। अपि वा घोषाणां घोषस्थानां

गोपानां प्रघोषः प्रकृष्टो घोषः। किङ्किण्यर्थे किं सानम् ।

**मर्काय कामं ददतं शिचि स्थितम् (१०, ९, ८)।**

मर्कटेर्थे मर्कः शिक्यार्थे शिगित्युभे शब्दरूपे अप्रसिद्धे। मन्ये मर्क इति स्वेच्छाकृतो मर्कटस्य संक्षेपः। शिक्यार्थे शिक्छब्दप्रयोग इह, अन्यत्रापि (१०, ९, १३)।

**नायं सुखापो भगवान् देहिनां गोपिकासुतः (१०, ९, २१)।**

किमिदं सुखाप इति। सुखेनाप्यत इति। आप्यत प्राप्यत इत्यापः। अकर्तरि च कारके संज्ञायाम् इति कर्मणि घञ्। पश्चात्कर्तृकरणे कृता बहुलम् इति समास इति कश्चित्। आप इति स्वतन्त्रा घञन्ता प्रकृतिर्नास्तीति नेक्षते सः।

**स भवान्सर्वलोकस्य भवाय विभवाय च (१०, १०, ३५)।**

भवाय=उद्भवाय=समुन्नतये। विभवाय रक्षायै इति कश्चित्। विगतो भवः संसारो यस्मिंस्तस्मै विभवाय मोक्षायेत्यर्थ इत्यपरः। एतादृक्षाः परोक्षार्थकाः शब्दा यत्नकल्पिता व्युत्पत्तयश्चास्याः कृतेः पुराणत्वं हरन्ति।

**पुत्र मज्जनमावह (१०, ११, ८)।**

आवह=आचर। अत्रार्थे आङ्पूर्वस्य वहेः प्रयोगो न दृश्यते। आवहिर्जनने वर्तते यथा—**तद्धरति वहत्यावहति भाराद्वंशादिभ्यः** (पा० ५,१,५०) सूत्रे। अमूमावह, अमूमावह इति याज्ञिकाः पठन्ति। अत्राकारणायां सः।

**सव्यासव्ये नगोदरे (१०, १२, २१)।**

नगोदरे गिरिदर्यौ। उदरं दरीगुहेत्यपूर्वोऽर्थः।

**दीनांश्च मृत्योर्जठराग्निघासान् (१०, १२, २७)।**

घासान् ग्रासानिति विवक्षति। कोषस्तु घासो यवसमित्याह।

**अभ्याननाः फुल्लदृशो व्रजार्भकाः (१०, १३, ८)।**

अभ्याननाः=अभिमुखाः। प्रसिद्धि प्रद्वेष एवास्य प्रयोगस्य कल्पनायां कारणम्।

**ऊचे कृष्णोऽस्य भीभयम् (१०, १३, १३)।**

अस्य=अस्य जगतः। भीभयं भयस्यापि भयावहम्। इदमा जगदिदं परामृशति यत्र पूर्वे ब्राह्मणादीनां प्रवक्तारः पृथिवीमिदमा निर्दिशन्ति, पृथिवीशब्दं च नोच्चारयन्ति।

**मित्राण्याशान्मा विरमत (१०, १३, १३)।**

आशो भोजनम्। आश इति प्रातराशः, सायमाश इत्यादिषु प्रसिध्यति, केवल आशशब्दस्तु न क्वचिदन्यत्र श्रूयते।

**उभयायितमात्मानं चक्रे विश्वकृदीश्वरः (१०, १३, १८)।**

उभयशब्दादाचारे क्यङ्, ततः क्तः। अथवा उभयं=वत्सत्वं बालकत्वं च। अयितं प्राप्तम् इत्युभयायितम्। क्लेशलभ्यौ शब्दार्थौ।

**सायं गतो यामयमेन माधवः (१०, १३, २३)।**

यामानां दिवसप्रहराणाम्। यमेन=तत्तत्क्रीडयोपरमेण=अतिक्रमेण=अत्ययेन। यमशब्द उपरामे। यमशब्दो नियमे वा। तत्तत्क्रीडानियमेन वा। यामोऽन्त्यप्रहरः, तत्र यो गृहागमननियमः, तेनेति वाऽर्थः। इत्थं विमूढधियष्टीकाकारा अभ्यूहन्ते न च विशिष्य वक्तुं पारयन्ते। पराऽस्य कुकवेः परोक्षप्रियता ऋतिकरा।

**गोपास्तद्रोधनायाससौध्य-लज्जोरुमन्युना (१०, १३, ३२)।**

मुधाभावो मौध्यम्। सिध्यति रूपं प्रयोगस्तु न प्रसिध्यति।

**केयं (माया) वा कुत आयाता दैवी वा नार्युतासुरी (१०, १३, ३७)।**

नारी=नरस्येयम्। मनुष्यकृता। अन्यत्र दुर्लभः प्रयोगः।

**मायाशये शयानः (१०, १३, ४१)।**

शयः शय्या शयनीयम्। अधिकरणेऽच्। इहैव प्रयोगः। शय इति तु पाणौ रूढः। कर्तर्यचि तु गर्तशयः, कुशेशयम्, पार्श्वशयः, उत्तानशय इत्यादिषूपपदसमासेष्वेव दृश्यते।

**ऐश्यं निहन्ति (१०, १३, ४५)।**

ऐश्यम् ईश्वरभावम्, सामर्थ्यम्। इहैव पुराणे प्रयोगः।

**परत्राजातोऽतन्निरसनमुखब्रह्मकमितौ (१०, १३, ५७)।**

कं शिरः। ब्रह्मकाणि श्रुतिशिरांसि वेदान्ताः।

**वृन्दावनं ... ... समाप्रियम् (१०, १३, ५९)।**

सन्ततानि आ समन्तात् प्रियाणि वस्तूनि यत्र। मा लक्ष्मीस्तत्प्रियो भगवान्, तेन सहितमिति वा। प्रथमे पक्षे प्रादेर्बहुव्रीहेर्विधायकं न पश्याम इत्यस्य दुर्बलत्वम्। द्वितीयस्मिन्क्लिष्टा कल्पना।

**नैसर्गदुर्वैरा: (१०, १३, ६०) ।**

निसर्गेऽर्थे नैसर्गशब्द: । तद्धितप्रिय: कवि: ।

**तेषामसौ क्लेशल एव शिष्यते (१०, १४, ४) ।**

क्लेशल:=क्लेशो दु:खं कष्टम् । इहैव प्रयोग: । नार्थो रूपसिद्धचा । स्वमनीषिकया हि कल्पितमिदं शब्दरूपम् ।

**क्वेदृग्विधाविगणिताण्डपराणुचर्या-**
**वाताध्वरोमविवरस्य ते महित्वम् (१०, १४, ११) ।**

अत्राण्ड इति ब्रह्माण्डेऽर्थे, पराणुरिति परमाणावर्थे, वाताध्वेति वातायनेऽर्थे प्रसिद्धिं प्रद्विषतोऽस्य प्रयोगा धीरानपि स्मेरमुखानाचरन्ति ।

**योगेश्वरोतीर्भवतस्त्रिलोक्याम् (१०, १४, २१) ।**

ऊतीर्लीला: ।

**तरणाविवाहनी (१०, १४, २६) ।**

अहनी रात्र्यहनी (न त्वहर्द्वयम्) । अह:शब्देन रात्रिरप्युच्यते यथा अहश्च कृष्णमहरर्जुनं चेत्यृग्वर्णे इति चेत् । न । तत्रार्जुनकृष्णशब्दसमभिव्याहारादह्नोरात्रस्य प्रतीति:, न तु केवलोऽह-:शब्द: क्वचिद्रात्रिमाचष्टे ।

**असन्तमप्यन्त्यहिमन्तरेण**
**सन्तं गुणं तं किमु यन्ति सन्त: (१०, १४, २८) ।**

किमाहायं मूक: । अहिमन्तरेण सर्पापवादमन्तरेण, मिथ्यार्थभूतस्याहेर्बाधं विनेत्यर्थ इति कस्य चिद् भागवतस्याभ्यूह: । अक्षरार्थस्तु नैतं समर्थयते । गुणं यन्ति रज्जुं प्रतियन्ति जानन्ति । केवल उपसर्गेणासहचरित इण् गताविति धातुर्ज्ञानेऽनुभवे न क्वचिद् विलोक्यते ।

**जानन्त एव जानन्तु (१०, १४, ३८) ।**

इति वाक्यार्थं वक्ता स्वयमपि वेद न वा वेदेति विशय: । एवमत्र ग्रन्थग्रन्थि विस्रंसयति कश्चित्—ये जानीमो वयमित्याहुस्ते जानन्तु नामेत्यर्थो विवक्षित इति । नामेति संभावनायाम् ।

**वृष्णिकुल-पुष्कर-जोषदायिन् (१०, १४, ४०) ।**

जोषो विकास: । अन्यत्र दुर्लभोऽर्थ: ।

**वत्सान् गृणन् (१०, १४, ४७) ।**

गृणन् नामभिराकारयन् । गॄ शब्दे इति धातुश्छन्दसि स्तवने वर्तते बाहुलकेन । नामादेशमाकारणायां तु न लोके न च वेदे प्रयुक्तो दृश्यते । सोऽयमर्थोऽस्यैव विदित: ।

**स्व-स्वकात्मनि (स्नेहः) (१०, १४, ५१)।**

आत्मनीत्येतावतैव विवक्षितार्थावगतौ सत्यां स्वस्वकाभ्यामतिरिक्ताभ्यां शब्दाभ्यां किमतिरिक्तमुच्यते।

**सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः (१०, १४, ५७)।**

भवत्यस्मादिति भावः कारणम् प्रधानं प्रकृतिः, तद्रूपोऽर्थः। नहि भावः कारणे प्रसिध्यति।

**धन्येयमद्य धरणी ... ... ...**

**गोप्योन्तरेण भुजयोरपि यत्स्पृहा श्रीः (१०, १५, ८)।**

भुजयोः (कृष्णबाह्वोः) अन्तरेण मध्येन कृत्वाऽऽलिङ्गनं प्राप्य गोप्यो धन्याः, यत्स्पृहा यद्भुजान्तरे यदालिङ्गने श्रीरपि स्पृहावतीत्यर्थं विवक्षति लोहलः कविः। किमुक्तं भवतीति यत्नादूह्यं भवति।

**व्यपतद् विषोदे (१०, १६, ६)।**

विषोदे विषयुक्त उदके। उदशब्दः स्वतन्त्रा प्रकृति र्नास्ति। अयं त्वसकृत्तथाभूतं प्रयुङ्क्ते।

**गाढरशनो व्यपतद् विषोदे (१०, १६, ६)।**

गाढा दृढं बद्धा रशना येन सः। नहि गाहतिर्बन्धने प्रसिध्यति।

**क्रीडन्तमप्रतिभयम् (१०, १६, ९)।**

अप्रतिभयम्=निर्भयम्=निःशङ्कम्। इह प्रतिभयं भयेन समानार्थकं प्रयुक्तम्। तत्रार्थेऽस्य विरलः प्रयोगः। प्रतिभयं भयंकरं भवति।

**शमलस्य भर्तुः (मोक्षेप्सवः साध्व्यः) (१०, १६, ३२)।**

शमलमपराधः। उच्चारावस्करौ शमलम् इति त्वमरः।

**... ... यो बलिः। वानस्पत्यः (१०, १७, २)।**

वनस्पतेर्वृक्षस्याधस्तात् तन्मूले वर्तमान इत्यर्थः। प्राग्दीव्यतीयेष्वर्थेषु नायमन्तर्भवति। ण्यप्रत्ययः कृतोऽर्थस्तु तत्कृतो न विचारितः।

**शश्वत्तच्छीकरर्जीषद्रुममण्डलमण्डितम् (१०, १८, ४)।**

ऋजीषाः स्निग्धाः (द्रुमाः)। आभिधानिकानामप्यविदितोऽयमर्थः। अमरस्तु ऋजीषं पिष्टपचनमित्याह।

**न विद्यते यत्र वनौकसां दवः (१०, १८, ५)।**

दवः सन्तापः। वने च वनवह्नौ च दवो दाव इहेष्यत इति तु कोषः। एष रूढि प्रत्यनादरः।

**द्रवत्पुरीष्याः (१०, १८, ६)।**

पुरीष्यं पङ्कः। अयं च न प्रसिध्यति लोकवेदयोः।

**कदाचित् स्पन्दोलिकया (१०, १८, १५)।**

भुजौ दोलीकृत्य तया दोलया तामारुह्य दोलाम् आन्दोलनेनेति कश्चिदूहतेऽव्यक्तवाक्। अयं शब्दो न क्वाप्यन्यत्र श्रूयते। कविघटित एषः।

**समीरितः सारथिना (वनधूमकेतुः) (१०, १९, ७)।**

सारथिर्वायुः। वायुरग्नेः सखा भवतीति सत्यम्। तेन साहचर्यमाचरंस्तं वर्धयति। इत्थंलक्षणः सोऽग्निः सारथिरिति युज्यते वक्तुम्। न च केवलः सारथिशब्दो वायुमाचष्टे।

**तपः कृशा देवमीढा आसीद् वर्षीयसी मही (१०; २०, ७)।**

तपः कृशा ग्रीष्मतापेन निदाघघर्मेण कृशा। अत्रार्थे सान्तं तपो न प्रसिध्यति। वर्षीयसी पुष्टाङ्गा। वर्षीयसी तु वृद्धतरा भवति। वृद्धा नाम जीर्णाङ्गी भवति। वृद्धतरा जीर्णाङ्गितरा। देवमीढा इत्यपि पर्जन्याभिषिक्तेत्यर्थेऽप्रसिद्धम्।

**धनिनामुपतापं च (ददुः) (१०, २०, १२)।**

उपतापं सन्तापं दुःखम्। उपतापस्तु रोगे रूढः।

**व्योम्नोऽब्दं भूतशाबल्यं भुवः पङ्कमपां मलम्।**
**शरज्जहार ... ... ... (१०, २०, ३४)।**

भूतशाबल्यम् जीवजन्तु-भूमानम्। नाना-जीव-व्यतिकरम्। इहैव प्रयोगः।

**उदहृष्यन् वारिजानि सूर्योत्थाने कुमुद् विना (१०, २०, ४७)।**

कुमुदमिति प्रसिध्यति। क्विबन्तं कुमुद् इति त्विहैव। अन्यत्रापीह क्विबन्तस्यास्य प्रयोगः, यथा उत्क[illegible]कुमुद्गणवान् (३, २३, २८) इत्यत्र।

**पुरग्रामेष्वाग्रयणैरैन्द्रियैश्च महोत्सवैः (१०, २०, ४८)।**

इन्द्रदेवताको महोत्सव ऐन्द्रिय इत्युक्तः। इन्द्रिये भवमैन्द्रियमैन्द्रियकमिति वा प्रसिध्यति।

**सख्युर्व्यधात्स्ववपुषाऽम्बुद आतपत्रम्**

**कुसुमावलिभिः सह ... ... (१०, २१, १६)।**

का इमाः कुसुमावलयः कुतस्त्याश्चेति न स्पष्टम्। कश्चिदाह शीकररूपा इति। अपर आह देवैः कृताः पुष्पवृष्टय इति।

**पूर्णाः पुलिन्द्यः (१०, २१, १७)।**

पूर्णाः कृतार्थाः। पूर्णमनोरथा इति वक्तव्य उत्तरपदलोपं करोति।

**निर्योगपाशकृतलक्षणयोः (१०, २१, १९)।**

निर्युज्यन्त एभिरिति निर्योगा गोदोहनकाले गोपादबन्धनार्था रज्ज्वः। अत्रार्थ इहैव प्रयोगः।

**भगवानाहता वीक्ष्य (दारिकाः) (१०, २२, १८)।**

आहता आगताः। आङ्पूर्वस्य हन्तेर्गत्यर्थस्य प्रयोगः। हन्तेर्गत्यर्थस्तु हंसशब्दे दृश्यते नान्यत्र। आहतं प्रहृतं गुणितं पठितं वा भवति। गत्यर्थे प्रयोगस्तु दृष्यते साहित्याचार्य्यैः।

**क्षुद्राशा भूरिकर्माणो बालिशा वृद्धमानिनः (१०, २३, ९)।**

आशाऽऽशयोऽभिप्रायः। क्षुद्रे स्वर्गादावेव आशामात्रं येषां त इति च कश्चित्। उत्प्रेक्षामात्रलभ्योऽर्थः।

**श्यामं हिरण्यपरिधिम् (कृष्णम्) (१०, २३, २२)।**

हिरण्यं हिरण्यवर्णं परिधानं यस्य तम्। इह परिधिः परिधानेऽर्थे प्रयुक्तम्। धातूपसर्गसाम्येपि कृत्प्रत्ययकृतो विशेषो न लक्षितः कविना।

**अहो पश्यत नारीणामपि कृष्णे जगद्गुरौ।**

**दुरन्तभावम् ... ... ... ... ... ... (१०, २३, ४१)।**

दुरन्तः सर्वबाधको भावोऽनुरागः। उभे अपि पदे अप्रसिद्धिनिहते।

**आत्मबोधापवर्गेण (१०, २३, ४६)।**

अपवर्गस्त्यागः। नानार्थकोऽपवर्गशब्दस्त्यागं नाह।

**स्वयम्भराणामुरुभारजन्मनाम्** (१०, २७, ९)।

स्वयम्भरा आत्मपोषणपराः। अयं च दुर्लभोऽर्थः। स्वयम् इत्यात्मनेत्यर्थे प्रथते। तेनात्मकृतं भरणं येषां न तु परकृतमिति विपरीतार्थः प्रतीयेत।

**गावस्तदा गामनयन् पयोद्रुताम्** (१०, २७, २५)।

द्रुतां द्रुतताम् आर्द्रताम्। द्रुतता द्रवावस्था भवति नार्द्रता सिक्ता वा।

**अद्य मे निभृतो देहः** (१०, २८, ५)।

सफलभरण इति विवक्षति। कश्चिदाह निभृतः पूर्णकाम इति। कामं निभृतः पूर्णमाह धात्वर्थसमाश्रयेण, पूर्णकामं तु नाह।

**प्रियं प्रियाया इव दीर्घदर्शनः** (१०, २९, २)।

दीर्घात्कालाद् दर्शनं यस्य, चिरदृष्ट इत्यर्थः। प्रसिद्धिस्त्वस्यान्यत्र। दीर्घं पश्यत मा ह्रस्वमित्यादौ सूत्रकारवचने योऽर्थः स ग्राह्यः।

**अवदद्वदतां श्रेष्ठो वचःपेशैर्विमोहयन्** (१०, २९, १७)।

वचः पेशैः=वाक्यखण्डैः। इहैव प्रयोगः।

**जुगुप्सितं च सर्वत्र औपपत्यं कुलस्त्रियाः** (१०, २९, २६)।

उपपतेः कर्म भावो वा औपपत्यम्। जारकर्म जारभावो वा। उभय पुरुषनिष्ठं न तु स्त्रीगतम्। स्त्री तु जारिणी भवति। तस्या जारिणीत्वमुपपद्येत नौपपत्यम्। सर्वथाऽस्थाने प्रयोगः।

**विखनसार्थितो विश्वगुप्तये** (१०, ३१, ४)।

विखना ब्रह्मा। इहैव प्रयोगः। आभिधानिकानामप्यविदितः।

**पदाम्बुजं कृणु कुचेषु नः कृन्धि हृच्छयम्** (१०, ३१, ७)।

कृती वेष्टने इति रुधादेः कृन्धीति रूपम्। स चासमर्थश्छेदनमभिधातुम् इति नेक्षते कविः।

**नीलकुन्तलैर्वनरुहाननम् बिभ्रत्** (१०, ३१, १२)।

वनरूहं पद्मम्। सत्यं वनमिति जलमाह, तथापि वनरुहमित्यब्जे न प्रसिध्यति।

**पतिसुतान्वयभ्रातृबान्धवान्** (१०, ३१, १६)।

अन्वयाः=अन्विताः सुतसम्बन्धिनः श्यालादयः।

त्यज मनाक् च ··· ··· ··· ··· ···

स्वजनहृद्रुजां यन्निषूदनम् (१०, ३१, १८)।

यद्रुजां निषूदनमौषधं तत् कार्पण्यं त्यक्त्वा किंचिद् देहीति विवक्षति।

मुहुरतिस्पृहा मुह्यते मनः (१०, ३१, १८)।

अतिस्पृहा=अतिस्पृहया। स्पृहेर्भावे क्विप्, ततस्तृतीया। क्विबन्तः स्पृट्छब्दः क्व लभ्यते। क्विबन्त एव चेह स्वीकार्यो भवति। अन्यथा भवतीत्यध्याहृत्य वाक्यभेदोऽभ्युपगम्यो भवति।

··· तद् व्यथते न किं स्वित्।

कूर्पादिभिः (१०, ३१, १९)।

कूर्पाः तीक्ष्णाग्रसूक्ष्मपाषाणाः। इहैव पुराणे (१०, ८७, १८) कूर्पशब्दः शर्कररजःस्वर्थे प्रयुक्तः।

घ्नतीवैक्षत् कटाक्षेपैः सन्दष्टदशनच्छदा (१०, ३२, ६)।

अत्र कटाक्षक्षेपेऽपाङ्गवीक्षिते कटाक्षेप इत्युपज्ञा कवेः। शब्दान्करोत्यसतः समुत्पादयतीति शाब्दिक इत्यभिमन्यते, न तु शब्दान्सतो व्याकरोति व्युत्पादयत्यन्वाचष्ट इति स इति विजानाति।

पुलकाङ्गी (१०, ३२, ८)।

पुलकिताङ्गीति वक्तव्ये पुलकाङ्गीत्याह वैचित्र्याय परिहार्यं व्यधिकरणबहुव्रीहिं च संश्रयते।

कुण्डलत्विषमण्डितम् (१०, ३३, १३)।

अदन्तस्त्विष इहैव।

गन्धर्वपालिभिरनुद्रुताऽऽविशत् (१०, ३३, २३)।

गन्धर्वाणां पतयो गन्धर्वपाः। तत्सदृशा अलयो गन्धर्वपालयः।

सिषेव आत्मन्यवरुद्धसौरतः (१०, ३३, २६)।

सौरतं चरम-धातुः। सौरतानि सुरतसम्बन्धिनो हावभावादय इति वा। पूर्वत्रार्थेऽसन्तोषात् प्रमाणविरहाद्विकल्पयत्यन्वितार्थप्रकाशिकाकारः।

हृद्रोगमाश्वपहिनोति धीरः (१०, ३३, ४०)।

अपहिनोति=अपनुदति, अपाकरोति। इहैव प्रयोगः।

**बद्धमल्लपरिबर्हविडम्बः (१०, ३५, ६)।**

परिबर्हो वेषः। कोषस्तु परिच्छदे नृपार्हेऽर्थे च परिबर्हमाह।

**जातहर्ष उपरम्भति विश्वं (वेणुरवेण) (१०, ३५, १२)।**

उपरम्भति निनादयति नादेन पूरयति। अभि रभी शब्दे इति भ्वादिष्वनुदात्तेतौ पठितौ। शब्दसामान्ये पठितावपि गवादीनां नादे वर्तेते— **रम्भन्ते गाव इति**। प्रकृत उपशब्दस्य क उपयोगः।

**छायया च विदधत् प्रतपत्रम् (१०, ३५, १३)।**

प्रतपत्रम्=आतपत्रम्। इहैव प्रयोगः। अभूतपूर्वशब्दनिर्माणे प्रसिद्धि-प्रद्वेष एव प्रयोजकः।

**सवनशस्तदुपधार्य सुरेशाः (१०, ३५, १५)।**

सवनशः समये समये। समयार्थस्तु कोषकारैरपि न संगृहीतः।

**वर्ष्मधुर्यगतिः (१०, ३५, १६)।**

वर्ष्मणा धुर्यो महान् गजः, तस्य गतिरिव गतिर्यस्य सः। वर्ष्म देह-प्रमाणयोः। धुर्यशब्दस्तु गजं नाह। धुर्योऽश्वादिर्भवति। धुरं वहतीति। न हि गजो धुरि नियुज्यते।

**गुणगणार्णमनुगत्य हरिण्यः (१०, ३५, १९)।**

अर्ण इत्यूच्यूर्मि वा ओघं वाह। लोके त्वस्य प्रयोग एव नास्ति। अत्र पुराणेऽयं नार्थविशेषमाह।

**मन्दवायुरुपवात्यनुकूलम् (१०, ३५, २१)।**

उपवाति=वाति। नार्थ उपेन। **शतपथे** (१३, ३, ८, ६) उपवाति-रुपध्मानेर्थे प्रयुक्तः।

**मुखं गुडालकावृतम् (१०, ३८, ९)।**

गुडालकः केशपाशः। इहैव प्रयोगः।

**भगवांस्तमभिप्रेत्य (१०, ३८, ३६)।**

तम् अभिप्रेत्य=तस्याभिप्रायं ज्ञात्वेत्यर्थः। अयमर्थोऽन्यत्र न प्रसिध्यति।

**अहो अस्मदभूद् भूरि पित्रोर्वृजिनमार्ययोः (१०, ३९, ६)।**

वृजिनं कष्टम्। वृजिनं कौटिल्यं दौष्ट्यं छद्म वा भवति। प्रायेण छन्दसि प्रयोगः।

**अक्रूरश्चोदयामास कृतमैत्रादिको रथम् (१०, ३९, ३२)।**

मैत्रं मित्रदेवताकं सन्ध्यावन्दनादिकर्म। अयमर्थ इहैव पुराणे। मैत्रं प्रसाधनं स्नानम् (मनु० ४,१५२) इत्यत्र मैत्रं पुरीषोत्सर्गमाह। कुल्लूकभट्टश्चेम-मर्थमुपपादयन्नाह—मित्रदेवताकत्वान्मैत्रः पायुः, तद्भवत्वान्मैत्रं पुरीषोत्सर्ग इति।

**ताम्रारकोष्ठाम् (१०, ४१, २०)।**

आरं पित्तलम्। अत्रार्थ इहैव प्रयोगः। आरकूटं तु प्रसिध्यति। मन्य आरमित्यारकूटस्यैच्छिकः संक्षेपः।

**काश्चिद् विपर्यग्धृतवस्त्रभूषणाः (१०, ४१, २५)।**

विपर्यग्=विपर्यस्तम्। विपरीतम्। इहैव प्रयोगः।

**अकृतोपमज्जनः (१०, ४१, २६)।**

स्नानेऽर्थ उपमज्जनमिहैव।

**अभ्यवर्षन्सौमनस्यैः (१०, ४१, २९)।**

सुमनसः (कुसुमानि) एव सौमनस्यानि। स्वार्थे ष्यञ्। इहैव प्रयोगः।

**स्रग्गन्धैरभ्युपायनैः (१०, ४१, ३०)।**

उपग्राह्यमुपदोपायनमिति सर्वस्य विदितं नाम। अभिनाभ्युचितं तन्न कस्यापि।

**रजकं कञ्चिदायान्तं रङ्गकारम् (१०, ४१, ३२)।**

रङ्गकारो यो वस्त्ररञ्जनमपि करोति। रङ्गस्तु रङ्गस्थलमाह। रज्यत्यस्मिन्प्रेक्षकसमाज इति।

**अपश्यत् कुवलयापीडं कृष्णोऽम्बष्ठप्रचोदितम् (१०, ४३, २)।**

अम्बष्ठो हस्तिपकः। अमरस्यायमर्थोऽविदितः। स हि वैश्याद्विप्रायां जातं सुतमाह। मानवे धर्मशास्त्रे याज्ञवल्क्यस्मृतौ च स्मर्यत इत्यदोषः।

**मृत्युर्भोजपतेर्विराडविदुषाम् (१०, ४३ १७)।**

विराट् प्राकृतः पुरुषः। अत्रार्थ इहैव प्रयोगः।

**न सभां प्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन्।**
**अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुते॥ (१०, ४४, १०)॥**

**दृग्भिः पिबन्त्यनुसवम् (१०, ४४, १४)।**

सवः कालः। अनुसवमनुकालं नित्यम्। अत्रार्थ इहैव प्रयोगः।

**धन्या व्रजस्त्रिय उरुक्रमचित्तयानाः (१०, ४४, १५)।**

उरुक्रमे यच्चित्तं तेनैव यानं सर्वविषयप्रवृत्तिर्यासां ताः। अपूर्वो यानार्थः।

**भगवद्गात्रनिष्पातैः (१०, ४४, २०)।**

निष्पाताः प्रहाराः। सत्वरचेष्टितानीत्यन्यः।

**सम्यक् सम्पादितो वत्स**
**भवद्भ्यां गुरुनिष्क्रयः (१०, ४५, ४७)।**

गुरुनिष्क्रयो गुरुदक्षिणा। निष्क्रयणं बद्धस्य कस्यचिद् धनं दत्त्वा निर्मोक्षणं भवति। मूल्यं निर्वेशः क्षतिपूर्त्यै समर्पितं वित्तं वापि निष्क्रय उच्यते।

**यथा भ्रमरिका दृष्टया भ्राम्यतीव महीयते (१०, ४६, ४१)।**

मही ईयत इति छेदः। प्रतीयत इत्यर्थः। अन्तरेण प्रतिं केवलेन ईङा इणा वा नायमर्थः प्रत्याय्यते।

**गोप्यः समुत्थाय निरूप्य दीपान् (१०, ४६, ४४)।**

निरूप्य=प्रदीप्य। शब्दशक्तिमनादृत्य स्वस्य मनीषितेर्थे प्रयोगः।

**जानीमस्त्वां यदुपतेः पार्षदं समुपागतम् (१०, ४७, ४)।**

पार्षदो दूत इति कश्चित्। सेवक इत्यन्यः।

**अपि च कृपणपक्षे ह्युत्तमश्लोकशब्दः (१०, ४७, १५)।**

कृपणं दयनीयं जनं पक्षयतीति कृपणपक्षः (कृष्णः)। अन्यत्र विरल उपपदसमास एषः।

**व्यसृजदकृतचेताः (१०, ४७, १६)।**

कृतं चेतयते जानातीति कृतचेताः कृतज्ञः। अत्रार्थे कोषकारा नेदं संगृह्णन्ति।

**किं नु सन्धेयमस्मिन् (१०, ४७, १६)।**

सन्धेयं विश्वास्यम्। कुतोऽस्यार्थस्योपलब्धिः।

**तदलमसितसख्यैः (१०, ४७, १७)।**

इहासितः कृष्णवर्णः कृष्णो देवकीनन्दनोऽभिप्रेतो न तु प्रसिद्धोऽसितो दैवलः।

**कुलिकरुतमिवाज्ञाः कृष्णवध्वो हरिण्यः (१०, ४७, १९)।**

कुलिको व्याधः। अत्रार्थं इहैव प्रयोगः। (याज्ञ० २, २३३) इत्यत्र कुलिको जातिरुक्तः।

**उत्तमश्लोकसंविदम् (१०, ४७, ४८)।**

संविद् रहसि संवादः । विस्रम्भालापः । अन्यत्र दुर्लभोर्थः ।

**श्रेयस्तनोत्वगदराज इवोपयुक्तः (१०, ४७, ५९) ।**

अगदराजोऽमृतम् । अत्र किं मानम् । क्वान्यत्रेदं पठितम् ।

**निकामस्त्वयि नोऽविवेकः (१०, ४८, २२) ।**

निकामः स्वाभिप्रायानुकूलः । कामं प्रकामं पर्याप्तं निकामेष्टम् इति त्वमरः । निकामोऽभिप्राय इच्छा । यथा निकामे निकामे नः पर्जन्यो वर्षतु इति वाजसनेयिनां संहितायाम् ।

**देवाः स्वार्था न साधवः (१०, ४८, ३०) ।**

स्वोऽर्थो येषां ते स्वार्थाः । अन्यत्र स्वार्थस्तत्पुरुषः प्रसिध्यति ।

**अच्छूरिकावर्तभयानकाः (१०, ५०, २७) ।**

अच्छूरिकाश्चक्राणि चर्माणि वेति टीकाकृतः । इहैव प्रयोगः । नेदं संस्कृतम् । एतद्देशे कतमस्मिन् विभागेऽस्य व्यवहारो भूदिति मृग्यम् ।

**वाक्यैः पवित्रार्थपदैर्नयनैः प्राकृतैरपि (१०, ५०, ३४) ।**

प्राकृतैर्लौकिकैः ।

**प्रत्यापत्तिमपश्यन्ती द्विजस्याचिन्तयत्तदा (१०, ५३, २२) ।**

प्रत्यापत्तिः प्रत्यागमनम्, निवृत्तिः । अत्रार्थं इहैव प्रयोगः । अन्यत्र (पा० ३, १, २६ वार्तिके, पा० ८, ४, ६८ सूत्रे वृत्तौ) प्रत्यापत्तिः स्वरूपप्रतिलम्भमाह । आपस्तम्बे क्वचिच्छुद्धिं प्रायश्चित्तमप्याह ।

**शुश्रूषतामव्यलीकमस्माकम् (१०, ५१, ३१) ।**

अव्यलीकं यथार्थम् ऋतमित्यर्थः । भिद्यते हि व्यलीकमलीकात् ।

**उत्सार्य वामकरजैरलकान् (१०, ५३, ५४) ।**

करजैरङ्गुलिभिः । करजाः कररुहा नखा भवन्ति नाङ्गुलयः ।

**स्वैः स्वैर्बलैः परिक्रान्ताः (१०, ५४, १) ।**

परिक्रान्ता वेष्टिताः परिगताः । परिपूर्वः क्रमिः प्रदक्षिणीकरणे रूढः परितः क्रमणे च । वेष्टनं तु न क्वचिदाह ।

**फल्गुतन्त्रैर्यदुभिः (१०, ५४, १५) ।**

तन्त्रं सैन्यम् । इहैवात्रार्थे प्रयोगः ।

**द्वास्सु परामृष्टरम्भापूगोपशोभिताम् (द्वारकाम्)** (१०, ५४, ५७)।

परामृष्टा उच्छ्रिता आरोपिताः । अत्यन्तमप्रसिद्धोर्थः । कोषकारैरप्यसङ्गृहीतः ।

**कोन्वयं नरवैदूर्यः** (१०, ५५, ३१)।

नरवैदूर्यः=नररत्नम् । जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयत इति रत्नशब्द एवोत्कृष्टवचन उत्तरपदं प्रयुज्यते न तु तद्विशेषवचनो वैदूर्यादिरपि ।

**रमास्पदबिम्बबिम्बे (प्रद्युम्ने)** (१०, ५५, ४०)।

रमास्पदं श्रीकृष्णः । तस्य बिम्बं शरीरम् । तस्य बिम्बं प्रतिबिम्बं प्रद्युम्नः । एकत्र बिम्बं शरीरम् आह अपरत्र बिम्बं प्रतिबिम्बमाह । सत्यं वाचि स्वतन्त्रः कविः ।

**तन्मातरो यदभजन् रह रूढभावाः** (१०, ५५, ४०)।

रहोऽभजन्नित्यन्वयः । रह इत्यविभक्तिकनिर्देश इति कश्चित् ।

**ज्ञात्वाद्य गूढं यदुषु त्वां यात्यजः प्रभो** (१०, ५६, ८)।

अजः सूर्यः । अत्रार्थ इहैव प्रयोगः ।

**कुल्यकरणे** (१०, ५७, १)।

कुलोचितव्यवहारायेत्यर्थः । **अन्यत्रेह पुराणे वृत्तीश्चकुल्याः** (७, ६, १२) इत्यत्र कुलपरम्परागतेर्थे कुल्यशब्दप्रयोगः ।

**इन्द्रेण हृतच्छत्रेण हृतकुण्डलबन्धुना ।**
**हृतामराद्रिस्थानेन ज्ञापितो भौमचेष्टितम्** (१०, ५९, २)॥

इह सर्वमाकुलम् । यथास्थिते हृतच्छत्रादीनि समानाधिकरणानि विशेषणानि इन्द्रं विशिंषन्तीति प्रतीति र्जायते सा चानिष्टा । हृतं छत्रं येन स हृतच्छत्र इन्द्रः, तेनेन्द्रेणेति प्रतीति र्भवन्ती न वार्यते । हृतं छत्रं यस्येति विग्रहेप्यनिष्टप्रसक्तिर्दुर्वारा । न ह्यैन्द्रं छत्रं हृतमित्यभिप्रेयते किन्तर्हि वारुणम् । एवममराद्रिस्थानहरणेऽपीन्द्रस्य कर्तृत्वं भायान्न च तदिष्यते । हृतच्छत्रादिषु विशेषणेषु सत्सु किं तच्छत्रहरणादिव्यतिरिक्तं चेष्टितं यद्भगवान् कृष्ण इन्द्रेण ज्ञापितः । वस्तुत हृतच्छत्रादीनि दुःश्लिष्टानि पदानि नेन्द्रेण श्लिष्यन्ति न च भौमेनासुरेण । तृतीयाप्रयुक्तिः सर्वथाऽस्थाने । यत्सत्यं कामितार्थप्रवेदने सुतमामक्षमोऽयं कविः । मात्रर्थे [illegible] प्रयोगो यानियन्त्रण-प्रयोगज्ञतामस्य निदर्शयति ।

**निकृत्तबाहूरुशिरोध्रविग्रहम् (१०, ५९, १६)।**

शिरोधरार्थे शिरोध्र इति प्रयोगः। मूलविभुजादित्वात् क्वाचित्केन केन रूपसिद्धिमिच्छति, पुंस्त्वं चालौकिमापादयतीति गण्डस्योपरि पिटका संवृत्ता।

**ययोरात्मसमं वित्तं जन्मैश्वर्याकृतिर्भवः (१०, ६५, १०)।**

भव उत्पत्तिर्वय इति यावत्। आय इत्यन्ये।

**गेहयोर्ज्योतिरक्रियाः (१०, ६०, २०)।**

गेहयोर्गेहदेहयोः। एकशेषः केन ?

**तेषां विभो समुचितो भवतः समाजः (१०, ६०, ३८)।**

समाजः सम्बन्धः। सेव्यसेवकलक्षणः। अत्रार्थे दुर्लभः प्रयोगः। वराहमिहिरकृतायां बृहत्संहितायां संसर्गे संयोगेर्थे समाजो दृश्यते नाम।

**यो वै भजन्तमुपयात्यनृतापवर्गः (१०, ६०, ४३)।**

अनृतं मिथ्याभूतः संसारः। तस्मादपवर्गो निवृत्तिर्यस्मात् सः (कृष्णः)। व्यधिकरणबहुव्रीहिः।

**रहोहरो मे प्रस्थापितः (१०, ६०, ५५)।**

रहोहरो रहस्यसन्देशहरः।

**°सौरतमन्नशौण्डैः (अनङ्गबाणैः)।**

शौण्डैः पुष्टैः। कामं शौण्डश्चतुर इत्युपचर्यते, अक्षशौण्ड इत्यत्र यथा। प्रगल्भे परिपुष्टे वाऽस्य प्रवृत्तिर्न दृष्टा।

**सहस्रबाहुर्वाद्येन ताण्डवेऽतोषयन्मृडम् (१०, ६२, ४)।**

कः कथं प्रतीयादत्र सहस्रबाहुशब्देन बाणोऽभिप्रेत इति। नेतः प्राक् सहस्रबाहुरिति तस्य बाणस्य नामान्तरं वा विशेषणं वा प्रयुक्तम्।

**त्रिलोक्यां यदि भाव्येत (१०, ६२, १८)।**

भाव्येत प्राप्येत, सोऽयमिति प्रत्यभिज्ञायेत। अन्यत्र दुर्लभोऽर्थः।

**जन्मैतत्ते भारहाराय भूमेः (१०, ६३, २७)।**

हरणं हारः। भारस्य हारो भारहारः, तस्मै। हार इति भावघञन्तोऽन्यत्र न श्रूयते। अन्यत्र भारहारो भारस्य हर्तोच्यते। यथा स्थाणुरयं भारहारः किलाभूत् (नि० १, १८, १) इत्यत्र।

**यस्य…विसर्गः। प्रजापतिः (१०, ६३, ३६)।**

विसर्गो मेढ्रं शेपः शेफः शिश्नम्। अपूर्वोऽर्थः।

**विभावयामो भुवनानि सप्त (१०, ६३, ३७)।**

विभावयामः पालयामः।

**अभ्युद्यतः पौरसुहृद्द्विजातिभिः (१०, ६३, ५२)।**

अभ्युद्यतः=अभ्युद्यातः। अभ्युत्पूर्वस्य यमेर्नायमर्थः क्वचित् प्रसिध्यति।

**विधुन्वंस्त्रिशिखं ज्वलत् (१०, ६६, ३३)।**

त्रिशिखं त्रिशूलम्। विरलः प्रयोगः।

**स हेलयामास कपिर्भ्रूक्षेपैः सम्मुखादिभिः (२०, ६७, १३)।**

विभीषिकानिमित्तं कृतैर्मुखविकारैरित्यर्थः। स चाक्षरार्थाद् विदूरे।

**वासांस्यस्फालयत् (१०, ६७, १५)।**

अस्फालयत् आकृष्यापाटयदिति श्रीधरः।

**सोऽपविद्धः कुरुश्रेष्ठ कुरुभिर्यदुनन्दनः (१०, ६८, ८)।**

अपविद्धः=अपकर्मणा अन्यायेन विद्धः। अपविद्धस्त्यक्तो भवति।

**समुन्नतं दक्षिणतो गङ्गायामनुदृश्यते (१०, ६८, ५४)।**

गङ्गायामनुदृश्यते गङ्गां प्रति निम्नं दृश्यत इत्यर्थः। स कथं लभ्यत इति जिज्ञासामहे।

**विहितागरुधूपमक्षैर्निर्यान्तम् (१०, ६९, १२)।**

अक्षैर्गवाक्षैः। संचिक्षिप्सया पूर्वपदं लुम्पति। इदं च राभस्यात् प्रस्मरति गवाक्षेऽक्षि उत्तरपदं न त्वक्षम्।

**शश्वद्भयेन मृतकेन धुरं वहामः (१०, ७०, २८)।**

मृतकेन मृततुल्येन शरीरेण। धुरं पुत्त्रदारादिचिन्ताभारम्। उभयत्राक्षरार्थौ विवक्षितार्थश्च दुःखेन परस्परं योज्यौ।

**तारा यथोडुपसहाः (१०, ७१, ३६)।**

उडुपं चन्द्रं सहन्त इति चन्द्रसहिता इत्यर्थः। भागवतप्रयोगाश्चेल्लोके प्रचरेयुर्ध्रुवं सर्वां वाचं संकिरेयुः।

**ततः समे खले वीरौ संयुक्तौ (१०, ७२, ३४)।**

खले कोमले प्रदेशे। अपि वा समेखले इत्येकं पदम्। मेखला भित्तिविशेषस्तत्सहिते। उभयत्र समानाऽप्रसिद्धिः। द्वितीयेर्थे प्रदेशे इत्यध्याहार्यं भवतीत्यतिरिक्तो दोषः।

**अतो न राज्यं मृगतृष्णिरूपितम् (१०, ७३, १४)।**

मृगतृष्णा मृगतृष्णिकेति द्वे शब्दाकृती प्रसिद्धे। इयं तृतीयाऽप्रसिद्धा संस्कारच्युता च।

**श्रुत्वा द्विजेरितं राजा**
**ज्ञात्वा हार्दं सभासदाम् (१०, ७४, २६)।**

हार्दं हृद्गतमभिप्रायम्। कोषकारास्तु हार्दं प्रेमपर्यायेषु पठन्ति प्रयुञ्जते च तत्रार्थे कवयः। यदि हार्दमिदं श्रुत्वा पिता ममायं सुतोहमस्येति इत्यत्र यथा।

**भावो हि भवकारणम् (१०, ७४, ४६)।**

भावः=अनुचिन्तनम्। भवस्य कारणं ध्येयाकारप्राप्तेः कारणम्। उभावपि भवभावावत्रार्थयोः सममप्रसिद्धौ।

**राजसूयावभृथ्येन ··· स्नातः (१०, ७४, ५१)।**

अवभृथ एव आवभृथ्यम्। स्वार्थेष्यञन्तस्य क्वाऽन्यत्र प्रयोगः।

**ऋषयः के च नान्विताः (१०, ७७, ३०)।**

अन्विता न=पूर्वापरानुसन्धान-रहिताः। पदार्थोऽन्वितो भवति वाक्यार्थो वा, न तु प्रयोक्ताऽन्वित इत्युच्यते क्वचित्।

**श्रीनिवासेन सम्भृतः (१०, ८०, २६)।**

सम्भृतः सत्कृतः संमानितः। सम्भृत इत्येकीकृत इत्यर्थे क्रियया निर्वृत्ते वार्थे प्रसिध्यति। संभाराः सम्भृताः, असम्भृतं मण्डनमङ्गयष्टेरित्यादिषु यथा।

**यस्य च्छन्दोमयं ब्रह्म देह आवपनं महत् (१०, ८०, ४५)।**

आवपनं भूमिरुत्पत्तिस्थानम्। आवपनं तु गोण्यां रूढम्। न हि तत्र किञ्चिदुत्पद्यते। ओप्यते हि।

**तर्पयन्त्यङ्ग मां विश्वमेते पृथुकतण्डुलाः (१०, ८१, ९)।**

मां सदाश्रितं विप्रं चेदयर्थः। अयं चेदर्थः। समुच्चायकश्चो वक्तव्यः।

**राज्यविभूतीर्न समर्थयत्यजः ।**
**अदीर्घबोधाय (भक्ताय) ··· (१०, ८१, ३७) ।**

समर्थयति प्रयच्छति । अपूर्वोऽर्थः ।

**हयैश्च तरलप्लवैः (१०, ८२, ७) ।**

तरलास्तरङ्गाः । अन्यत्रापीह पुराणे (१०, २९, ४५ ; १०, ३२, १२) तरलस्तरङ्ग इत्यर्थे प्रयुक्तः । कोषकारास्तु तरलं तरङ्गपर्यायेषु न पठन्ति ।

**युधिष्ठिरमथापृच्छत् सर्वांश्च सुहृदोऽव्ययम् (१०, ८३, १) ।**

अव्ययं क्षेमम्, अनामयम् ।

**तस्यास्ते मेऽनुभवमङ्घ्र्यवनेजनत्वम् (१०, ८३, १२) ।**

अनुभवं भवे भवे जन्मनि जन्मनि । अनुभवमिति वीप्सायामव्ययीभावोऽत्यन्तमप्रसिद्धः ।

**स एव गोरखरः (१०, ८४, १३) ।**

अत्र विविधाः कल्पनाष्टीकाकृताम् । गोष्वपि खरो दारुण इत्येके । गवां तृणादिभारवाहकगर्दभतुल्य इत्यपरे । गौश्चासौ खरश्च । एकोपि पशुद्वयतुल्यः, म्लेच्छविशेष इत्यन्ये । कोषकाराणां तु गोखर इत्यविदितम् ।

**ईश्वरस्ये शितव्यताम् । जनसंग्रह इत्यूचुः (१०, ८४, १५) ।**

प्रसिद्धं सार्वलौकिकं लोकसङ्ग्रह इति शब्दं परिहृत्याप्रसिद्धं स्वस्यैव विदितं जनसङ्ग्रहं प्रयुङ्क्ते ।

**असमास्वप्रतिकल्पेयं यत्कृताज्ञेषु सत्तमैः ।**
**मैत्र्यर्पिताऽफला ··· ··· ··· ··· (१०, ८४, ६२) ।**

कृताज्ञेषु=अकृतज्ञेषु=कृतघ्नेषु । अहो वैकृतं वाचः । अहो कृतकता ।

**वैकारिको विकल्पानां प्रधानमनुशायिनाम् (१०, ८५, १२) ।**

विविधं कल्पनं ज्ञानमेभिरिति विकल्पा देवाः । अपूर्वोर्थः । अनुशायिनाम् =अनुशयः कर्मवासना तद्वताम् । यद्येवं तर्ह्यनुशयिनाम् इति स्यात् । अनुशेरतेऽनुतप्यन्त इत्येवंशीला अनुशायिनस्तेषामनुशायिनाम् इति तु नाभीष्यते पुराणकारेण ।

**खं वायुर्ज्योतिरापो भूस्तत्कृतेषु यथाशयम् (१०, ८५, २५) ।**

यथाशयं यथोपाधि ।

**अपाययत् स्तनं प्रीता सुतस्पर्शपरिप्लुता (१०, ८५, ५४)।**

परिप्लुता क्षरत्पयःस्तनी, प्रस्नुतस्तनी। अन्यत्र परिप्लुत आप्लुतः स्नातो भवति निमग्नो वा परीतो वा।

**मात्रार्थं च भवार्थं च आत्मनेऽकल्पनाय च (१०, ८७, २)।**

मात्रार्थं विषयग्रहणाय। मात्रास्तु इन्द्रियाणि भवन्ति। मीयन्त आभिरर्था इति।

भवार्थं पुनर्भवाय। आत्मने आत्मनः स्वर्गादिभोगाय। अकल्पनाय कल्पनानिवृत्तिरूपमोक्षाय। प्रतिपदं पारोक्ष्यं स्थितम्।

**अगजगदोकसाम् (१०, ८७, १४)।**

अगानि स्थावराणि। जगन्ति जङ्गमानि। ओकांसि शरीराणि। न हि ओकः शरीरमिति प्रसिध्यत्यर्थः। अगो नगः शैलो वा वृक्षो वा। तत्रास्य रूढिः। क्वचित् स्तब्ध इत्यपि।

**दृतय इव श्वसन्त्यसुभृतो यदि तेऽनुविधाः (१०, ८७, १७)।**

यद्यसुभृतस्तेऽनुविधा अनुविधातारो भक्तास्तदा दृतय इव (वृथा) श्वसन्तीत्यर्थोऽयत्नलभ्यः स चासङ्गत इति साङ्गत्याय संयसन्तो नाना कलयन्ति। १—विधीयन्ते शास्त्रेण विधा भजनाद्याः, ताभिर्हीना अनुविधाः। अनुर्हीने। प्रादिः समासः। अत्रेदं ब्रूमः। हीने द्योत्येऽनुः कर्मप्रवचनीयो भवति। हीनोऽपकृष्ट इति च तत्रार्थो न तु रहितो विहीनो वा। कर्मप्रवचनीयेन च समासविधिर्नास्ति। तेन प्रादिसमासोयमिति रभसोक्तिः। २—अनुशयिता द्वेषवती विधा कृतिर्येषां तेऽनुविधाः। प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्य इति बहुव्रीहिः। सत्यमित्यम्भूतो बहुव्रीहिः शक्य आश्रयितुं यद्युत्तरपदस्य धातुजस्य लोपाभावपक्षे रूपं प्रतितिष्ठेद् यथा प्रपलाशः प्रपतितपलाश इति। न च प्रतितिष्ठति। न ह्यनुशयितविधा इति प्रयोगोस्ति। ३—विधा भजनादि प्रकाराः, ता अनु=लक्षीकृत्य येऽसुभृतो भवन्ति सुष्ठु धारका न भवन्ति इति। अत्रेदं नश्चोद्यम्—लक्षणे द्योत्येऽनुः कर्मप्रवचनीयः। वृक्षमनु विद्योतते विद्युदित्युदाहरणम्। कोर्थः। वृक्षो विद्युद्-विद्योतस्य लक्षणं लक्षकः, यत्र वृक्षस्तिष्ठति तत्र विद्युल्लक्ष्यत इति, न तु वृक्षं लक्षीकृत्य विद्योतत इत्यर्थः। प्रकृते विधानां भजनादिप्रकाराणामसम्यग्धारणमभिप्रेतं न तु ताँल्लक्षीकृत्य निमित्तीकृत्यार्थान्तरस्य यस्य कस्यचिद् धारणमिति नेयं कल्पना घटामञ्चति।

**परिवयसे पशूनिव गिरा विबुधानपि (१०, ८७, २७)।**

परिवयसे बध्नासि। परिपूर्वो वेञ् अत्रार्थे इहैव वर्तते। अन्यत्रास्य प्रयोगो नास्ति।

**वणिज एव सन्त्यक्तकर्णधरा जलधौ (१०, ८७, ३३)।**

कर्णधरा: कर्णधारा:। अप्रसिद्धिसम्पत्तये शब्दविकृतिरूरीक्रियते।

**भ्रमयति भारती ते उरुवृत्तिभिरुक्थजडान् (१०, ८७, ३६)।**

कर्मप्रशंसापराणि वचांस्युक्था:। अत्र किं मानम्। **असुतृप उक्थशासश्चरन्ति** (१०, ८२, ७) इति बह्वृचा आमनन्ति। तत्र उक्थ: स्तुतिवचनम् इति विस्पष्टम्। ज्ञानविरोधिकर्मण: स्तुतिं नाह। तत्र कवेरिच्छा प्रभवति।

**य: सृष्ट्वेदमनुप्रविश्य ऋषिणा**
**चक्रे पुर: शास्ति ता: (१०, ८७, ५०)।**

ऋषिर्जीव:। पुर: शरीराणि। ऋषिर्जीववचन इति पुराणकारो वा वेद तं भक्ताष्टीकाकारा वा। पुरुष: पुरिशय इत्यादौ देवानां पूरयोध्या इत्यादौ च पू: शरीरमाह, सामान्येन पू:शब्दश्रवणे पुरशब्दश्रवणे वा शरीरार्थो न गृह्यते।

**तेनोपसृष्ट: सन्त्रस्त: (१०, ८८, २४)**

उपसृष्टोऽनुगत:। नायमर्थोऽन्यत्र प्रसिध्यति।

**सत्त्वं तत्तीर्थसाधनम् (१०, ८९, १९)।**

तीर्थं पुरुषार्थ:। नानार्थकोपि तीर्थशब्द: पुरुषार्थेऽर्थे न दृश्यते। तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरज:सु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु इति मेदिनी।

**तावाह…सस्मितमूर्जया गिरा (१०, ८९, ५८)।**

ऊर्जा गी:=गम्भीरा वाक्।

**शवलहृदय: (१०, ९०, २०)।**

शवलहृदय:=मलिनहृदय:। क्षुभितमना:। अत्रार्थं इहैव प्रयोग:।

**उद्धुतबृहत्कबरप्रसूना: (१०, ९०, १०)।**

अन्यत्र लोके कबरी ङीषन्तं प्रसिध्यति। अयन्त्वसकृत् केशवेशे कबरं पठति।

**वद मे वल्गितकण्ठकोकिल (१०, ९०, २१)।**

वल्गितं वल्ग्वर्थे न प्रसिध्यति। अश्वादीनां गतिविशेषे तु प्रसिध्यति धातुसाम्येपि प्रत्ययभेदादर्थभेदः।

**स्वमूर्त्या लोकलावण्यनिर्मुक्त्या (११, १, ६)।**

निर्मुक्तिस्त्यागः तिरस्कारो ययेति विग्रह इति कश्चित्। अपर आह—लोकेभ्यो लावण्यस्य निर्मुक्ति र्दानं यतः। अयमपि पूर्वस्मात्प्रलापान्न विशिष्यते।

**आच्छिद्य (लोचनादिकम्) (११, १, ७)।**

आच्छिद्य=आकृष्य=वशे कृत्वा। नायमर्थो व्यवहारमनुपतति। व्यवहारे तु आङ्पूर्वश्छिदिः परकीयस्य वस्तुनो बलादपहरणे वर्तते।

**विष्णोर्भूतानि लोकानां पावनाय चरन्ति हि (११, २, २८)।**

भूतानि भक्ताः। अपूर्वोऽर्थः।

**भयं द्वितीयाभिनिवेशतः स्यात् (११, २, ३७)।**

अभिनिवेशोऽभिमानः, मिथ्याग्रहः। अन्यत्राभिनिवेशो हठो भवति मृत्योर्भयं वा।

**तुष्टिः पुष्टिः क्षुदपायोऽनुघासम् (११, २, ४२)।**

घासो ग्रासः। अन्यत्र घासो यवसमुच्यते।

**ससर्जोच्चावचान्याद्यः स्वमात्रात्मप्रसिद्धये (११, ३, ३)।**

स्वे स्वस्यांशभूता जीवाः, तेषां मात्राः शब्दादिविषयाः तेषां प्रसिद्धये भोगाय। आत्मनश्च प्रसिद्धये मोक्षाय। उभावप्ययौ सममप्रसिद्धौ।

**संन्यासकृतरक्षः (११, ३, ४९)।**

संन्यासोऽङ्गन्यासः। न्यासः संन्यासश्चेत्युभावपि त्यागे वर्तेते, अङ्गन्यासे तु न। स तु सन्ध्यावन्दनाद्यङ्गभूतमङ्गस्पर्शमाह।

**क्षुत्तृट् त्रिकालगुणमारुतजैह्व्यशैश्न्यान् (११, ४, ११)।**

शिश्नोपभोगः शैश्न्यः। इहैव प्रयोगः।

**आम्नायपादिनः (११, ५, ५)।**

आम्नाये वेदे ये वादा अर्थवादास्ते मोहकतया विद्यन्ते येषां ते। अक्षरार्थस्तु नैतदर्थं समर्थयति।

**कृष्णाजिनोपवीताक्षान् (११, ५, २१) ।**

अक्षान् रुद्राक्षान् । केवलोऽक्षशब्दस्तु पाशकमाचष्टे ।

**गतो मुकुन्दं परिहृत्य कर्तम् (११, ५, ४१) ।**

कृती छेदने इत्यस्माद् घञि रूपम् । कर्तं इति भेदमहङ्कारं कृत्यं वाहेति टीकाकृत: । स्वमनीषिकया कल्पितोऽर्थ: ।

**ब्रह्मादयस्तनुभृतो मिथुरर्द्यमाना: (११, ६, १४) ।**

मिथुरितीहैव । सद्योनिर्मित: शब्दो न परम्परीण: ।

**ऋषय: श्रमणा ऊर्ध्वमन्थिन: (११, ६, ४७) ।**

ऊर्ध्वमन्थिन:=ऊर्ध्वरेतस: । अयमपि स्वेच्छया कल्पित: शब्द: । ऊर्ध्वरेतस इत्यर्थस्य लब्धि: कथम् ।

**कलिनापि निराकृत: (भविष्यत्ययं लोक:) (११, ७, ४) ।**

निराकृतोऽभिभूत: । अन्यत्र निराकृत: प्रत्याख्यातो भवति ।

**साऽसक्तस्नेहगुणिता (११, ७, ६६) ।**

गुणिता बद्धा । अयमर्थ इहैव । अन्यत्र गुणितमाहतं भवत्यभ्युच्चितं वा ।

**मधुहेवाग्रतो भुङ्क्ते यति वै गृहमेधिनाम् (११, ८, १६) ।**

मधुहा मधुहारी, मधुन: सङ्ग्रहीता । इहैव प्रयोग: । इह हन्ते: प्रयोग: कथमाञ्जस्यमश्नुते ।

**कीट: पेशस्कृतं ध्यायन्कुड्यां तेन प्रवेशित: (११, ९, २३) ।**

कुड्यां बिले । कुडीति स्वतन्त्रा प्रकृतिर्नास्ति ।

**वैशारदी सातिविशुद्धबुद्धि: (११, १०, १३) ।**

वैशारदीति कमर्थमाचष्टे । एष तत्रोहष्टीकाकृताम्--विशारदोऽतिनिपुणो गुरु:, तेनोपदिष्टा वैशारदी । विशारदोऽति निपुण: शिष्य:, तेनाप्ता वैशारदी । मूलकारोऽसंनिहित इति न शक्य उपेत्य प्रष्टुं केनाभिप्रायेण प्रयुक्तमिदमिति ।

**आघातं नीयमानस्य वध्यस्य (११, १०, २०) ।**

आघातो वधस्थानम् । अन्यत्र तु सूनामाह ।

**स्वपुण्योपचिते शुभ्रे विमाने (११, १०, २४) ।**

उपचिते उपनीते प्रापिते । उपचितं वृद्धमुच्यते ।

**हृष्यति दुर्जनेषु च न कुप्यति प्रकृतिस्थोप्यसंसवतः (११, ११, १२)।**

प्रकृतिर्देहसङ्घातः । अपूर्वोऽर्थः ।

**नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् (११, ११, ४८) ।**

सध्र्यङ् समीचीनः । नात्रार्थेऽस्य प्रसिद्धिः । इह त्वसकृदयं प्रयुक्तः । प्रायणं शरणम् । परायणं तु प्रसिध्यति ।

**न रोधयति मां योगो न साङ्ख्यधर्म एव च (११, १२, १) ।**

रोधयति वशे करोति । अवपूर्वस्याण्यतस्यायमर्थो न तु रोधेर्ण्यन्तस्य ।

**तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् (११, १२, १४) ।**

प्रतिचोदना स्मृतिवाक्यम् । चोदना श्रुतिः । तत्सदृशी । चोदना विधिः, तत्प्रतिकूलो निषेध इति यावत् । शब्दोऽर्थश्चेत्युभयमप्रसिद्धम् । प्रतिचोदनेति भागवताद्बहिर्न प्रचरति ।

**स एव जीवो विवरप्रसूतिः (११, १२, १७) ।**

जीवयतीति जीवः परमेश्वरः । आधारादिचक्रेष्वभिव्यक्तिर्यस्य स इह विवरप्रसूतिरुक्तः । अहो वाच्यधि कविः !

**एवं गदिः कर्म (११, १२, १९) ।**

गदिर्वाणी । इहैव प्रयोगः ।

**यावत् स्मृतिरपोहनम् (११, १३, ६) ।**

देहद्वयतत्कारणभूतगुणत्रयापोहोऽपोहनशब्देन विवक्षितः । तच्चित्रीयते नः ।

**वक्तुर्मे क आश्रयः (११, १३, २२) ।**

को भवानिति पृष्टोहं निर्विशेषः सन् कां जातिं व्यक्तिं गुणं वाश्रित्य प्रतिब्रूयामित्यभिप्रायः ।

**भक्तिः पुनाति यन्निष्ठा श्वपाकानपि सम्भवात् (११, १४, २१) ।**

सम्भवो जन्मजो दोषः । अक्षराणि तु नेममर्थमर्पयन्ति । सम्भवो जन्म भवति सत्ता च ।

**संवत्सरो रम्यनिमिषाम् (११, १६, २७) ।**

क्विबन्तोऽनिमिट् छन्दस्त्विहैव ।

**वदेदुन्मत्तवद् विद्वान् गोचर्यां नैगमश्चरेत् (११, १८, २९) ।**

नैगमो वेदवित् । कोषस्तु नैगमो वाणिजो वणिग् इति पठति ।

**सुरानात्मानमात्मस्थं निह्नुते मां च धर्महा (११, १८, ४१)।**

निह्नुते वञ्चयते । निह्नवोऽपहारोऽपनयोऽपलापो वा भवति । वञ्चनमर्थंस्त्वेतत्पुराणग एव ।

**रजस्वलं चासन्निष्ठं चित्तं विद्धि विपर्ययम् (११, १९, २६)।**

रजस्वलं रजोगुणप्रधानम् । अन्यत्र रजोऽवकीर्णं मलिनं वार्थः ।

**एतद् विद्वान् पुरा मृत्योरभवाय घटेत सः (११, २०, १४)।**

अभवोऽपुनर्भवः । अभवो ह्यसत्तां वक्ति । अपुनर्भवोऽर्थस्तु प्रकरणबलात् कथं चिल्लभ्यते ।

**यथा विविक्तं यद्वक्त्रं गृह्णीमो युक्तिसंभवात् (११, २२, ९)।**

भो विद्वन् किमात्थ ? कदाचिद् घुणाक्षरन्यायेन ऋजु सङ्गतमप्युदीरयेः। यो यत्स्वमुखेन वदति तद्वयं निश्चितं जानीमः, संभवति हि तत्र युक्तिरिति । एवं हि तिरोहितोऽर्थो यत्नेनाविर्भाव्यते ।

**बहिरन्तर्भिदाहेतुर्जनोऽसज्जनकृद्यथा (११, २२, ४१)।**

जनो जनकः, उत्पादकः ।

**निषेकगर्भजन्मानि (११, २२, ४६)।**

निषेको जठरे प्रवेशः। गर्भो मध्येवृद्धिः । निषेको रेतःसेको गर्भाधानं भवति। निषेकादिः श्मशानान्तो मन्त्रैर्यस्योदितो विधिरित्यत्र मनुवाक्ये यथा। गर्भो भ्रूणापरपर्यायः प्रसिद्धः । प्रसिद्धाविमावर्थौ परित्यज्य किमर्थिकेयं नूतनार्थकल्पना ।

**तत्त्वेन स्पर्शसंमूढाः (११, २२, ५०)।**

स्पर्शा विषयाः। बाढमिन्द्रियस्पर्शो मात्रास्पर्श इत्यादिषु स्पर्श इति विषयमाह, वाक्ये पृथक् पदं सत्तु तन्नैव तमर्थमाचष्टे । तत्र पूर्वपदापेक्षिता हि तस्य नियता ।

**एकास्निग्धाः काकिणिना सद्यः सर्वेऽरयः कृताः। (११, २३, २०)।**

काकिणिरिति नूतनशब्दप्रक्लृप्तिः। काकिणीत्येव शब्दः पूर्वैर्व्यवहृतः ।

**नाग्नेर्हि तापो न हिमस्य तत् स्यात् (११, २३, ५६)।**

आत्मनोंशत्वात्काल आत्मनः सुखदुःखयोः कारणं न। तत्र दृष्टान्तमाह—नाग्नेरित्यादिः। यथाग्नेर्हेतोस्तदंशस्य ज्वालादेस्तापो न, यथा वा हिमस्य शैत्यं

तदंशस्य तुषारकणस्य नाशकं नेत्यर्थं विवक्षति बहुमूकः कविः। इदं किंविवरणम्। नहीदं दार्ष्टान्तिके दृष्टान्तं संगमयति। सर्वमिदं संकुलं वचः। मूले तच्छब्देन किं गृह्यते। ज्वालाद्यनुक्तमध्याहार्यम्। तद्धयग्नेरंशभूतमित्यग्नेस्तापाय नालम्। व्याख्याकृत्तु विपरीतमाह—अंशिनाग्निना कृतो ज्वालादेर् अंशभूतस्य तापो नेति। द्वितीयस्मिन्खण्डे चांशिनो हिमस्य शैत्यं तुषारकणस्यांशभूतस्य यच्छैत्यं तस्य नाशकं नेति प्रलपन् नेदं दार्ष्टान्तिकेन कलयापि सङ्गतिमियर्तीति नेक्षते। अथ अग्नेस्तदङ्गभूतात्स्फुलिङ्गात्तापो न, हिमस्य च तुषारकणाच्छैत्यं नेत्येवं व्याख्यायेत किंचित्साध्विव स्यात्। ज्वालादिरग्नेस्तापको न भवतीत्युक्तिर्हृदयग्रहणीया न भवति, अभेदे भेदारोपेऽपि हास्याय भवति।

**यदा विवेकनिपणा आदौ कृतयुगेऽयुगे (११, २४, २)।**

अयुगः प्रलयः। अपूर्वोऽर्थः।

**स्वधर्मे चानुतिष्ठेत (११, २५, ८)।**

अनुतिष्ठेत अनुष्ठान-परतया तिष्ठेदिति विवक्षतीति टीकाकृतः। अत्रार्थं इहैव प्रयोगः। अन्यत्रानुतिष्ठतिः सर्वत्र सकर्मकः। इहैव सप्तमीश्रवणम्।

**सम्पद्यते गुणैर्मुक्तो जीवो जीवं विहाय माम् (११, २५, ३५)।**

जीवं जीवोपाधिं लिङ्गशरीरम्। अत्यन्तमप्रसिद्धोऽर्थः।

**कामकश्मलचेतसः (११, २६, ८)।**

कश्मलं क्षुभितम्। कश्मलं मोहो मूर्च्छा भवति। **कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्** (गीता० २, २) इत्यत्र यथा। क्वचिन्मोहापादकं शोककरमप्याह—**कश्मला किंवदन्ती** इत्युत्तरे रामचरिते यथा।

**उद्वासावाहने न स्तः स्थिरायां (प्रतिमायाम्)**
**उद्धवार्चने (११, २७, १३)।**

उद्वासो विसर्जनम्। अत्रार्थं इहैव प्रयोगः। अन्यत्र उद्वास उद्वासनं निर्वासनं पृथक् करणं वा (अग्नेः) भवति।

**...कर्माणि वेदेनाचोदितानि मे**
**कलशं प्रोक्षणीयं च यथावदुपसाधयेत् (११, २७, २०)।**

आङ्पूर्वश्चुदिरुपपूर्वः साधिश्चेहैव श्रुतौ।

**पाद्यार्घ्याचमनीयार्थं त्रीणि पात्राणि दैशिकः (११, २७, २२)।**

दैशिकः पूजकः। देशिक आचार्यो भवति। ततः स्वार्थिकेऽणि प्रकृतार्थलब्धिः कथम्।

**छाया प्रत्याह्वयाभासा**

**ह्यसन्तो व्यर्थकारिणः (११, २८, ५)।**

प्रत्याह्वयः प्रतिध्वनिः। अत्रार्थं इहैव प्रयोगः।

**उपारमेताखिलकामुकेभ्यः (११, २८, २३)।**

कामुकानीन्द्रियाणि। अपूर्वोऽर्थः।

**मनुष्यभूतैस्त्रिदशोपसृष्टैः (११, २८, २९)।**

उपसृष्टैः प्रेरितैः। अत्रार्थेऽन्यत्रापीह पुराणे प्रयोगः।

**शयानमुक्षन्तमदन्तमन्नम् (११, २८, ३१)।**

उक्षन्तं मूत्रयन्तम्। अत्रार्थ इहैव प्रयोगः। सेचनमेवार्थः प्रसिद्धो लोकवेदयोः।

**यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम्।**
**व्यर्थेनाप्यर्थवादोऽयं द्वयं पण्डितमानिनाम् (११, २८, ३७)।**

पञ्चवर्णं पञ्चभूतात्मकम्। द्वयं द्वैतम्। द्वैतं भेदो भवति। न च द्वयमिति भेदमाह। पञ्चवर्णम् इति चापि पञ्चभूतात्मकमशक्तं वक्तुम्।

**को वा भजेत किमपि विस्मृतयेऽनुभूत्यै (११, २९, ५)।**

अत्रोच्चावचं कल्पयन्ति विवरीतारो मूलकारेण मोहमापादिताः। विस्मृतिर्हि विरुध्यतेऽनुभूत्या। कस्य विस्मृतिर्विवक्षिता कस्य चानुभूतिः। केचिदनुशब्दं पृथक् कुर्वन्ति पदक्रमं चार्थवशाद् विपरीतयन्ति। यत् किमपि केवलं भूत्यै ऐश्वर्याय भवति तदनु=ऐश्वर्यप्राप्त्यनन्तरं, तव विस्मृतये भवति तत् किमपि। अन्ये—किमपि देवतान्तरं भूत्यै ऐश्वर्याय संसारस्य विस्मृतये=मोक्षाय, इत्थं सङ्गमयितुं चेष्टन्ते।

**निवेवितात्मा विचिकीर्षितो मे (११, २९, ३४)।**

विचिकीर्षितो विशिष्टः कर्तुमिष्टः। न हि विकारशब्दः क्वचिद् वैशिष्ट्यमाह। विकारो विशेषस्य प्रत्यनीकभूतोऽर्थः। वर्धते विकारो न हि कश्चिद् विशेषोस्तीत्येवं भणन्ति लोका आतुरं पृच्छ्यमानाः।

**एवमुक्तो हरिमेधसोद्धवः (११, २९, ४५)।**

हरति संसारं यद्विषया मेधा बुद्धिर्यस्य स हरिमेधाः। यद्विषयेति कुतो लभ्यते। मेधा च धारणावती बुद्धिर्भवति न स्मृतिसामान्यं ज्ञानं वा।

**मर्त्येन यो गुरुसुतं यमलोकनीतम्** (११, ३१, १२)।

मर्त्येन मर्त्यशरीरेण सहैव।

**मर्त्येन किं स्वस्थगतिं प्रदर्शयन्** (११, ३१, १३)।

मर्त्येन शरीरेण स्थितया किमिति विचार्यं स्वस्थानाम् आत्मनिष्ठानां (दिव्यां) गतिं प्रदर्शयन् इति निह्नुतोऽर्थः कथं चिदूहनीयः।

**लिङ्गमेवाश्रमख्यातौ** (१२, २, ४)।

ख्यातिरभिज्ञानम्। नानार्थकोपि ख्यातिशब्दोऽभिज्ञाने न प्रसिध्यति।

**अन्योन्यापत्तिकारणम्** (१२, २, ४)।

आपत्तिः प्राप्तिरिति कश्चित्। आश्रमादाश्रमान्तरसङ्क्रम इत्यन्यः।

**दूरे वार्ययनम्** (१२, २, ६)।

वार्ययनं जलाशयः। इहैव प्रयोगः कविकल्पितः।

**यौनप्रायेषु बन्धुषु** (१२, २, १४)।

योनिसम्बन्धो यौनः। स्त्रीसम्बन्धिन एव प्रायेण बन्धव इति विवक्षति। योनिः स्त्रीयोनिमेव ब्रूयादिति नियमो न। मातृयोनिरपि योनिरभिलप्यते। त्रीणि यस्यावदातानि विद्या योनिश्च कर्म चेत्यत्र यथा।

**वचो विभूतीः** (=वचो विभूतयः) **न तु पारमार्थ्यम्** (१२, ३, १४)।

परमार्थ एव पारमार्थ्यम्। इहैव प्रयोगः।

**मधुर्लनो रजस्तोकः** (१२, ८, २५)।

रजस्तोको लोभः। नायं नियमो लोभ एव रजोगुण-समुद्भवः, क्रोधोपि तथाभूतः।

**हित्वेदमात्मच्छदि देहादि** (१२, ८, ४४)।

छदिरिति इदन्तं प्रातिपदिकं सुदुर्लभम्। अपि वोपपदसमासः स्यात्। णिनावुपधावृद्धिर्न कृता वृत्तभङ्गभयात्।

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्यां शब्दार्थाप्रसिद्धिनिरूपणो नाम प्रथमोऽध्यायः॥

## द्वितीयोऽध्यायः

# व्यवहारदूषणम्

यथा वागन्तरे तथा संस्कृतेपि परम्परीणः पूर्वसूरिभिरादृतोऽस्ति कश्चिद् वाग्व्यवहारविशेषः। स हि वागात्मा। स न दूषणीयः। अयं तु भूयोविद्योपि तं व्यवहारं केषु चिदस्य पुराणस्य प्रदेशेषु विदूषयति। लिङ्गं चापि भूयसाऽतिक्रामति। लिङ्गमशिष्यं लोकाश्रितत्वाल्लिङ्गस्येति भाष्यमते स्थिता वयं लिङ्गव्यतिक्रमानपि व्यवहारदूषणेष्वन्तः पातयामः। तानपीह प्रकरणे तैः सममनुक्रम्य निदर्शयामः।

यत्तदोर्नित्यः सम्बन्ध इत्यभियुक्तोक्ति व्यवहारे नाद्रियते तद्यथा—

**जन्माद्यस्य यतः ··· यत्र त्रिसर्गो मृषा।**

**··· ··· ··· ··· सत्यं परं धीमहि (१, १, १)।**

अत्र तच्छब्दं व्यवहार्यं न व्यवहरति। स दोषः। सोऽयं पुराणमिदमुपक्रमप्रभृत्यपवर्गपर्यन्तं व्याप्नोति।

**मुह्यन्ति यत् सूरयः (१, १, १)।**

यत्र वेदे सूरयोऽन्तर्वाणयोपि भ्रमन्तीत्याह। सप्तम्यर्थे यच्छब्दप्रयोगो व्यवहारावहेला भवति। तत्तद्विभक्त्यर्थं मनसिकृत्य यच्छब्दं नपुंसकमविभक्तिकं प्रयुङ्क्ते। यथा—**यद्बिभेति स्वयं भयम्** (१, १, १४) इत्यत्र पञ्चम्यर्थे यच्छब्दः। यद्=यस्मात्।

**वयं तु न वितृप्याम उत्तमश्लोकविक्रमे।**

**यच्छृण्वतां रसज्ञानां स्वादु-स्वादु पदे-पदे (१, १, १९)।**

यदिति विक्रमं प्रत्यवमृशति। विक्रमः पुमान्। यच्च नपुंसकम्। नपुंसकत्वं व्यवहारं दूषयति। कश्चिदाह—सामान्ये नपुंसकमिति। तदज्ञानविजृम्भणम्। सामान्ये नपुंसकत्वस्य तु नैष विषयः। यत्र सामान्येनोपक्रमः, प्रतिनिर्देश्यं विशेष्य-विशेषं वाऽनभिसन्धायोपक्रम्यते वक्तुं तत्रैव सामान्ये नपुंसकं युक्तिमद् भवति यथा शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिन इति श्रीरामायण-

प्रयोगे। यथा वा नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषत इति च गीतासु। यथोपरिष्टाद् दर्शयिष्यामो नपुंसके सविशेषसमादरोऽयं कविरिति द्राविडो वा स्याद् द्राविडेषु चिरोषितो वा।

**कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता।**
**जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिः (१, २, १०)।**

यावता जीवेत् तावाँल्लाभः, कर्मभिर्योऽर्थः स नेति इति विवक्षति। यत्तदोर्नित्यः सम्बन्ध इति नाद्रियते।

**दध्रे कमठरूपेण पृष्ठ एकादशं विभुः (१, ३, १६)।**

पृष्ठेन दध्र इति तृतीया व्यवहारानुगा स्यात्। अत्र विषये सदप्यधिकरणत्वमुपेक्ष्य करणत्वविवक्षास्थिता शिष्टानाम्। भूयो ज्ञानायाऽस्मत्कृतो वाग्व्यवहारादर्शो विवक्षातः कारकाणि भवन्तीति विषयो विलोकनीयः।

**कथां भागवतीं पुण्यां यदाह भगवाञ्छुकः (१, ४, २)।**

यदाहेति दुष्टम्। यामाहेति तु सुष्ठूक्तं स्यात्। सामानाधिकरण्ये लिङ्गभेदो नोपपद्यते।

**नामान्यनन्तस्य यशोङ्कितानि यच्**
**छृण्वन्ति गायन्ति गृणन्ति साधवः (१, ५, ११)।**

यदिति यानीत्यर्थे प्रयुक्तम्। किंकृतो वचनभेदः।

**कुतः पुनः शश्वदभद्रमीश्वरे**
**न चार्पितं कर्म यदप्यकारणम् (१, ५, १२)।**

वाक्ये पृथक् श्रूयमाणो नञ् क्रिययाऽभिसम्बध्यते वाक्यभेदाय च कल्पत इति तत्परिहाराय (ईश्वरे)ऽनर्पितं कर्मेति वक्तव्यम्। संभवत्येकवाक्यत्वे वाक्यभेदो नाश्रयणीयः। यथास्थिते तच्छब्दोऽप्यध्याहर्तव्यो भवति। ईश्वरेऽनर्पितं (सत्त्वशुद्धेः) अकारणं कर्म पुनः कुतः (शोभते) इति ऋज्वी रचनाऽऽश्रेया, न पुनरनर्थकपदोपजना वाक्यभेददूषणाऽध्याहारबहुला वाक्।

**इदं हि पुंसां तपसः श्रुतस्य वा**
**स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः।**
**अविच्युतोर्थः कविभिर्निरूपितो**
**यदुत्तमश्लोकगुणानुवर्णनम् (१, ५, २२)॥**

इदमः स्थाने तच्छब्दः प्रयोगमर्हति। तथा च व्यवहारोऽनुवृत्तो भवति।

**अहं हि पुराऽतीतभवेऽभवं मुने**
**दास्यास्तु कस्याश्चन वेदवादिनाम् (१, ५, २३)।**

सप्तमीस्थाने दास्या इति पञ्चमीप्रयोगः व्यवहारमुच्चरते। जायतेः प्रयोगे मातुरधिकरणतामिच्छन्ति शिष्टाः। तथा चादिकवेः प्रयोगः—अदृष्टदुःखो धर्मात्मा सर्वभूतप्रियंवदः। **मयि जातो दशरथात् कथमुञ्छेन वर्तयेत्** (रा० २, २४, २) इति। अत्र भूयसे ज्ञानायाऽस्मत्कृतिर्वाग्व्यवहारादर्शो दर्शनीयः।

**पिप्पलोपस्थ आस्थितः (१, ६, १६)।**

आस्थित आश्रितः। आङ्पूर्वस्तिष्ठतिर्नित्यं सकर्मकः। तेन पिप्पलोपस्थम् इति कर्मण्यनुक्ते द्वितीयान्तं सुप्रयुक्तं स्यात्।

**मनः कान्तं शुचापहम् (१, ६, १९)।**

शुचेति टावतं नान्यत्र दृश्यते। भागुरिमतेन च नहि सर्वेषां हलन्तानां स्त्रियां टाबिष्यते किन्तर्हि केषांचिदेवाल्पानां वागादीनाम्। टाप्समाश्रयणे व्यवहारः शरणम्, न तु कामकारः।

**पराद्रवत्प्राणपरीप्सुरुर्व्यां**
**यावद् गमम् ··· ··· (१, ७, १८)।**

यावच्छब्दोऽवधिं मर्यादामाह। गमं गमनमवधीकृत्य। किमुक्तं भवति? किमपि न। यावद्यत्स्थानमवधीकृत्य गन्तुं शक्यमासीदित्यर्थं तु विवक्षति, तं चासमर्थे पदे अवगमयितुम्। नात्र शक्यार्थे कृत्यो दृश्यते।

**स्वानां मृतानां यत्कृत्यं चक्रु निर्हरणादिकम् (१, ७, ५८)।**

निर्हरणादिकं यत्कृत्यं तच्चक्रुः। यत्तदोर्नित्यः सम्बन्ध इति नाद्रियते। तदस्य शीलम्। कोऽर्थो गडुभूतेन वाक्यभेदप्रयोजकेन यच्छब्देन, योऽयं तच्छब्दमन्तरा व्यवहारदूषणाय जायते।

**अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत (१, ८, ११)।**

इदमा जगन्निर्देशः। ब्राह्मणशैलीयं पृथिव्यादीनामनुक्तानां सर्वनाम्ना निर्देशः। नैष लौकिको व्यवहारः।

**तस्मादिदं दैवतन्त्रं व्यवस्य भरतर्षभ।**
**तस्यानुविहितः ··· पाहि प्रजाः प्रभो (१, ९, १७)।**

अनुविहितोऽनुविहितवान्, अनुसृतवान्। कर्तरि क्तः। नेदं व्यवहारानुगं भवति। अन्यत्रादर्शनात्। तस्येति शेषे षष्ठ्यपि कल्पना व्यवहारानुपातिनी न।

मुनिगणनृपवर्यसंकुलेऽन्तः
सदसि युधिष्ठिरराजसूय एषाम् ।
अर्हणमुपपेद ईक्षणीयः (१, ९, ४१) ।

अत्र एषामीक्षणीयः (श्रीकृष्णः) अर्हणमुपपेद इत्यन्वयः। एषाम् इति पदेन के प्रत्यवमृश्यन्ते ? सर्वनाम्नां सन्निहितपरामर्शित्वमिति स्थितं दर्शनम्। न चेह सन्निहिताः केचिच्छ्रूयन्ते ये परामृश्येरन्। अहो दिव्यं सामर्थ्यमस्य कवेर्यदनेन प्रयुक्तानि सर्वनामानि दूरव्यवहितान् वृत्तिच्छन्नानप्यर्थान् अलं परामर्ष्टुम्।

**ववृषुः कुसुमैः कृष्णे (१, १०, १६) ।**

ववृषुः कुसुमानि कृष्णे इत्येवं वा वक्तव्यम्, अभिववृषुः कुसुमैः कृष्णमिति वा। न तृतीयः पन्थाः समस्ति। देवो वर्षति। अत्र प्रसिद्धेर्जलमिति कर्म नोच्यते। अप्रसिद्धकर्मविशेषविवक्षायां तु कुसुमादि कर्मावश्यवाच्यं भवति येन कृष्णे कुसुमानि ववृषुरित्यादयः प्रयोगाः प्रसिध्यन्ति। आर्द्रीकरणेऽभिषेचनेऽर्थे कुसुमादीनां करणत्वविवक्षा भवति, अभिषिच्यमानस्यार्थस्य कृष्णादेश्च कर्मत्वम्। वृषिश्चाभिपूर्वः प्रयुज्यते नान्तरेणाभि तदर्थप्रतीतेः।

नूनं व्रतस्नानहुतादिनेश्वरः
समर्चितो ह्यस्य गृहीतपाणिभिः (१, १०, २८) ।

गृहीतपाणिरिति भार्यायां प्रयुक्तम्। न चेदं तत्र प्रसिध्यति। तत्रार्थे पाणिगृहीती पाणिगृहीता चेति प्रयोगद्वयी प्रथते। पूर्वा विधिवत् परिणीता भवति यथा कथंचिदवरोधं नीता चोत्तरा। गृहीतपाणिरिति प्रयोग एव नास्ति दूरे भार्यात्वमर्थः। पुमानपि पाणिगृहीतो भवति यः पाणौ गृहीत्वा सशपथमाश्वास्यते साहायकं ते करिष्यामीति। तथा च श्रीरामायणे प्रयोगः—**सत्यात्पाणिगृहीतश्च कृतकर्मा महायशाः** (४, ५५, ५) इति।

**आहुतिभिर्हृदि स्पृशन् (१, १०, ३०) ।**

आहुतय उपहाराः। तत्रास्य व्यवहारो नेति न न विदितं विदाम्। स्पृशन्नानन्दयन्हर्षयन्नित्याह। स्पृशेस्तु लाक्षणिकः प्रयोगस्तोदने व्यथने वर्तते। स च मर्मस्पृक्, हृदिस्पृग् इत्यादिषु प्रसिद्धः।

**का विरमेत तत्पदात् (१, ११, ३३) ।**

विरामः क्रियाया भवति, इह तु स चरणादुक्तः। विघ्नविहता विरमन्ति मध्याः, नाविरतो दुश्चरितादित्यादिषु तथा दर्शनात्। प्रकृते विराममघटमानं पश्यन्तष्टीकाकारा विश्लिष्यासदृशानर्थं कल्पयन्ति मिथ्या च सन्तुष्यन्ति।

**रेमे स्त्रीरत्नकूटस्थः (१, ११, ३५)।**

कूटशब्दोऽन्यत्र राशिवचनोऽत्र निकायेऽर्थे प्रयुक्तः। सोऽयं व्यवहारातिपातः। शब्दवित्तमोऽमरोऽपि पुञ्जराशी तूत्करः कूटमस्त्रियामिति पर्यायानाह।

**तदिदं (परीक्षितो जन्मकर्मादि) श्रोतुमिच्छामि गदितुं यदि मन्यसे।**
**ब्रूहि नः श्रद्दधानानां यस्य ज्ञानमदाच्छुकः (१, १२, ३)॥**

प्रथमेन चरणत्रयेण निःशेषेणोक्तेऽर्थे वाक्यपरिसमाप्तौ चतुर्थेन तमेवोपक्रान्तं विशेषयितुमुपक्रमते। सोऽयं समाप्तपुनरात्तता नाम दोषः।

**अस्त्रतेजः स्वगदया नीहारमिव गोपतिः।**
**विधमन्तं सन्निकर्षे पर्यैक्षत ··· ··· (१, १२, १०)॥**

उपमानोपमेययोः सामानाधिकरण्यमिष्यते तेन नीहारमिव गोपतिमिति न्यासः साधुः स्यात्। विधमन्तम् इति विशेषणं यथोपमेयेऽन्वेति तथोपमानेऽपि, अन्यथौपम्यं न घटेत। तस्माद् गोपतिमित्येव व्यवहारशुद्धये व्यवहार्यम्। पर्यैक्षतेति ज्ञातुमैच्छदित्यर्थे प्रयोगोऽपि व्यवहारानुगो न।

**अप्येष वंश्यान्राजर्षीन् ··· अनुवर्तिता**
**स्विद् यशसा ··· ··· ··· ··· ··· ··· (१, १२, १८)।**

अपि स्विदिति निपातौ साकं प्रश्नमाहतुरिति व्यवहारः, यथा किं स्विदित्येतौ। वाग्वैकृतमिच्छन्निमौ दूरव्यवहितौ प्रयुङ्क्ते।

**तितिक्षुर्वसुधेवासौ सहिष्णुः पितराविव।**
**पितामहसमः साम्ये प्रसादे गिरिशोपमः (१, १२, २२-२३)।**

अत्र प्रक्रमभङ्गदोषः। पूर्वार्द्धे तितिक्षुरिति सहिष्णुरिति च व्यस्ताभ्यां पदाभ्यां साधर्म्यमुक्तम् उत्तरार्द्धे तु साम्ये प्रसादे इति सप्तम्यन्ताभ्याम् इति प्रक्रमभङ्गः। तमिमं वश्यवाचः कवयो न रोचयन्ते।

**सर्वसद्गुणमाहात्म्य एष कृष्णमनुव्रतः (१, १२, २४)।**

अनुव्रतः=तुल्यः। अनुकूलाचरण इत्यत्रैवास्य व्यवहारः। अनुव्रतः पितुः पुत्रो मात्रा भवतु संमना इति ह्याथर्वणिका आमनन्ति।

**गर्भदृष्टमनुध्यायन् परीक्षेत नरेष्विह (१, १२, ३०)।**

परीक्षेत=परीक्षितवान्। प्रतिनियतविषयास्ते ते लकाराः, अयं तान् संकिरति व्यवहारं च भिनत्ति।

**यावतः कृतवान्प्रश्नान् क्षत्ता कौषारवाग्रतः (१, १३, २)।**

कौषारवाग्रत इति वर्तमानं हिन्दीवाग्व्यवहारमनुवर्तते। शिष्टव्यवहृते संस्कृते त्वयमर्थः सप्तम्याऽभिधीयते। तवैव पितरि प्रश्न इत्युपनिषदि यथा।

**कालरूपोऽवतीर्णोऽस्याम् (१, १३, ४८)।**

अवतीर्ण इमाम् इति शिष्टव्यवहारः। अभिषेकाय सलिलमवतीर्णो मुनिजन इत्यादिषु शतशः प्रयोगेषु कर्मविभक्तेर्द्वितीयायाः श्रवणात्।

**निरुद्धकरणाशयः (१, १३, ५५)।**

इह पुराण आशयशब्दो मनोऽर्थेऽसकृत्प्रयुक्तः। अन्यत्र नायं तमर्थमर्पयन्दृष्टः। अभिप्राये त्वस्य व्यवहारः प्रायिको दृष्टः।

**स वा अद्यतनाद्राजन् परतः पञ्चमेहनि (१, १३, ५६)।**

एवंविधे वाक्सन्दर्भे परतः शब्दं न व्यवहरन्ति वाग्विदः। अन्तरेण तं तदर्थंगतेः। यावदर्थं शब्दप्रयोग इतिराद्धान्तात्। अद्यतनादह्न इति च व्यवहारं विरुन्धे वैयर्थ्यं च धत्ते। अद्येत्यस्मिन्नहनीत्यर्थे निपातः। अद्यभवमद्यतनम्। तत्राहोरूपे कालेऽधिकरणे द्रव्यं वा क्रिया वाऽऽधेया स्यान्न त्वहरेव। कवयस्त्वत्रार्थे केवलमद्येति प्रयुञ्जते इत इति वा।

**सम्प्रस्थिते द्वारकाया जिष्णौ बन्धुदिदृक्षया।**
**व्यतीताः कतिचिन्मासास्तदा नायात्ततोऽर्जुनः (१, १४, १-२)।**

अत्र सम्प्रस्थितस्य द्वारकां जिष्णोरिति व्यवहारानुपाती वाक्यैकदेश इष्यते। सम्प्रस्थितस्येति शेषे षष्ठी। भावलक्षणायाः सप्तम्यास्तु नैष विषयः। यदा निर्ज्ञातकाला क्रियाऽनिर्ज्ञातकालाया अपरस्याः क्रियायाः कालपरिच्छेदाय भवति सोऽस्या विषयः। यस्यैकस्य क्रिययाऽन्यस्य क्रिया लक्ष्यते ततः सप्तमी। न ह्यत्र प्रस्थानात्ययन-क्रिययोर्लक्ष्यलक्षणभावोस्ति। अस्तीति चेदभिनिवेशः, यदाऽर्जुनो द्वारकां प्रास्थित तदा कतिचिन्मासात्मकः कालोऽत्यगादतीतोऽभूदित्यर्थः प्रसज्येत न चायं विवक्षितः, असंभवंश्चापीत्यलं विस्तरेण। किं च। जिष्णुः प्रस्थितोऽर्जुनश्च नायादित्युक्ते प्रस्थानायानकर्त्रोः पुरुषयोरन्यत्वं भासते, नैकत्वम्। तदनिष्टम्। प्रतिनिर्देशोपि निर्दिष्टपूर्वेण नामधेयेन कार्य इति व्यवहार इति तद्विदः।

**ज्ञातुं च पुण्यश्लोकस्य कृष्णस्य विचेष्टितम् (१, १४, १)।**

चेष्टितमिति वक्तव्ये बहुलं विचेष्टितमिति पठति। तद्विरुद्धमतिकृद्भवतीति न पश्यति। विर्विरोधे। न नानार्थे। विरुद्धं चेष्टितं विचेष्टितमिति प्रसिध्यति।

गताः सप्ताधुना मासा भीमसेन तवानुजः ।

नायाति ... ... ... ... ... ... ... (१, १४, ७) ।

एवमुक्ते कस्यैतावान्कालो गत इति न स्फुटति । तवानुजस्य गतस्याधुना सप्त मासा अतीताः, स च नायातीत्येवं वक्तव्यं व्यवहारानुसृतये स्फुटतर-प्रतिपत्तये च ।

कच्चित्प्रेष्ठतमेनाथ ... ... (१, १४, ४४) ।

अतिशायने तमप् वा प्रयुज्यतामिष्ठन्वा । प्रत्ययद्वयेन युगपत्प्रयुक्तेन नार्थः । अयं तुच्छन्दोऽनुकरोति । श्रेष्ठतमाय कर्मण इति यजुषि दर्शनात् ।

... अहममुनैव कलेवरेण प्राप्तो महेन्द्रभवने

महदासनार्धम् ... ... ... ... ... ... (१, १५, १२) ।

अनेनैवेति तु वक्तुमुचितम् । अदः शब्दस्तु विप्रकृष्टमेवार्थं लक्षयेन्न संनिकृष्टम् । तथा च कालिदासे प्रयोगः—अमुं पुरः पश्यसि देवदारुम् पुत्रीकृतोऽसौ वृषभध्वजेन (रघु० २, ३६) ।

उदीचीं प्रविवेशाशां गतपूर्वां महात्मभिः ।

हृदि ब्रह्म परं ध्यायन् नावर्तेत यतो गतः (१, १५, ४४) ।

प्रथमेन चरणत्रयेण पर्यवसितेर्थे निराकाङ्क्षे च श्रोतरि तामेव दिशं विशेषयितुमुपक्रमते । अनावृत्तिम् (आशाम्) इति पदस्यार्थे नावर्तेत यतो गत इति वाक्यम् । सोऽयं समाप्तपुनरात्तता नाम दोषः ।

न जातु पौरवेन्द्राणां दोर्दण्डपरिरम्भिते ।

भूतले पतन्त्यस्मिन् विना ते प्राणिनां शुचः (१, १७, ८) ।

विनायोगे द्वितीयाव्यवहारं बालोपि जानाति, न चावजानाति । हे सौरभेय ! त्वां विनां त्वदृते कस्याप्यन्यस्य प्राणिनः शुचोऽश्रुबिन्दवो न पतन्तीति वाक्यार्थः । 'ते' इति षष्ठी कथं प्रयुक्ता कविना । स्यादेतद् हिन्दीव्यवहार-मनुकुर्वन्षष्ठीं प्रयुङ्क्ते । विनेत्यस्य शुच इत्यनेन योगे कल्पिते व्यवहारोऽनुपालितो भवतीति चेन्न । द्वितीयान्तस्य शुच इत्यस्यैकस्मिन्नेव वाक्ये पतन्तीत्यनेन कर्तृत्वेनान्वयो न घटेत । न ह्येकस्य पदस्य युगपद् विभक्तिद्वययोगः कल्पते । दोर्दण्डपरिरम्भिते इत्यत्र णिजप्यस्थाने । छन्दोरिरक्षिषया स्वार्थे णिचं करोति प्रयोजनान्तराभावात् ।

अनागस्स्विह भूतेषु य आगस्कृन्निरङ्कुशः ।
आहर्तास्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम् (१, १७, १५) ।

पूर्ववाक्ये यच्छब्दे सत्युत्तरवाक्ये तच्छब्दं न प्रयुङ्क्ते । यत्तदोर्नित्यः सम्बन्ध इति नाद्रियते ।

अथवा देवमायाया नूनं गतिरगोचरा ।
चेतसो वचसश्चापि ... ... ... ... (१, १७, २३) ।

अगोचरोऽविषय इत्यर्थः । नञ्समास उत्तरपदार्थप्राधान्याद् घप्रत्ययान्तस्य गोचरशब्दस्य लिङ्गेन भवितव्यम् । घाजन्ताः पुंसीति (गतिर्) अगोचरः (चेतसो वचसश्च) इत्येवं वाच्यम् । न चागोचरेति बहुव्रीहिः, तदर्थानन्वयात् ।

... ... ... अन्यतमो मुकुन्दात् ।
को नाम लोके भगवत्पदार्थः (१, १८, २१) ।

अन्यो मुकुन्दादिति वक्तुमुचितम् । बहूनामेकतमस्य निर्धारणेऽन्यतम इति व्यवहारः । अत्र तु निर्धारणमेव न विवक्षितं द्वयोर्बहूनां वेति कथैव नोदेति । मुकुन्दादिति व्यतिरेके पञ्चम्याः श्रवणात् , अन्यार्थ एवान्यतमशब्दस्य प्रयोगात् ।

स वा आङ्गिरसो ब्रह्मन् श्रुत्वा सुतविलापनम् (१, १८, ३९) ।

विलपनम् इति वक्तव्ये स्वार्थे णिचं कृत्वा विलापनमित्याह । इहैव प्रयोगः ।

यन्नष्टनाथस्य वसोर्विलुम्पकात् (१, १८, ४४) ।

धनवाचि वसु नित्यं नपुंसकम् । देवतावचनस्यैव तस्य पुंस्त्वं प्रतीतम् ।

... पुनर्न मे भूत् पापीयसी धीर्द्विजदेवगोभ्यः (१, १९, ३) ।

अत्र तादर्थ्याभावे विषयसप्तमीष्यते । द्विजदेवगोष्विति शोभनं वचः स्यात् ।

तस्यैव मेऽघस्य (१, १९, १४) ।

अघस्य पापात्मन इति विवक्षति । यद्यपि पापशब्दः किल्विषं वक्ति किल्बिषिणं च नैतावताऽघशब्दोऽप्युभयं ब्रूयात् । अघं ते भुञ्जते पापा ये पचन्त्यात्मकारणात् । केवलाघो भवति केवलादीत्यादिषु पापवृत्तिरेवाघशब्दो दृश्यते । इदं शब्दस्वाभाव्यं न शक्यं परमभागवतेनाप्यन्यथयितुम् ।

**तवाप्येतर्हि कौरव्य सप्ताहं जीवितावधिः (२, १, १४)।**

सप्ताहः पुमान्। आबालमस्य पुंस्त्वं प्रसिद्धमस्यैव तु न प्रसिद्ध-मित्याश्चर्यम्।

**तत्रैकावयवं ध्यायेत् (२, १, १९)।**

कञ्चिदेकमवयवम् इति विवक्षति। यथास्थिते त्ववधारणं गम्येत। एकमेवाङ्गं ध्यायेदित्यर्थगतेः।

**दंष्ट्रा यमः स्नेहकला द्विजानि (२, १, ३१)।**

दन्तार्थे द्विजः पुमान्। दन्तविप्राण्डजा द्विजा इति कोषश्च।

**निर्भिद्य मूर्धन् विसृजेत् परं गतः (२, २, २१)।**

मूर्धन्नित्यविभक्तिको निर्देशः। अपदं न प्रयुञ्जीतेति शिष्टशिष्टिं नाद्रियते। सुपां सुलुक् (७, १, ३९) इत्यादिनाऽमो लुक् इति चेन्न। छन्दसि स विधिः। न चेदं छन्दः।

**न तानि पुंसाममृतायनानि**
**राजोरु मेने क्षतपुण्यलेशः (३, १, ९)।**

बहु मेन इत्यनुक्त्वा उरु मेन इति प्रयुङ्क्ते व्यवहारं चोच्चरते। वेतालेनेवोरुशब्देनाविष्टोऽयं कविः।

**त्यजाश्वशैवं (पुत्रम्) कुलकौशलाय (३, १, १३)।**

शैवं कौशलमित्यत्रोभयो; स्वार्थे तद्धितः। तद्धितप्रियोयं कविः। तद्धितेन प्रसक्तमनिष्टार्थं न पश्यति। शैव इति शिवभक्तिर्भवति, कौशलम् इति च चातुर्यम्।

**क्षेमं स कच्चिद् युयुधान आस्ते (३, १, ३१)।**

क्षेमम् इति क्रियाविशेषणत्वेन प्रयुक्तम्। इत्थम्भूतस्यास्यान्यत्र सुदुर्लभः प्रयोगः। सुखशब्दस्तु निरवग्रहं क्रियां विशिंषन्दृष्टः।

**मां खेदयत्येतदजस्य जन्म-**
**विडम्बनं वसुदेवगेहे।**
**व्रजे च वासोऽरिभयादिव स्वयं**
**पुराद् व्यवासीद् यदनन्तवीर्यः (३, २, १६)।**

अत्र यथा प्रक्रान्तं न तथा समाप्तम्। इति प्रक्रमभङ्गदोषः। तत्परी-हाराय पुराद् व्यवासोऽनन्तवीर्यस्येत्येवं वक्तव्यम्। कवेर्वाचि वशो नेति प्रक्रमं भनक्ति।

**अन्यांश्च दन्तवक्त्रादीनवधीत् कांश्च घातयत् (३, ३, ११)।**

कांश्च = कांश्चित्। इह पुराणे चशब्दश्चिदर्थेऽसकृत्प्रयुक्तः।

**प्रतिक्षणानुग्रहभाजनोहम् (३, ४, १४)।**

पदमास्पदं पात्रं भाजनम् इत्यादीन्यजहल्लिङ्गानि नपुंसकानि। उद्देश्ये भिन्नलिङ्गेऽपि न स्वं लिङ्गं जहति। तेन अनुग्रहभाजनम् इत्येव शोभनं व्यवहारानुसारि वचः।

**प्रणम्य पादौ परिवृत्य देवम् (३, ४, २०)।**

परिपूर्वो वृणोतिः परिक्रमणे प्रदक्षिणीकरणे न प्रसिध्यति। सोऽयं व्यवहारव्यतिक्रमः।

**जगाद सोऽस्मद्गुरवेऽन्विताय**
**पराशरायाथ बृहस्पतेश्च (३, ८, ८)।**

अत्र विभक्तिभेदः कथम्। एकत्र सम्प्रदानताऽपरत्र सम्बन्ध इति वैषम्यं किंकृतम्? चापलकृतमिति जानीहि।

**क एष योऽसावहमब्जपृष्ठे (३, ८, १८)।**

योऽसावहमब्जपृष्ठे वर्ते स एषोऽहं क इति विवक्षति। अब्जपृष्ठे वर्तमानोहं क इति मितैरक्षरैः सुवचोऽयमर्थः। नार्थः शब्दाडम्बरेण।

**प्रेक्षां हरन्तं हरितोपलाद्रेः**
**सन्ध्याभ्रनीवेरुरुरुक्ममूर्ध्नः (३, ८, २४)।**

सन्ध्याभ्रनीवेः सन्ध्याभ्रं नीविर्यस्य स हरितोपलाद्रिर्मरकतमणिपर्वतः, तस्य। नीवी जघनवासो भवति जघनवाससो ग्रन्थिर्वा। पर्वतशिखराणि संश्रयन्मेघः प्रच्छद आस्तरणपटो वा शक्यो व्यपदेष्टुं न त्वधोवस्त्रम्। कृष्णः स्वेन पीतेन परिकरेण सन्ध्याभ्रशोभां हरतीति कवेर्हृदयम्। परिकरेपि नीवीशब्द-व्यवहारो नौचित्यं भजते।

**नानामनोरथधिया क्षणभग्ननिद्राः (३, ९, १०)।**

प्रतिक्षणभग्ननिद्रा इति विवक्षति। अन्यथा च वक्ति। वीप्सायां प्रति-र्दुष्परिहरः। यथा स्थिते तु क्षणं क्षणमात्रं भग्ना निद्रा येषां त इत्यर्थः प्रतीयेत।

**आस्से श्रुतेक्षितपथो ननु नाथ पुंसाम् (३, ९, ११)।**

श्रुतं श्रवणम्। ईक्षितमीक्षणं दर्शनम्। तयोः पन्थाः श्रुतेक्षितपथः।

नैष व्यवहारः । श्रवणगोचरः श्रवणविषय इत्यादिरेव प्रसिध्यति वाचां मा.:।
लोचनपथं गतः, नयनयोरयनं गत इत्याद्यपि निर्दुष्टः प्रकारः ।

**यदा रहितमात्मानं भूतेन्द्रियगुणाशयैः ।**
**स्वरूपेण मयोपेतं पश्यन्स्वाराज्यमृच्छति (३, ९, ३३) ।**

यत्तदोर्नित्यः सम्बन्ध इति विरलमेवाद्रियते । यदा पश्यन्=पश्यति तदेति वक्तव्यम् ।

**एकं व्यभाङ्क्षीदुरुधा (३, १०, ८) ।**

विभागेऽर्थे भञ्जेः प्रयोगो व्यवहारं भनक्ति ।

**एतावाञ्जीवलोकस्य संस्थाभेदः समाहृतः (३, १०, ८) ।**

समाहृतः संक्षेपेग कथितः । संक्षिप्त इत्यर्थः । समाङ्पूर्वो हरतिः समुच्चयन एकीकरणे वर्तते न संक्षेपेण समासेन न्यसने ।

**वराहतोको निरगादङ्गुष्ठपरिमाणकः (३, १३, १८) ।**

तोकमिति नित्यं नपुंसकम् । अपत्यं तोकं तयोः समे इत्यमरः । नाम च धातुजमाह निरुक्ते व्याकरणे शकटस्य च तोकम् इति भाष्यं च ।

**अभूतशत्रुर्जगतः शोकहर्ता**
**नैवाधिकं तापमिवोडुराजः (३, १४, ४८) ।**

उपमानोपमेययोरेकवाक्यतायां तापम् इत्यत्र द्वितीया न सिध्यति, हर्तेत्यनेनैकदेशेनानन्वयात् । शोकं हर्तेत्येवं चेद् व्यासेन ब्रूयादवद्यमपेयात् ।

**अलिभिर्विरुतया वनमालया च (३, १५, ४०) ।**

विरुतया निनादितया । रौतिरकर्मको विरौतिश्च । विः सकर्मकतां नापादयति ।

**मह्यं भवस्य भवतां च भजन्तमङ्गम् (३, १५, ४२) ।**

मह्यमिति षष्ठ्यर्थे चतुर्थी, यथेह तथाऽन्यत्र । तादर्थ्ये चतुर्थीति चेद् वैषम्यं रचनायाः ।

**यद् ब्राह्मणस्य मुखतश्चरतोऽनुघासम् (३, १६, ८) ।**

चरतो भुञ्जानस्य । यद्यपि चरतिर्गतिभक्षणयोः पठितस्तथापि व्यवहारे मनुष्येतरकृतभक्षणे दृश्यते । कामं यदि कश्चित् पशुवद् भुङ्क्ते तत्रोपचाराच्चरतेः प्रयोगो न विरुध्यते । घासेऽर्थे घासशब्दप्रयोगोऽपि व्यवहारमतिक्रमाय भवति ।

भगभाजनस्त्वम् (३, १६, २१)।

भगभाजनम् इत्येवोचितम्। पात्राद्यन्तस्तत्पुरुषो नपुंसकमिति सर्वस्य विदितोर्थो बालस्याबालस्य च।

नष्टभागणे द्योम्नि (३, १७, ६)।

नक्षत्रं भं तारा इति तारावचनो भशब्दो नित्यं नपुंसकम्। अत्र कश्चित्समाधित्सया प्रवृत्त आह—भाः प्रभाः (सूर्यादीनाम्)। तासां गणः समूहः। स कीदृश इति स एव स्वयं वेद। यच्च ज्योतिश्चक्रमिति श्रूयते तत्र ज्योतींषि तारकादीनि गृह्यन्ते न दीप्तयो द्युतयो वा।

शापो मयैव निमितः (३, १६, २६)।

निमितो मुक्तो दत्तः। डुमिञ् प्रक्षेपण इत्यस्मान्निष्ठायां मितमिति रूपम्। निपूर्वो मिनोतिर्निखनन आरोपणे वा वर्तते तथा चापस्तम्बधर्मसूत्रे प्रयोगः—तद्यथाऽऽम्रे फलार्थे निमिते छाया गन्ध इत्यनूत्पद्येते (१, ७, २०, ३)। निमित आरोपिते। यूपो यस्यां निमीयते (अथर्व० १२, १, ३८)। निमीयते निखन्यते। पुराणकृता गृहीतोऽर्थस्तु न क्वापि विलोक्यते।

निरुद्धकाण्ठौ स्फुरबङ्गदाभुजौ (३, १७, १७)।

केयूरमङ्गदं तुल्ये इति कोषप्रामाण्यादङ्गदं नपुंसकम्। भुजेति टाबन्तं स्त्रियामपीति स्वीकारेपि पुंवद्भावस्य दुर्वारत्वात्स्फुरदङ्गदभुजावित्येव निर्दुष्टं वचः।

सत्यं वयं भो वनगोचरा मृगा
युष्मद्विधान् मृगये ग्रामसिंहान् (३, १८, १०)।

पूर्ववाक्य उपात्तं वयम् इति बहुवचनान्तं कर्तृपदमुत्तरस्मिन्ननुवर्तते। तदिदमेकवचनान्तया मृगये इति क्रियया न युज्यते। वयं मृगय इति किमप्युच्छृङ्खलं वचः। नहि कश्चिच्चित्तवानेवं ब्रूयात्।

यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः (३, १८, १२)।

सोऽसभ्य इति वाच्यमवाच्यतायै। यत्तदोर्नित्यः सम्बन्ध इति विरलं समाद्रियते।

आजहारोल्बणं क्रोधम् (३, १८, १३)।

आहरतिरिहोत्पादनेऽर्थे। तत्र चायं ण्यन्तः प्रयुज्यते। एष प्रायिको व्यवहारः।

**व्यभादिलायामिव शुष्मिणोर्मृधः (३, १८, १९)।**

मृधमास्कन्दनं संख्यं समीकं साम्परायिकम् इत्यमरवचनान्मृधं नपुंसकम्।

**मैनं मायाविनं दृप्तं निरङ्कुशमसत्तमम्।**
**आक्रीड ... ... ... ... ... ... ... ... (३, १८, २४)।**

यथा केवलः क्रीडतिरकर्मकस्तथाऽऽङ्पूर्वोऽपि। तेन एनमिति द्वितीया नोपपद्यते। आत्मनेपदं त्विच्छन्ति पाणिनीयाः।

**वरदो यदि मे ब्रह्मन् पुत्रमिन्द्रहणं वृणे।**
**अमृत्युं मृतपुत्राहं येन मे घातितौ सुतौ (३, १८, ३७)।**

येनेति वृत्तिच्छन्नमिन्द्रं परामृशति। नैष व्यवहारः।

**देवताः प्रभया या याः ... असृजत्।**
**ते अहार्षुर्देवयन्तः ... ... ... (३, २०, २२)।**

स्वार्थे तलन्तं देवतेति नित्यं स्त्री। तेनोत्तरवाक्ये 'ते' इति पुंस्त्वेन निर्देशो नोपपद्यते। अर्थमात्रविवक्षया पुंस्त्वमिति कस्यचित्प्रमत्तगीतम्।

**सरस्वत्यां तपस्तेपे सहस्राणां समा दश (३, २१, ६)।**

किमिदं संस्कृतम्? ओमिति चेत् किं नामापभ्रंशः? दश सहस्राणि समा इति वोच्येत व्यासेन, दश समासहस्राणि, दश समानां सहस्राणीति समासव्यासाभ्यां वा। प्रकारान्तरं नास्ति।

**दुकूलक्षौमकौशेयैर्नानावस्त्रैर्विराजितम् (३, २३, १५)।**

दुकूलं क्षौमादीत्यमरवचनाद् दुकूलक्षौमयोरभेदः। दुकूलं सूक्ष्ममिति टीकाकृत्। तन्न। दुकूलं सूक्ष्मं वस्त्रं भवति न सूक्ष्ममात्रम्। अतएव दुकूलनिवासिनीति कालिदासप्रयोगः।

**एवं योगानुभावेन दम्पत्यो रममाणयोः।**
**शतं व्यतीयुः शरदः काममालसयोर्मनाक् (३, २३, ४६)॥**

शतं शरदो मनाग् व्यतीयुः। अचिरकाल इवात्यगुरिति विवक्षति। यत्सत्यं कथ्यं कथयितुमञ्जसा नायमर्हति कविः।

**सतां प्रसङ्गान्मम वीर्यसंविदो**
**भवन्ति हृत्कर्णरसायनाः कथाः (३, २५, २५)।**

हृत्कर्णरसायना इत्यत्र पुंस्त्वं (स्त्रीत्वं चापि) दुष्यति। अयनं नपुंसकम्। षष्ठीसमासश्चायम्। तेन हृत्कर्णरसायनानीत्येव युक्तम्।

**काचित्त्वय्युचिता भक्तिः (३, २५, २८)।**

चिच्छब्दोऽस्थाने। किमः प्रश्नार्थतां विहन्तीति परिहार्यः।

**अत्रैव नरकः स्वर्ग इति मातः प्रचक्षते (३, ३०, २९)।**

नरकः स्वर्गश्चेति चोऽपेक्ष्यते। चशब्दपरिहारो हिन्दीवाग्व्यवहार-मनुहरति।

**न लोलुपायोपदिशेन्न गृहारूढचेतसे**
**नासक्ताय च मे जातु न मद्भक्तद्विषामपि (३, ३२; ४०)।**

विचित्रा भाषितभङ्गी। वाक्यत्रये चतुर्थ्यन्तानि लोलुपादीनि प्रयुज्यान्त्ये चतुर्थे वाक्ये षष्ठीप्रयोगेन प्रक्रमं भनक्ति। तदिदं व्यवहारविदो न रोचयन्ते।

**यज्जिह्वाग्रे वर्तते नाम तुभ्यम् (३, ३३, ७)।**

तवेति तु शेषे षष्ठी प्रयोज्या। चतुर्थ्याः कः प्रसङ्गः ?

**किंचिच्चिकीर्षवो जाता एतदाख्याहि मे गुरो (४, १, १६)।**

किं कर्तुमिच्छव इति विवक्षति। किमः प्रश्नार्थतां विहन्तुं चिच्छब्दं चानुबध्नाति।

**पितर्यप्रतिरूपे स्वे (४, १, ६६)।**

पित्रादयः सम्बन्धिशब्दाः। पितरं नमति मातरं नमति। यो यस्य पिता तं नमति। या यस्य माता तां नमतीति गम्यते। सम्बन्धवचनः स्वशब्दो न दीयते। वैयर्थ्यात्। हिन्द्यां त्वेष व्यवहारः प्रचरति बहुलः।

**आप्लुत्यावभृथं यत्र गङ्गा यमुनयाऽन्विता (४, २, ३५)।**

अवभृथो नाम दीक्षान्तो यज्ञो भवति। अवभृथशब्दोऽवभृथस्नानमप्याह उभयथाऽपि आप्लुत्य (=स्नात्वा) इत्यस्यावभृथः कथं कर्म भवतीति न विज्ञायते।

**अमी विबुधा व्रजन्ति हि (४, ३, ८)।**

अद इति विप्रकृष्टस्य निर्देशे वर्तते। अयं तु सन्निकृष्टमप्यदसाऽऽह। अयं व्यहारातिक्रमः।

**तत्र स्वसॄर्मे ननु भर्तृसम्मिता**
**द्रक्ष्ये ... ... ... ... ... ... ... (४, ३, १०)।**

सम्मिताः सहिताः संहिता इति विवक्षति। तदिदं माङ् माने इत्यस्य निष्ठायां रूपम्। विवक्षितार्थार्पणाय सम्पूर्व एतिः प्रयोक्तव्यः।

अनाहुता अप्यभियन्ति सौहृदं
भर्तुर्गुरोर्देहकृतश्च केतनम् (४, ३, १३) ।

सौहृदं सुहृत्सम्बन्धि । अत्र सम्बन्धस्तद्धितेनोक्तोऽपरत्र भर्तुरित्यादिषु षष्ठ्या । तदिदं रचनावैषम्यं वाग्योगविदो न स्वदन्ते । सुहृत्सम्बद्धम् इत्यप्रज्ञातेनार्थेन च दूयन्ते ।

आरोपितभ्रूभिरमर्षणाक्षिभिः (४, ३, १८) ।

उत्क्षिप्तेऽर्थे आरोपितशब्दप्रयोगः संस्कृतवाग्व्यवहारं व्यभिचरति, हिन्दीव्यवहारेण च संवदति ।

तन्माल्यभस्मनृकपाल्यवसत् पिशाचैः (४, ४, १६) ।

अत्र तच्छब्देन श्मशानं गृह्यते । श्मशानस्थमाल्यादि बिभ्रच्छिवस्तत्र पिशाचैः समं वसतीत्याह । अनद्यतनभूतेऽर्थे शिष्टं लङं वर्तमाने कथं प्रयुङ्क्ते । विद्वद्व्याप्य एष व्यवहार इति कस्मादतो न वित्रस्यति ।

प्राप्तं किम्पुरुषैर्दृष्ट्वा त आराद् ददृशुर्वटम् (४, ६, ३१) ।

ते इति द्वाविंशे श्लोके निर्दिष्टान् विबुधान्परामृशति । सर्वनाम्नां संनिहितपरामर्शित्वमित्यभियुक्तोक्तिः किं नाद्रियते ।

न वै सतां त्वच्चरणार्पितात्मनां
भूतेषु सर्वेष्वभिपश्यतां तव ।
भूतानि चात्मन्यपृथग् दिदृक्षतां
प्रायेण रोषोऽभिभवेद्यथा पशुम् (४, ६, ४६) ।

उपमेये षष्ठी, उपमाने द्वितीयेति विभक्तिवैषम्यं न सहन्ते व्यवहारशुद्धिमिच्छवः कोविदाः ।

न ब्रह्मबन्धुषु च वां भगवन्नवज्ञा
तुभ्यं हरेश्च कुत एव धृतव्रतेषु (४, ७, १३) ।

तुभ्यमिति षष्ठ्यर्थे चतुर्थी किंकृता । अन्यत्राप्येवमकस्मादसदाचरति कविः । तस्मान्नैतच्चित्रम् ।

दृष्टः किं नो दृग्भिरसद्ग्रहैस्त्वम् (४, ७, ३७) ।

दृक् स्त्री । असद्ग्रहः पुमान् । कुतः सामानाधिकरण्यम् ?

मुनयः पदवीं यस्य निःसङ्गेनोरुजन्मभिः (४, ८, ३१) ।

उरुरिह संख्याबहुत्वे प्रयुक्तः । अन्यत्र महत्त्वं वैपुल्यं वाह न तु संख्येयबहुत्वम् । किमयं सर्वस्य विदितमेतमर्थं न प्रवेति ? बाढं प्रत्येति । उरुशब्दे

प्रीयतेऽयम् । उरुक्रमे विष्णुनामनि उरुः पूर्वपदमिति तत्रास्य प्रेमा । तेनातिप्रेम्णा परवान्नियतविषयतामस्य विस्मरन्यत्र तत्र प्रयुङ्क्त इति प्रेमातिशयोऽपराध्यति न प्रयोक्ता ।

**येनाञ्जसोल्बणगुरुव्यसनं भवाब्धि**

**नेष्ये** ... ... ... ... ... ... ... (४, ९, ११) ।

नेष्ये तरिष्यामि । न हि नयतिः क्वचित् पारगमने दृष्टः ।

**प्रस्थिते तु वनं पित्रा** (४, ९, २२) ।

प्रस्थितं प्रस्थानम् । भावे क्तः । वनं प्रति प्रस्थाने कृते सति । इत्थं व्याख्यानेऽपि प्रतिरध्याहार्यो भवति । न हि सचेता वक्ताऽत्र न्यासे प्रतिं परिहरेत् । पितरि वनं प्रस्थिते इति ऋजुर्वाचां मार्गः कुतो नाश्रीयते ?

**चरन्ति दक्षिणीकृत्य भ्रमन्तो यत् सतारकाः** (४, ९, २१) ।

प्रदक्षिणीकृत्य प्रदक्षिणं कृत्वेति वा प्रसिध्यति । किमित्यव्यवहृतपूर्वं नूत्नं दक्षिणीकृत्येति कल्प्यते ।

**ऋषिभिः स्वाश्रमपदं गते** (४, १४, ३५) ।

इदं किमप्युद्वेगाय धीमताम् । ऋषिषु स्वाश्रमपदं गतेष्वित्येवं भावलक्षणया सप्तम्या वक्तव्योऽर्थः । शिष्टसरणिरेवानुसार्या न तु स्वतन्त्रैकपदी कल्पनीया ।

**अमुष्य क्षन्तुमर्हसि** (४, २०, २) ।

अमुष्येति षष्ठी व्यवहारानुगा न । द्वितीयैव व्यवहारमनुगच्छेत् ।

**महाधने दुकूलाग्र्ये परिधायोपवीय च** (४, २१, १७) ।

द्वे अत्रोत्तमे दुकूले । तयोर्द्वयोः कर्मभूतयोः परिधानोपसंव्यानयोः क्रिययोर्युगपदन्वयो न घटत इति वित्रशाष्टीकाकारा एकस्य दुकूलस्यैकत्र क्रियायामन्वयं कल्पयन्त्यपरस्यापरस्याम् । स चासंभवी । यत्सत्यं सर्वत्रानृज्वी सरणिरस्य पुराणकारस्य । किं च । उपवीयेत्यपि व्यवहारमुच्चरतेऽपाणिनीयं चास्ते । उपसंव्यायेति तु दोषलेशास्पृष्टं वचः ।

**अहो ममामी वितरन्त्यनुग्रहम्** (४, २१, ३६) ।

वितरतिरिह क्रियासामान्ये प्रयुक्तः । दानेऽस्य वृत्तिर्निरूढा ।

**नात्यद्भुतमिदं नाथ तवाजीव्यानुशासनम् (४, २१, ५०)।**

आजीव्यानामनुशासनमिति विग्रहः। आजीव्य उपजीव्य आश्रेयो भवति न त्वाश्रितवान् कश्चित्। उपजीव्यानामनुशासने न विवक्षा कवेः। तेनासाङ्गत्यं प्रणिभाल्यसमाधित्सयेत्थं कल्पयते श्रद्धाजडष्टीकाकारः—**आजीविनां सेवकानामा-समन्तादनुशासनम् इति**। स प्रष्टव्यः किमिदमाऽऽनुशासनम्? क्वेदमन्यत्र दृष्टं श्रुतं वा। अलमात्मानमुपहास्यतामुपनीय।

**यथाचरेद् बालहितं पिता स्वयम्।**
**तथा त्वमेवार्हसि नः समीहितुम् (४, २०, ३१)।**

बालहितमित्यत्र वृत्तिच्छन्नं हितं समीहितुम् इत्यस्य कर्मत्वेन योजयति। इन्द्रस्येव बलात्कृतिरियम्।

**आत्तकाममिवात्मानं मेने आत्मन्यवस्थितः (४, २२, ४९)।**

यत्र पूर्वे वाग्योगविद आप्तकामम् इति स्माहुस्तत्रायमात्तकामम् इत्याहापूर्वतायै।

**एकान्तभक्तया को वाञ्छेत्पादमूलं विना बहिः (४, २४, ५५)।**

बहिर्बाह्यं बहिर्विषयसुखम्। बहिःशब्दोऽधिकरणशक्तिः, इह त्वधिकरणस्थ आधेये प्रयुक्तः। तदिदं व्यवहारदूषणायालम्।

**स्वर्णरौप्यायसैः शृङ्गैः (४, २५, १४)।**

अत्र सौवर्णरौप्यायसैरिति वक्तव्यम्। यद्यपि स्वर्णस्य विकारोऽलङ्कारः स्वर्णमिति शक्यं व्याख्यातुम्। तथापीह शृङ्गविशेषणत्वान्नेदं घटते।

**गन्धर्वास्तथा बलिनः षष्ट्युत्तरशतत्रयम् (४, २७, १३)।**

षष्ट्युत्तराणि त्रीणि शतानीत्येवं वक्तव्यम्। संख्याया अवयवे तयप्। तस्य द्वित्रिभ्यां तयस्यायज्वेत्ययजादेशः। अवयवा अवयविनः सम्बन्धिन इति सामर्थ्याद् अवयवी प्रत्ययार्थः सम्पद्यते। गन्धर्वाणां बलिनां षष्ट्युत्तरशतत्रयमिति वोच्येत, गन्धर्वाः षष्ट्युत्तरशतत्रयाः (षष्ट्युत्तरशतत्रये वा) इति वा। तृतीयः पन्था नास्ति।

**क्षीयमाणे स्वसम्बन्धे एकस्मिन्बहुभिर्युधा (४, २७, १७)।**

स्वसम्बन्धिनीति वक्तुमुचितम्।

**द्वाविमावनुशोचन्ति ... ... ... ...**

**यल्लोकशास्त्रोपनतं न राति न तदिच्छति (४, २७, २५) ।**

यो (यश्चेति वा) लोकशास्त्रोपनतं न राति यश्च तन्नेच्छतीत्येवं न्यासः कार्यः, येन दानादानक्रिये भिन्नकर्तृके स्फुटमवगम्येयाताम् । यथास्थिते तु कर्तृद्विता द्वावित्युक्ता न सिध्यतीष्टा । यश्च मूढतमो लोके यश्च बुद्धेः परं गतः । तावुभावित्यादिषु वश्यवाचां कवीनां या शैली सा शीलनीया ।

**तेषामाविरभूत् कृच्छ्रं शान्तेन शमयन्रुचा (४, ३०, ४) ।**

शान्तेन रुचेति समानाधिकरणयोः पदयोर्लिङ्गभेदो बृहन्नाम व्यवहार-भ्रंशः । लिङ्गभेददूषणपराचिकीर्षया कश्चिद् वपुषेति विशेष्यमध्याहरति । इदं चेद् विवक्षितं कवेः स्यात्स्वयमेव किमिति तथा नोच्चारयेत् । किं च । नमः शान्ताय तेजसे इति हर्य्युक्तिसंवादायार्थगौरवाय च युज्यते शान्तमिति रुचं विशिष्यात् इति ।

**कण्डोः प्रम्लोचया लब्धा कन्या कमललोचना (४, ३०, १३) ।**

कण्डुना प्रम्लोचायां लब्धा इत्येवं व्यवहारानुमतं वाच्यम् । प्रसविनी जननी प्रसवस्याधिकरणं मता । एष व्यवस्थितो व्यवहारः, स नान्यथनीयः । अधिकं चेद् दिदृक्ष्येत, अस्मत्कृतिर्वाग्व्यवहारादर्शो द्रष्टव्यः ।

**यतो गताः (४, ३०, २०) ।**

यतः=यं माम् । सार्वविभक्तिकस्तसिः । शास्त्रेणाभ्यनुज्ञातोपि न यत्र तत्र व्यवहारमवधीर्यं समाश्रयणीयः, अर्थप्रतिपत्तिं विलम्बयतीति ।

**आर्या नताः सुहृदो भ्रातरश्च (४, ३०, ३९) ।**

नताः=नमस्कृताः । नत इति कर्तरि क्ते प्रसिध्यति । प्रणतः कृतप्रणामो भक्त उच्यते । पतञ्जलिं प्राञ्जलिरानतोस्मीत्यादिषु तथा दर्शनात् । इदं शब्दस्वाभाव्यम् । अयमपि—अजं नतोस्मि (५, १८, ४) इत्यत्र कर्तरि क्तं प्रयुङ्क्ते ।

**यथैव सूर्यात् प्रभवन्ति वारः (४, ३१, १५) ।**

वार्जलम् । इदं च नपुंसकं भवति न क्वचित्पुमान्स्त्री वा । वार्वारी नपुंसके इति कोषः ।

**भौमस्वर्गभोगान् बुभुजे (५, २, १८) ।**

भूमिस्वर्गभोगान् इति समासवृत्त्यैवोच्यताम् । किमेकदेशे तद्धित-वृत्तिसंश्रयेण वैरूप्यकरेण ?

**भागवतवात्सल्यतया (५, ३, २)।**

किं भावप्रत्ययद्वयेन। अधिकस्याधिकं फलमिति चेद् वात्सल्यतात्वम् इत्युच्यतां तृतीयस्त्वोऽपि क्रियताम्।

अनुदिनमेधमानानुभावं प्रकृतयः ··· ··· अवनितलसमवनायातितरां जगृधुः। (५, ४, १) अत्र गृधिः सकर्मक इत्यभिमन्यते कविः। अयं च नित्यमकर्मक इति वितत्य निर्दिशतमस्माभिर्वाग्व्यवहारादर्शे। सोऽवलोकनीयः।

**तस्य हीन्द्रः स्पर्धमानो भगवान् वर्षे न ववर्ष (५, ४, ३)।**

स्पर्धमान ईर्ष्यन्नित्यर्थः। स्पर्धा सङ्घर्षो भवति नेर्ष्या।

**यदा मनोहृदयग्रन्थिरस्य**
**कर्मानुबद्धो दृढ आश्लथेत (५, ५, ९)।**

श्लथतिर्हिसायां पठितः सकर्मकः। इह चाकर्मक आश्रितः। आङ्पूर्वस्यास्य प्रयोगो विरलः, विपूर्वस्य तु बहुलः।

**पुरीषसुरभिसौगन्ध्यवायुः (५, ५, ३३)।**

पुरीषस्य सुरभिः=गन्धः। सुरभिशब्दः सौरभे प्रयुक्तो यथाऽधुनातन्यां हिन्द्याम्।

**तृणवीरुधा वर्तमानः (५, ८, ३१)।**

अन्यत्र वर्तयन्निति ण्यन्तस्य वृतु वर्तने इत्यस्य प्रयोगो दृश्यते। अण्यन्तस्य वर्तमान इत्यस्य वर्तमान इत्येवार्थः प्रतीयेत।

**तस्माद् भगवन्तो हृदयेन जाताः (५, ५, २०)।**

हृदयाज्जाता इत्येवं वक्तव्यम्। अङ्गादङ्गात्संभवसि हृदयादधिजायसे इति श्रुत्या संवादाय।

**औपकुर्वाणकर्मणि (५, ९, ६)।**

उपकुर्वाणस्येदमौपकुर्वाणं (कर्म)। उपकुर्वाणः सावधिकब्रह्मचर्यवान्, गुरोरधीत्य गृहं प्रविविक्षुः। समासवृत्त्यैवार्थगतेस्तद्धितवृत्त्या नार्थः। तद्धितसमासोभयवृत्तिसमाश्रयः केवलं गौरवाय भवति।

**भर्तृशासनमतिचरसि प्रमत्तस्य च ते।**
**करोमि चिकित्साम् (५, १०, ८)।**

अर्वाक्कालोऽयं कविः। यथेदानीं कथ्यं कथयति लोकस्तथैवायम्। नेत्थं पूर्वे व्यवजह्रुः।

**चेतोभिराकृतिभिरातनोति**
**निरङ्कुशं कुशलं चेतरं वा** (५, ११, ४)।

इतरदिति तूचितम्। सामान्ये नपुंसकं प्रयोज्यम्।

... ... ... ... ... ... **उरुगार्हमेध-**
**वितानविद्योरुविजृम्भितेषु** (५, ११, २)।

गृहसम्बन्धिनो गार्हाः (मेधा यज्ञाः)। पूर्वं तद्धितः पश्चात् समानाधिकरणस्तत्पुरुष इति वृत्तिद्वयसमाश्रयः केवलं गौरवायार्थप्रतिपत्तिमान्थर्यायेति परिह्रियते शिष्टैः।

**ज्वरामयार्तस्य यथागदम्** (५, १२, १)।

अगदः पुमान्। इति चिन्ताविषघ्नोऽयमगदः किं न पीयत इत्यादिषु वाक्यसहस्रेषु तथा दर्शनात्।

**यस्मिन्भवान् रूढनिजाभिमानः** (५, १२, ६)।

निज आत्मा। अयं महतां विभ्रमो नाम। निज आत्मीयो भवति, नात्मा।

**परस्परं चालषते निरन्धः** (५, १३, ६)।

क्रियाव्यतिहारे द्योत्ये परस्परमित्युच्यते। परस्परमन्योन्यमितरेतरं मिथ इति पर्यायाः। यत्र परः परं याचते तत्रोच्यते परस्परं याचन्ते (निरन्धसः)। एककर्तृकायां क्रियायां परस्परशब्दोऽनवकाशः। अनौचित्यं चापि। ये निरन्धसस्ते परस्परयाचनेन किं लभन्ते ?

**क्वचिच्च वात्यौपम्यया प्रमदयाऽऽरोहमारोपितः** (५, १४, ९)।

उपमैवौपम्यम्। नार्थस्तद्धितेन। आरोहोऽङ्क उत्सङ्गो वा न भवति। आरोहः श्रोणी। श्रोण्यामप्यारोहो वरस्त्रिया इत्यमरः।

**महापुरुषगुणभाजनो महाभागवतः** (५, १८, ६)।

महापुरुषगुणभाजन इत्यत्र पुंस्त्वमार्षमिति कश्चित्प्रलपति। अयं चासकृद् भाजनान्तस्य तत्पुरुषस्य पुंस्त्वमिच्छति।

**ह्याराध्य लोके पतिमाशासतेऽन्यं**
**तासां न ते वै परिपान्त्यपत्यम्** (५, १८, १९)।

अन्यं पतिमाशासते। ते पतय इत्यादि। स पतिरिति तु युज्यते वक्तुम्। भिन्नवचनताद्भिगकरी भवति।

**मर्त्यावतारस्त्विह मर्त्यशिक्षणं**
**रक्षोवधायैव न केवलं विभोः** (५, १९, ५) ।

यथा रक्षोवधायेत्यत्र तादर्थ्ये चतुर्थी तथा मर्त्यशिक्षणमित्यनुक्त्वा मर्त्यशिक्षणायेति चतुर्थी श्रेया ।

**अविद्याग्रन्थिरन्धनद्वारेण** (५, १९, २०) ।

रन्धनं निरास इति टीका । ग्रन्थयो हि भिद्यन्ते विकीर्यन्ते त्रिस्रस्यन्ते विसीयन्ते वा । रन्धनं तु तेषां न क्वचिच्छ्रूयते । वेदे रधिर्वशगमने हिंसायां च प्रसिध्यति, लोके तु पाके हिंसायां चेति निरासोऽर्थः कुतः ।

**स्वं द्वीपं सप्तवर्षाणि विभज्य** (५, २०, २) ।

सप्तसु वर्षेषु विभज्येत्येवं व्यवहारोऽनुसृतो भवति । द्वितीया तु व्यवहारं विरुन्धे ।

**स्वे द्वीपे वर्षाणि सप्त विभज्य** (५, २०, २०) ।

इहापि व्यवहारविसंवादो यथाऽनन्तरपूर्वे । अर्थमनपेक्ष्य यां कामपि सुब्विभक्तिं प्रयुङ्क्ते ।

**इह तु पुनर्भवे त उभयशेषाभ्यां निविशन्ति** (५, २६, २७) ।

उभयोर्धर्माधर्मयोः । न हि धर्माधर्मौ द्वाविति तयोः शेषेण द्वित्वावच्छिन्नेन भाव्यम् । शेष इत्येकोऽर्थः, न तु नाना । तेनैकवचनान्तः शेषशब्द एव प्रयोगमर्हति ।

**प्लावितेन स्वरेणोच्चैराजुहवाकुलेन्द्रियः** (६, १, २९) ।

प्लुतेन स्वरेणेति वाच्यम् । नार्थो णिचा । कामं प्लुतं करोतीत्यर्थे प्लावयतीति निर्दुष्टं वचः ।

**तदुत्तमश्लोकगुणोपलम्भकम्** (६, २, ११) ।

अत्र नपुंसकमेकवचनान्तं तदिति शब्दो वक्तृबुद्धिस्थं नामपदोदाहरणं परामृशति । नैष शिष्टजुष्टो व्यवहारः । वाक्ये श्रूयमाणमेव किमपि पदान्तरं सर्वनाम सहेत परामर्ष्टुम् ।

**यथागदं वीर्यतममुपयुक्तं यदृच्छया** (६, २, १९) ।

अगदः पुमान् । इति चिन्ताविषण्णोऽयमगदः किं न पीयत इति हितोपदेशस्य पठका बाला अपि विदुरगदः पुंसि नियत इति । वीर्यतमम् इत्यनुक्त्वा वीर्यवत्तमम् इति वाच्यम् । अर्श आद्यजन्तस्य वीर्यशब्दस्य प्रयोगादर्शनात् । न हयुच्यते वीर्यमोषधिरिति, किन्त्वर्हं वीर्यवतीति ।

उपलभ्योपलब्धान्प्राक् (६, २, ४२)।

एते मया पूर्वमुपलब्धा दृष्टा इति मत्वेत्यर्थं विवक्षति। यथास्थिते तु प्राग् दृष्टान्पुनर्दृष्ट्वेत्यर्थः स्यात्।

एतन्मुने वृश्चति लोकसंशयं
नहि त्वदन्यः ... ... ... ... (६, ३, २)।

संशयः पुंमान्, तत्परामर्शक एतच्छब्दः कथं नपुंसकम् ? संशयकर्मके छेदे द्वैधीकरणे पठितश्छिदिरेव व्यवहार्यो न तु वृश्चतिः। तत्रास्यादर्शनात्।

तोकानां पितरौ बन्धुर्दृशः पक्ष्म स्त्रियाः पतिः।
पतिः प्रजानां भिक्षूणां गृह्याज्ञानां बुधः सुहृत् (६, ४, १२)।

अत्र बन्धुरित्यनुषङ्गेणैव लभ्यं विधेयमिति सुहृद् इति प्रक्रमभङ्गकरेण गडुभूतेन नार्थः। प्रजानां पतिरित्यत्र पती राजानमाह। केवलः पतिशब्दस्तत्र न प्रसिध्यतीति न न विदुर्बुधाः।

अलं वग्धैर्द्रुमैर्दीनैः खिलानां शिवमस्तु वः (६, ४, १५)।

अलमिति निषेधार्थे। न किमपि सेत्स्यतीत्यर्थः। न केवलं श्रूयमाणैव क्रिया कारकविभक्तेः प्रयोजिका, गम्यमानापीति द्रुमैरिति करणे तृतीया। अर्थस्तु न संगतिमेति। दीनानां द्रुमाणां दाहो न कर्तव्योऽनर्थकत्वादिति निषेधे वाक्यार्थः पर्यवस्यति। तेन दीनद्रुमदाहेनालम्, इति वा वक्तव्यम्, दीनद्रुमानलं दग्ध्वेति वा। प्रकारान्तरं नास्ति। यथास्थिते तु दग्धानां सतां निष्प्रयोजनत्वमुक्तं भवति, न तु साक्षाद् दाहो निषिध्यते।

को गृध्येत पण्डितो लक्ष्मीम् (६, ७, १२)।

इह गृधिः सकर्मकः प्रयुक्तः। अकर्मकश्चायमिति पुरस्ताद् विस्तरेणावोचाम।

कथं नु मद्विधो नाथा लोकेशैरभियाचितम्।
प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते (६, ७, ३५)।

किमपि मनसिकृत्य तत्परामर्शकानि सर्वनामानि प्रयुङ्क्त इत्येतदस्य शीलं कवेः। 'सः' इत्यनेन वाक्येऽश्रूयमाणं प्रत्याख्यानाभावं परामृशति। यत्सत्यं यत्नमृग्याऽस्य विवक्षा भवति।

**स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि ।**

**न राति रोगिणोऽपथ्यं वाञ्छतो हि भिषक्तमः (६, ९, ५०)।**

हिरिति निपातो द्विष्प्रयुक्तो दुष्प्रयुक्तो ननु। पूर्वस्मिन्वाक्ये चतुर्थी, उत्तरस्मिश्च षष्ठीति विभक्तिवैषम्यं न रुचेर्विषयो वाग्योगविदाम् ।

**अग्रे तिष्ठत मात्रं मे (६, ११, ५)।**

मात्रं क्षणमात्रम् । न ह्यन्यत्रैषा संक्षिप्ता वाक् छ्रूयते ।

**जहद्युद्यतास्त्राः प्रहरन्ति मह्यम् (६, ११, १७)।**

माम् इति वा मयीति वा वक्तव्यम् । उभयी हि लौकिकी विवक्षा ।

**याः सम्पदो दिवि भूमौ रसायाम् ।**

**न राति ... ... ... ... ... ... (६, ११, २२)।**

यत्तदोर्नित्यः सम्बन्ध इति नाद्रियते ।

**अजातपक्षा इव मातरं खगा**

**स्तन्यं यथा वत्सतराः क्षुधार्ताः (६, ११, २६)।**

वत्सतरा अतिबाला इति टीकाकृन्मुह्यति मूलकारश्च । नात्रार्थे शास्त्रेण ष्टरच् विधीयते किन्तर्हि तनुत्वे। वत्सस्य तनुत्वं द्वितीयवयःप्राप्तिः। द्वितीयं वयस्तारुण्यम् ।

**बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः (७, ५, ९)।**

तवेति तु युक्तम् । इह पुराणे षष्ठीप्रसङ्गे चतुर्थी बहुला, विशिष्य सर्वनाम्नो युष्मदोऽस्मदो वा ।

**स यदाऽनुव्रतः पुंसां पशुबुद्धिर्विभिद्यते (७, ५, १२)।**

अनुव्रतोऽनुकूलः । अन्यत्रापकृष्टो ह्युत्कृष्टं प्रत्यनुव्रत उच्यते, अनुव्रतः पितुः पुत्र इत्यादिषु तथा दर्शनात् । अत्र तु वैपरीत्येन भगवान् मनुष्याणामनुव्रत इत्युक्तः। व्यक्तमस्थानेऽनुव्रतशब्दप्रयोगः ।

**विद्वांश्च दोषं परवित्तहर्तुः ।**

**... तदशान्तकामो हरते कुटुम्बी (७, ६, १५) ।**

तदिति सर्वनाम वृत्तिच्छन्नं वित्तं परामृशति। इत्थम्भूतः सर्वनाम्नां परामर्श इह पुराणे बहुलः ।

मोक्ष्येऽर्थपदवीं गतः (७, ७, ९)।

अपूर्वा वाक्सरणिः। सिद्धार्थः सन्निति विवक्षति। अर्थस्येष्टार्थस्य मार्गं प्रपन्न इत्यक्षरार्थः। नावश्यं मार्गं प्रपन्नः सिध्यति, गन्तव्यं यायान्न वा यायात्, विघ्नविहतो मध्ये विरमेत्। तेनेदं विवक्षितमर्थं नार्पयति, नूतनत्वमेव केवलं धत्ते।

सदाप्नोतीहया दुःखमनीहायाः सुखावृतः (७, ७, ४२)।

समानेऽर्थ एकत्र तृतीया, अपरत्र पञ्चमीति विभक्तिभेदः किंकृतः ?

राज्यं कोशगजामात्यभृत्याप्ता ममतास्पदाः (७, ७, ४४)।

आस्पदं नित्यं क्लीबम्। ममतापूर्वपदस्तत्पुरुषः समासः। तेन ममतास्पदमिति वाच्यम्।

अदृश्यतात्यद्भुतरूपमुद्वहन्
स्तम्भे सभायां न मृगं न मानुषम् (७, ८, १८)।

अत्यद्भुतरूपं यन्न मार्गमासीन्न मानुषम् इत्येवं सन्दर्भशुद्धिरेषणीया। यथास्थिते मृगम् इति नपुंसकं कण्टकायते।

प्रसूनवर्षैर्ववृषुः सुरस्त्रियः (७, ८, ३५)।

प्रसूनवर्षाणि ववृषुरिति वक्तव्यम्। अस्थाने तृतीया। यदि तृतीयायामभिनिवेशस्तर्हि तं हरिं प्रसूनवर्षैरभिववृषुरित्येवं न्यासः कार्यः। उक्तोऽयमर्थोऽस्माभिरधस्तादिति नेह प्रपञ्च्यते।

येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः।
तद्वक्षःपाटनेनासाम् ... ... ... ... ... (७, ८, ४७)।

आसाम् इति इदमा स्त्रीलिङ्गेन स्त्रीरत्नानि परामृशति। इमं गर्हितं व्यवहारव्यतिक्रमं को नाम सुधीर्विसोढुमर्हेत् ?

यद्यज्जनो भगवते विदधीत मानम् (७, ९, ११)।

मानः पुमान्। अयं तु नपुंसकमित्यभिमन्यते। यं यमिति वाच्यमवाच्यतायै।

कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः।
क्वेदं कलेवरमशेषरुजां विरोहः॥ (७, ९, २५)

 

द्वौ क्वौ महदन्तरं सूचयत इति न्यायविद उदाहरन्ति। अयं त्वेकत्र वाक्ये कुलशब्दं प्रयुङ्क्तेऽपरत्र क्वशब्दम्। नवतामभीप्सति व्यवहारं नानुविवृत्सति।

**त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ।**
**यत्साधोऽस्य गृहे जातो भवान्वै कुलपावनः॥ (७, १०, १८)**

एष प्रक्रमभङ्गः। ते इति युष्मदा प्रक्रम्योत्तरार्द्धे भवच्छब्द उपात्तः।

**साधवः समुदाचाराः (७, १०, १९)।**

सम्यगुत्तमाचारो येषां ते समुदाचाराः। इत्येवमर्थापयति श्रीधरः। यथा तु कविभिर्व्यवह्रियते तथा नास्यान्यपदार्थप्रधानता दृश्यते।

**दिष्ट्या त्वां समितोऽधुना (७, १०, २८)।**

समितः सम्यक् शरणं गत इति विवक्षति। शरणं गत इत्येव प्रतितिष्ठति व्यवहारः।

**वार्ता विचित्रा शालीनयायावरशिलोञ्छनम्।**
**विप्रवृत्तिश्चतुर्धेयम् ··· ··· ··· ··· ··· ··· (७, ११, १६)॥**

इह शालीनस्य कर्म शालीनमुक्तम्। यायावरस्य च यायावरम्। तन्नोपपद्यते। प्रत्ययमन्तरेण कर्मणः प्रतीतेरसंभवात्। कर्मणो व्यवसायस्य विवक्षातो नायं भावप्रधाननिर्देशः।

**एवं कामाशयं चित्तं कामानामतिसेवया विरज्येत (६, ११, ३४)।**

षष्ठीसमासे परवल्लिङ्गतया कामाशय इति स्यात्। आशयः पुंसि नियतः।

**विरज्येत यथा राजन्नग्निवत् कामबिन्दुभिः (७, ११, ३४)।**

अत्र वदिति प्रत्ययः क्रियतां यथेति वा पठ्यताम्। अत्र कामचारः। उभाभ्यां युगपद् उपताभ्यां नार्थः।

**पदानि गत्या वयसि (निवेशयेत्) (७, १२, २६)।**

वय इति कालेऽर्थे प्रयुक्तम्। बाल्यादि वयो भवति नतु कालसामान्यम्। कालकृतशरीरावस्था यौवनादिर्वय इति च (४, १, २०) सूत्रे वृत्तिः।

**मनःसंस्पर्शजान्दृष्ट्वा भोगान्**
**स्वप्स्यामि संविशन् (७, १३, २६)।**

स्वप्स्यामि स्वपिमि। अन्यत्रापि लकारप्रयोगे क्रियाकालमनपेक्ष्य प्रवर्तते। कस्मादेवमाचरति? परप्रेरितो वायमपचरति स्वतो वेति नाद्याप्युपधारयामः।

यावद् भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम् (७, १४, ८)।

यावता भ्रियेत जठरं तावतः स्वत्वमित्येवं वाच्यमवाच्यतायै। तत्तदर्थाभिधाने या या विभक्तिः प्राप्नोति सा सा प्रयोज्या, न तु प्रमत्तवन्निरङ्कुशं प्रवृत्त्यम्।

एतैरेषामन्तरं कियत् (७, १४, ९)।

एतेषामेषां चेत्युभयत्र षष्ठी व्यवहारानुगा भवति। अत्र भवतः किल मम च समुद्रपल्वलयोरिवान्तरम् इति मालविकायां भेद्यमानाभ्यामुभाभ्यां षष्ठ्याः श्रवणात्।

अप्येकामात्मनो दारां नृणां स्वत्वग्रहो यथा (७, १४, ११)।

आवन्तो दाराशब्द इहैव। सूत्रेषु भारतादौ च क्वचिद् बहुत्वं व्यभिचरन्दृष्टः, पुंस्त्वं त्वस्य तत्र स्थितम्। अयं तु पुंस्त्वमपि व्यभिचारयति।

कर्मनिष्ठा द्विजाः केचित्तपोनिष्ठा नृपाऽपरे।
स्वाध्यायेऽन्ये प्रवचने थे केचिज्ज्ञानयोगयोः (७, १५, १)॥

वृत्त्यन्तर्गतेन बलादनुवर्तितेन निष्ठापदेन निष्ठावन्तो लक्ष्यन्ते स्वाध्याये निष्ठावन्तः प्रवचने निष्ठावन्त इति। अन्यथा स्वाध्याये इत्यादीनि विषये सप्तम्यन्तानि पदानि साकाङ्क्षाणि तिष्ठन्ति विषयिणोऽश्रवणात्। अनृजुरस्य वाक्सरणिरुद्वेगाय सचेतसाम्।

मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया (७, १५, ७)।

न तथा पशुहिंसयेत्येवं व्यवहरणीयम्। यत्तदोर्नित्यः सम्बन्ध इति स्मरणीयम्।

गृहस्थस्य क्रियात्यागो व्रतत्यागो बटोरपि।
तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलोलता॥
आश्रमापसदा ह्येते ... ... (७, १५, ३८, ३९)॥

एते इत्यनेन क्रियात्यागादयः प्रत्यवमृश्यन्ते न चैते आश्रमा आश्रमापसदा वा भवन्ति। क्रियात्यागादयो गृहस्थादीनामपसदत्वलक्षणान्यभिप्रेयन्ते, न चासावभिप्रायः शब्दोक्तो भवति।

अभीषून्मन इन्द्रियेशम् (७, १५, ४१)।

मनोऽभीषून् इति रूप्यरूपकयोर्वचनभेदः किमप्युद्वेजयति सचेतसः। उपनिषत्सु तु मनः प्रग्रहमेव चेति तयोर्वचनैक्यमाश्रितम्, न च व्यवहारव्याकोपः श्रितः।

यावन्नृकायरथमात्मवशोपकल्पं

धत्ते ... ... ... ... ... ... ... ... ... ... ... ।

... ... ... ... ... ... ... ... ... ... ... ...

स्वाराज्यतुष्ट उपशान्त इदं विजह्यात् (७, १५, ४५) ॥

इदमा नपुंसकेन कायरथं प्रत्यवमृशति । तन्न युक्तम् । रथः पुमानित्याबालं प्रसिद्धेः ।

अग्निः सूर्यो दिवा प्राह्णः शुक्लो राकोत्तरं स्वराट् (७, १५, ५४) ।

दिवेत्यपोद्धृत्य दिनमिति वक्तव्यम् । इदं ह्यधिकरणशक्तिपदम् । प्रातिपदिकार्थे प्रथमान्तं त्विष्यते ।

न यस्य देवा ऋषयः पदं विदु-
र्जन्तुः पुनः कोऽर्हति गन्तुमीरितुम् (८, ३, ६) ।

ईरितुमुदीरयितुम् । उपसर्गत्यागो न व्यवहारमुच्चरते, णिच्परिहारस्तु न नोच्चरते ।

मुक्तो देवलशापेन हूहूर्गन्धर्वसत्तमः (८, ४, ३) ।

शापान्मुक्त इति तु विवक्षितमर्थमर्पयितुं प्रयोक्तव्यम् । शापे कर्तृत्वे संश्रिते कस्मान्मुक्त इत्याकाङ्क्षा न शाम्यति ।

ऊर्वोर्विडोजोऽङ्घ्रिरवेदशूद्रौ
लोभोऽधरात्प्रीतिरुपर्यभूद्द्युति-
र्नस्तः पशव्यः स्पर्शेन कामः ।
भ्रुवोर्यमः पक्ष्मभवस्तु कालः (८, ५, ४१-४२) ॥

अत्र पद्ययोः किमपि क्षोभकरो विभक्तीनां व्यतिकरः । स व्यवहारदूषणम् । ऊर्वोर्विड् । अत्र पञ्चम्या जनक उक्तः प्रथमया च जन्यः । अङ्घ्रिरवेदशूद्रौ । अत्र प्रथमान्तौ समानाधिकरणौ जन्यजनकौ । पशव्यः स्पर्शेन कामः । अत्र स्पर्शेनेति तृतीयया जनकः प्रथमया च जन्यः कामः । चतुर्थे चरणे पक्ष्मभवस्तु काल इत्यत्र समासवृत्त्या जन्यजनकभाव उक्तः पञ्चम्याश्च लुगाश्रितः । अहो वाराङ्गनेवास्य वाक्सरणिरनेकरूपा ।

अणोरणिम्ने (८, ६, ८) ।

अणोरणीयस इति तु वक्तव्यम् । अणोरणीयान्महतो महीयान् इत्यादेरुपनिषत्सु दृष्टेः । भावप्रत्ययान्तेन तु प्रकृते नार्थः ।

**यस्य पीतस्य वै जन्तुर्मृत्युग्रस्तोऽमरो भवेत् (८, ६, २१)।**

येन पीतेनेति करणे तृतीया वक्तव्या। यस्मिन्पीते सतीति भावलक्षणा सप्तमी वा। शेषे षष्ठ्या: क: प्रसङ्ग:।

**परिवीय गिरौ तस्मिन्नेत्रम् (८, ७, १)**

नेत्रेण परिवीय (परिव्यायेति वा) गिरिमिति वक्तव्यम्। गिरिर्हि संवीयते संव्रियते आच्छाद्यते नेत्रेण।

**यदा सुधा न जायेत निर्मथन्थाजित: स्वयम् (८, ७, १६)।**

न जायेत=नाजायत। लङर्थे लिङ्। तत्कुत:?

**नूनं तपो यस्य न मन्युनिर्जय: (८, ८, २०)।**

यस्य (कस्यचित्) तपोस्ति तस्य मन्युनिर्जयो नास्ति। यत्तदोर्नित्य: सम्बन्ध इति न गणयति।

**तांश्चोपवेशयामास स्वेषु स्वेषु च पङ्क्तिषु (८, ९, २०)।**

सामानाधिकरण्येपि भिन्नलिङ्गता मर्मस्पृगिव भवति। पङ्क्ति: स्त्रियाम्। स्व: पुमान्, नपुंसकं वा। तमिमं लिङ्गभेदं व्यवहारविदो न सहन्ते।

**रथिनो रथिभिश्चैव पत्तिभि: सह पत्तय:।**
**हया हयैरिभाश्चेभै: समसज्जन्त संयुगे (८, १०, ८)॥**

अत्र हय इति हयस्थे लाक्षणिक:, इभश्चेभस्थे। अभिधया लभ्येऽर्थेऽन्वयानुपपत्तेरदर्शनात्किमिति लक्षणाऽऽश्रीयेत? हया हयैरिभाश्चेभै: संसज्जन्तो लक्ष्यन्ते नाम। अभिहितश्चार्थो न विवक्षित इति विवक्षितार्थाभिधानाय हयस्था हयस्थैरित्यादि निर्दुष्टं वच: श्रेयम्।

**क्षिपन्तो मर्मभिर्मिथ: (८, १०, १७)।**

मर्मसु क्षिपन्त: प्रहरन्त इति व्यवहारस्यानुसारेण पाठ्यम्। तृतीयाप्रयुक्ती केन प्रयुक्त: पुराणकार इति न सुकरमुन्नेतुम्।

**जत्रावताडयच्छक्रम् (८, ११, १४)।**

सन्धी तस्यैव जत्रुणी इत्यमराज्जत्रु नपुंसकम्।

**तमाहनन् नृप कुलिशे कन्धरे (८, ११, ३१)।**

कन्धरेति टाबन्तं ग्रीवायां प्रसिद्धम्। अथ ग्रीवायां शिरोधि: कन्धरेत्यपि इति चामर:। कन्धरो वारिवाहे स्यात् ग्रीवायां कन्धरा मतेति विश्वलोचनश्च।

**तूणावरिक्तौ कवचं च दिव्यम् (८, १५, ६)।**

अक्षयाशुगौ तूणीरौ यौ कदापि रिक्तौ न भवतः। सन्त्येकपदान्यव्यवधारणानीति भाष्यकारवचनाच्छक्यमेतत् समाधातुम्।

**उपधाव पतिं भद्रे (८, १७, १९)।**

उपधाव=अनुवर्तस्व। अत्रार्थ इहैव प्रयोगः।

**चतुर्भुजः शङ्खगदाब्जचक्रः (८, १८, १)।**

शङ्खगदाब्जचक्रमस्यास्तीति शङ्खगदाब्जचक्रः। अर्श आदित्वादच्। यत्राभिन्नरूपेण शब्देन तद्वतोऽभिधानं तत्रेदं प्रवर्तते। अत्र गणे अर्शस्, उरस्, तुन्द इत्यादीनि प्रातिपदिकानि पठितानि न तु पदसङ्घातः कश्चित्तेन समासादचः प्रवृत्तिर्नेष्टेति दर्शयति। आकृतिगणतायामप्यस्य व्यवहारोऽनुसार्यः। किं च। द्वन्द्वोपतापगर्ह्यादिनिरिति द्वन्द्वादिनिर्मत्वर्थीयो विधीयते। चीरजटाजिनी भरतः (श्रीरामायणे), कटकवलयिनी (स्त्री), शङ्खनूपुरिणी (स्त्री) इति च वृत्तौ। यद्यत्राप्यर्श आदित्वादच् स्याद् द्वन्द्वादिति विधिर्निर्विषयः स्यात्।

**इत्थं सशिष्येषु भृगुष्वनेकधा**
**वितर्क्यमाणो भगवान् स वामनः (८, १८, २४)।**

सशिष्यैर्भृगुभिर्वितर्क्यमाण इति निरवद्यं स्यात्। अनुक्ते कर्तरि तृतीया। यदि भावलक्षणायां सप्तम्यामभिनिवेशस्तदा वितर्कयमाणेष्विति कर्तरि शानजन्तं विशेषणं देयम्। गत्यन्तरं नास्ति।

**क्ष्मां द्यां दिशः खं विवरान्**
**समुद्रान् ··· ··· ··· ··· ··· (८, १९, ११)।**

विवरं नपुंसकम्। पातालेऽर्थे चायमव्यवहृतपूर्वः।

**नान्यत्ते कामये राजन्वदान्याज्जगदीश्वरात् (८, १९, १७)।**

विशेषणात् पञ्चमीं प्रयुञ्जानोपि विशेष्यात् चतुर्थीं षष्ठीं वा प्रयुङ्क्ते। सोऽयं वाग्-व्यवहारभ्रंशः।

**मनस्विनः कारुणिकस्य शोभनं**
**यदर्थिकामोपनयेन दुर्गतिः (८, २०, १०)।**

दुर्गतिः शोभनेति वक्तव्यम्। सामानाधिकरण्ये लिङ्गभेदः कुतः?

**कुतः पुनर्ब्रह्मविदां भवादृशाम् (८, २०, १०)।**

किम्पुनर् इत्येवं व्यवहरन्ते शिष्टाः। शिष्टव्यवहारश्च शीलनीयः।

**न वा अयं ब्रह्मबन्धुर्विष्णुर्मायाविनां वरः (८, २१, १०)।**

अत्र कुत्सा नाभिप्रेता। अकुत्सायां चास्य ब्रह्मबन्धुशब्दस्य प्रयोगो न। ब्रह्मबन्धुरधिक्षेपे निर्देश इत्यमरे निर्देशे इत्युक्तेरकुत्सायामप्ययं प्रयुक्तो न दुष्येदिति मा स्म शङ्कि। तत्र ब्रह्मणो ब्राह्मणस्य बन्धुर्ज्ञातिरित्यर्थः स्यात्, न चायं प्रकृतेऽभीष्टः।

**यत्पादयोरशठधीः सलिलं प्रदाय**
**दूर्वाङ्कुरैरपि विधाय सतीं सपर्याम्।**
**अप्युत्तमां गतिमसौ भजते (८, २२, २३)।**

असावित्यनेन परोक्षं जनमाह। नैतं निर्देशं शीलयन्ति कवयः।

**न्यदधादौदञ्चनोदके (८, २४, १९)।**

अत्र द्वे वृत्ती तद्धितवृत्तिः समासवृत्तिश्च। वृत्तिद्वयेन नार्थः। तद्धितप्रियोयं दाक्षिणात्यः स्यात्।

**वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् (८, २४, ४५)।**

दूष्या कक्ष्या वरत्रा चेत्यमरः स्त्रियां पठति गजमध्यबन्धनेन च समानाभिधेयतां पश्यति।

**ग्रन्थिं स भिन्द्याद्धृदयं स नो गुरुः (८, २४, ४७)।**

ग्रन्थिं हृदयमिति समानाधिकरणेन पदद्वयेन हृदयग्रन्थिं विवक्षति। अर्थश्च शब्दतन्त्रो न पुरुषतन्त्रः। यथास्थिते ग्रन्थिमद् हृदयं ग्रन्थिरूपं वेति प्रतीयेत। भिद्यते हृदयग्रन्थिरित्यादिषूपनिषच्छ्रुतिषु सर्वत्र षष्ठीसमासाश्रयणं मतम्।

**वल्मीकरन्ध्रे ददृशे खद्योते इव ज्योतिषी (९, ३, ३)।**

खद्योतः पुमान्। खद्योतो ज्योतिरिङ्गण इति कोषात्। उपमेये भिन्नलिङ्गेपि खद्योतः स्वं लिङ्गं न हास्यति। खद्योत इति कीटविशेषस्य संज्ञा, न तु विशेषणम्।

**नाभागो नभगापत्यं यं ततं भ्रातरः कविम्।**
**यविष्ठं व्यभजन् दायं ब्रह्मचारिणमागतम् (९, ४, १)॥**

ततं (तातं पितरं) यविष्ठं व्यभजन्। विभजेर्द्विकर्मकतेहैवाश्रिता। अत एव कश्चिद् व्यवहारदूषणं पश्यन् प्रतिमध्याहरति, यविष्ठं प्रति=यविष्ठ-विषय इत्यर्थं चाचष्टे। ऐतरेयब्राह्मणे मह्यमभाक्तेत्यत्र सम्प्रदाने चतुर्थी स्थिता। ऋज्व्य ऋषीणां वाचो भवन्ति।

स वै मनः कृष्णपदारविन्दयो-
र्वचांसि वैकुण्ठगुणानुवर्णने ।
करौ हरेर्मन्दिरमार्जनादिषु
श्रुतिं चकाराच्युतसत्कथोदये (९, ४, १८) ॥

अत्र कृष्ण एकस्मिन्नभिधेये प्रतिपाद्ये भिन्नमभिधानमुपात्तम् । एकस्यै-वार्थस्य भिन्नैर्नामभिर्निर्देशोऽभेदे भेदबुद्धिं जनयतीति तं तथाभूतं प्रयत्नतः परिहरन्ति परिणतप्रज्ञा व्यवहारस्य कोविदाः ।

दुष्करः को नु साधूनां
दुस्त्यजो वा महात्मनाम् (९, ५, १५) ।

किं नु दुष्करं किं वा दुस्त्यजम् इत्येवं सामान्ये नपुंसकमिष्यते । आबालं सर्वस्य प्रकाशोऽयं व्यवहारः । अस्यैव कथं तिरोहितः ?

प्रत्ययचक्षुस्त राजर्षिरिति नामभिराहुतः (९, ६, १९) ।

इति नामभिः=यानि द्वादशे पद्ये निर्दिष्टानि तैः । तदिदं व्यवहारं व्यभिचरति । इतिशब्दस्तु सन्निकृष्टपरामर्शी । सन्निकर्षे तु तानि नोक्तानि ।

... ... सोऽरण्येऽवसत् समाम् (९, ७, १८) ।
एवं द्वितीये तृतीये चतुर्थे पञ्चमे तथा
अभ्येत्याभ्येत्य स्थविरो विप्रो मृत्वाह वृत्रहा (९, ७, १९) ॥

अनन्तरपूर्वे पद्ये समामित्युक्त्वा द्वितीये तृतीये इत्यादिः पुंसि प्रयोगः कथम् । अन्यमनाः कविः प्रामददिति भाति । विंशे पद्ये षष्ठं संवत्सरम् इति श्रूयते तदपकृष्य तृतीये चतुर्थे इत्यादिना सम्बन्द्धुं न शक्यते ।

विश्वामित्रोऽभवत्तस्मिन्होता चाध्वर्युरात्मवान् ।
जमदग्निरभूद् ब्रह्मा वसिष्ठोऽयास्यसामगः (९, ७, २२-२३) ।

अयास्यः सामग इत्येवं व्यासेन वक्तव्यम् । विधेयेन समासो नेष्यते गुणभावापत्तेः । यथा विश्वामित्रोऽभवद्धोतेत्यादिषु विधेयं पृथक्पदत्वेनाश्रितं तथैवेहापि वक्तव्यम् । मन्ये छन्दोवशादेकपद्यमाश्रितम् । व्यवहारेऽल्पोऽस्य समादरः ।

उन्मिमेष तदा मुनिः (९, ८, ११) ।

उन्मेषो हि दृग्धर्मो न पुरुषधर्मः । उन्मिषतो लोचने इत्युच्यते न तु पुरुषः कश्चिदुन्मिषतीति । प्रकृते मुनिर्नेत्रोन्मेषं चकारेत्यर्थो विवक्षितः ।

**ततः कालेन संस्थितः (९, ९, १)।**

कालेनेति तृतीयाव्यवहारो दुष्यति। तृतीया चेह सर्वथा दुरुपपादा। नैषा हेतौ, नापवर्गे संभवति न कर्तरि न च करणे। सप्तमी तूपपन्ना स्यात्। काले मृत्युकाल उपस्थिते सतीत्यर्थात्।

**यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तन्तुषु (९, ९, ७)।**

तन्तुषु पट इति लोको व्यवहरति। अस्य त्वन्यादृश एव पन्थाः। किं च शाटीति परिधानविशेषो भवति न तु वसनमात्रम्। वसनमात्रं चेह विवक्षितम्। तत्र विद्वद्वाग्व्यवहारविषयः पटशब्दः किमिति नोच्यते। कस्तत्र ते प्रद्वेषः?

**वसिष्ठस्तदनुज्ञातो मदयन्त्यां प्रजामधात् (९, ९, ३८)।**

प्रजोत्पादनाय गर्भाधानमकरोदिति विवक्षति। अन्यत्र नैष दृश्यते व्यवहारः।

**वरूथमिभपत्तिरथाश्वयोधैः (९, १०, २०)।**

योधैरिति तृतीयाऽभेदे भेदकल्पनया कृतमित्यध्यहृत्य कथं चित्समाधेयम्। अन्यथा वरूथस्येभादिरूपत्वात्सामानाधिकरण्येन निर्देशो युक्तः स्यात्। वरूथमपि रथगुप्तिमाह। रथगुप्तिर्वरूथो नेत्यमरात्। सेनायां तु वरूथिनीति प्रसिध्यति।

**देहः कृतोऽन्नं गृध्राणामात्मा नरकहेतवे (९, १०, २८)।**

नरकस्य हेतुः (नरकहेतुरिति वा) इति वक्तव्यम्। चतुर्थ्या नार्थः।

**उत्तराः कोसला माल्यैः किरन्तो ननृतुर्मुदा (९, १०, ४२)।**

माल्यानि किरन्त इति वा वक्तव्यम्, माल्यैर्भुवमवकिरन्त इति वा। एष व्यवस्थितो व्यवहारः। अयं नातिपात्यः।

**ततः ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत्प्रभुः।**
**त्रयोदशाब्दसाहस्रमग्निहोत्रमखण्डितम् (९, ११, १८)।**

त्रयोदशाब्दानां साहस्रमित्येवं विगृह्णात्यन्वितार्थप्रकाशिकाकारः। एवं विगृह्णन्न गणयति किमुक्तं भवतीति। अनर्थकमिदं प्रमादपठितमिति वक्तुं च नोत्सहते। त्रयोदश अब्दसहस्राणीत्येवं व्यासेन वाच्यमवाच्यतायै।

**अधिकसाम्यविमुक्तधाम्नः (रामस्य) (९, ११, २०)।**

आधिक्यमिति भावप्रत्ययान्तं न्यास्यम्, यथा साम्यमिति भावे ष्यञन्तम्। एवं च कृते रचनावैषम्यमपेयात्।

**एकतः श्यामकर्णानां हयानाम्** (९, १५, ६)।

दक्षिणवामपार्श्वयोर्मध्य एकत एकस्मिन्पार्श्वे इति विवक्षति। श्यामैककर्णानाम् इति ऋजूक्तिमनाश्रित्य कुब्जगामिन्याः सरण्या अनुसरणम्।

**तमाह राजञ्शर्मिष्ठामाधास्तल्पे न कर्हिचित्** (९, १८, ३०)।

माङ् यसति नञि च सति लुङ्प्रयुक्तिः कवेः स्वैरितैव नान्यत् किंचित्।

**प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः** (९, १८, ४७)।

प्रियप्रियाशब्दावेव पुरा प्रयुञ्जते कवयः। ईयसुन्नन्तयोस्तयोः प्रयोगस्त्वर्वाचीनो हिन्द्यां प्रचुरं प्रचरति।

**दशैतेऽप्सरसः पुत्राः ... ...**

**घृताच्याम् ... ... ... ...** (९, २०, ५)।

अप्सरसो घृताच्यामिति वैयधिकरण्ये विशेषणविशेष्यभावो दुर्घटः। अप्सरस इति षष्ठी सप्तम्यर्थं इति टीकाकृतः प्रलापः।

**सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति** (९, २२, १८)।

सोमवंशे नष्टे तं सोमवंशं पुनः स्थापयिष्यतीतीत्थम्भूते न्यासे भावलक्षणायाः सप्तम्या अविषयः। सोऽयमर्थोऽन्यत्र वितत्य प्रसाधितः।

**पुत्रं पौरवमन्वभूत्** (९, २३, १७)।

पुरुसगोत्रं (यं कमपि) पुत्रमन्वभूत् स्वीकृतवान् इत्यर्थः। पौरवाणां कतमोऽसाविति न नाम्ना निर्दिशति। अनन्तरे च श्लोके सहसोद्बुध्येव दुष्यन्तः स पुनर्भेज इत्यदिनाऽपेक्षितं नामधेयं निर्दिशति व्यामोहकृत्कविः।

**धनकः कृतवीर्यसूः** (९, २३, २३)।

कृतवीर्यस्य जनक इति विवक्षति। सूरिति प्रसूरिति वा मातरि प्रसिध्यति न पितरि। प्राणिगर्भविमोचनस्य प्राणिप्रसवस्य च धात्वर्थस्य तत्रैवानुगमात्।

**वसुदेवः सुतानष्टावादधे सहदेवया** (९, २४, ५२)।

सहदेवायामिति वक्तव्यम्। तृतीयां समाधित्सुः कश्चिदाह—सहदेवया साधनभूतयेति। तदापातरमणीयम्। आदधे आहितवान् इत्याधानमाधारमपेक्षत इति सप्तम्येव स्थाने स्यात्।

**चतुःशतं पारिबर्हं गजानां हेममालिनाम् (१०, १, ३१)।**

हेममालिनो गजाः पारिबर्हरूपाः । तेन सामानाधिकरण्यमिष्यते । पारिबर्हं गजान् इत्येवं वक्तव्यम् । पारिबर्हं यौतकं न भवति, किन्तर्हि गृहोपकरणम् । तत्रापि स्वार्थेऽणमकृत्वा प्रयुञ्जते कवयः परिबर्हमिति ।

**ज्योतिर्यथैवोदकपार्थिवेष्वदः (१०, १, ४३) ।**

छान्दसा ह्यदःशब्देन सूर्यमाचक्षते (इदमा च पृथिवीम्) । तत्र सूर्यं विशेष्यं नोपाददते । अयं तु च्छन्दोनुकार्यपि ज्योतिरुपाददानोऽर्धजरतीयमाचरति ।

**ऋषेर्विनिर्गमे कंसो यदून्मत्वा सुरानिति (१०, १, ६५)।**

सुरा इति तु वक्तव्यम् । निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिरित्यभियुक्तोक्ति नाद्रियते ।

**यदूनां निजनाथानाम् (१०, २, ६) ।**

निजो नाथो येषां तेषाम् । निज आत्मा (स्वम्) इत्यभिप्रैति । न च निजस्तमर्थमाह । निज आत्मीयो भवति न त्वात्मा ।

**अग्नयश्च द्विजातीनां शान्तास्तत्र समिन्धत (१०, ३, ४) ।**

ञिइन्धी दीप्ताविति सकर्मक इति व्यवहारविदः । धात्वर्थनिर्देशस्तु भ्रमकः ।

**मुमुचुर्मुनयो देवाः सुमनांसि मुदान्विताः (१०, ३, ७)।**

सुमनांसीति क्लीबत्वमरुन्तुदमिव । सुमनसः स्त्रियां बहुत्वे ।

**सा योगमायाऽजनि नन्दजायया (१०, ३, ४८)।**

नन्दजायायामिति वक्तव्यम् । जनिक्रियायां मातुरधिकरणता मतेत्यसकृदवोचाम ।

**एवं चेत्तर्हि भोजेन्द्र (१०, ४, ३१)।**

प्राचीनास्तु वाग्योगविदश्चेच्छब्दात्पूर्ववाक्यगतादुत्तरमुत्तरस्मिन्वाक्ये तर्हिशब्दं न प्रयुञ्जते स्म । अस्य तु व्यवहाररक्षणे स्वल्पः समादरः ।

**पुलिनारोहभीषणम् (पूतनाकलेवरम्) (१०, ६, १६)।**

श्रोण्यामारोहो वरस्त्रिया इत्यमरावारोहो वरस्त्रियाः श्रोणिरुच्यते न तु विरूपभीषणायाः पूतनादिकायाः ।

**कदाचिदौत्थानिककौतुकाप्लवे (१०, ७, ४)।**

समासतद्धितोभयवृत्तिसमाश्रयः शब्दाडम्बराय भवति, न व्यवहारपरिशुद्धये ।

**किं ... ... पूर्त्तेष्टदत्तम् (१०, ७, ३२)।**

किं पूर्त्तं किमिष्टं किं वा दत्तमिति विकल्पप्रश्नो विवक्षितः। तत्र द्वन्द्वैकवद्भावस्तु न युक्तः। न हि पूर्त्तेष्टदत्तान्येकत्वबुद्धया सुग्रहाणि भवन्ति। मिथोऽत्यन्तभेदात् ।

**स्वबन्धन आसीत् (१०, ९, १८)।**

स्वयमेवात्मानं बन्धनस्थमकरोदित्यर्थकं वाक्यं संस्कृताभासं न तु संस्कृतम् ।

**नेमं विरिञ्चो न भवो न श्रीरप्यङ्गसंश्रया।**
**प्रसादं लेभिरे गोपी यत्तत् प्राप विमुक्तिदात् (१०, ९, २०)।**

अत्रावृत्तेन नञा विरिञ्चादीनां समुच्चयो निषिध्यते, वाक्यभेदश्चोपतिष्ठते। ते प्रत्येकं गृहीता लभेः कर्तारः। तत्र बहुवचनस्य कः प्रसङ्गः? किं च। यत्तदिति नपुंसकं सर्वनामद्वयं पुमांसं प्रसादं कथङ्कारं परामृशेत्, अन्तरेण साहसिक्यम् ।

**एवं विहारैः कौमारैः कौमारं जहतु र्व्रजे (१०, ११, ५९)।**

जहतुः क्षपयामासतुः। अत्रार्थे जहातेः प्रयोगोऽन्यत्र दुर्लभः।

**केचिद् वेणून् वादयन्तः (१०, १२, ७)।**

न हि वेणुर्वाद्यते किन्तर्हि पूर्यते यथा शङ्खः। वीणा तु वाद्यते। प्रतिनियतविषयाः शब्दाः।

**स्फुटत्सरोगन्धहृतासि० (१०, १३, ५)।**

न हि सरः स्फुटतीति व्यवहारोस्ति। सर इति सरसिजार्थे। तत्र चेदमशक्तम् ।

**अत्र भोक्तव्यमस्माभिर्दिवा रूढं क्षुधार्दिताः (१०, १३, ६)।**

दिवेत्यधिकरणशक्ति। दिवसे इत्यर्थः। नेदं रूढमित्यत्र कर्तृतयाऽन्वेतुमर्हति ।

**कृष्णः सपाणिकवलो ययौ (१०, १३, १४)।**

पाणौ स्थितः कवलः पाणिकवलः। तेन सह वर्तमान इत्येवं विगृह्णाति कश्चिद्विपश्चित्। पाणिकवल इत्यृजूक्तिः किमिति नाश्रीयते?

**तस्यां तमोवन्नैहारं खद्योतार्चिरिवाहनि (१०, १३, ४५)।**

नैहारमिति तद्धितवृत्तिस्थं तम इति विशिनष्टि। अहो साहसम्। तद्धितोपसर्जनस्य तमसो नैहारमिति विशेषणं छान्दसम् इति श्रीधरस्वामी। किं छन्दस्कृत एवं वाचि विक्लवा भवन्ति यदेवमसमर्थानि पदानि प्रयुञ्जते।

**भूरिपुण्यवदर्पितैः (१०, १३, ४९)।**

भूरिपुण्यैः (=बहुसुकृतैः) इति तु वक्तव्यम्। न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः।

**यत्र नैसर्गदुर्वैराः सहासन् नृमृगादयः (१, १३, ६०)।**

स्वार्थेऽणि साधुरपि नैसर्गशब्दो नान्यत्र व्यवहृतो दृष्टः। तद्धितप्रियोयं दाक्षिणात्यः स्यात्।

**स्वेच्छामयस्य न तु भूतमयस्य कोपि।**

**नेशे महि त्ववसितुम् ··· ··· ··· (१०, १४, २)॥**

वाक्ये पृथक् श्रूयमाणो नञ् क्रिययाभिसम्बध्यते तेन भूतमयस्येत्यनेन नान्वेति, इच्छति चैनेनान्वियादिति। नकारेण सह भूतमयस्य सुप्सुपा समासो न भवितुमर्हति, तुना व्यवहितत्वात्।

**तथापि भूमन् महिमाऽगुणस्य ते**
**विबोद्धुमर्हत्यमलान्तरात्मभिः (१०, १४, ६)।**
**मुक्तिपदे स दायभाक् (१०, १४, ८)।**

अधिकृतः, तदर्ह इत्यर्थः। दाय इति पित्रादिसकाशात्प्राप्तमृक्थं भवति। न हि मुक्तिर्दायो भवति।

**न चान्य एकोपि चिरं विचिन्वन् (१०, १४, २९)।**

कोपीत्यस्य स्थान एकोपीति व्यवहरति व्यवहारे स्वतन्त्रः।

**देहोपि ममताभाक् चेत् तर्ह्यसौ नात्मवत् प्रियः (१०, १४, ५३)।**

चेच्छब्दादुत्तरं तर्हिशब्दं प्रयुञ्जानोऽर्वाचीनोऽयं कविः प्राचीनं परम्परीणं व्यवहारं व्यस्मार्षीदिति किं चित्रम्।

**तन्माधवो वेणुमुदीरयन्** (१०, १५, २) ।

अस्थान उदीरयतेः प्रयोगः । उदीरयतिर्हि व्याहरत्युदाहरत्युच्चारयतीत्यादिभिः समानार्थः । वेणुर्वंशस्तु पूर्यते ध्मायते यथा शङ्खः ।

**इयान्हि सतां निसर्गः** (१०, १५, ७) ।

एष इति वक्तव्यम् । परिमाणे वतुपोऽप्रसङ्गः ।

**जीवन्ति सन्मुखरितां भवदीयवार्ताम्** (१०, १४, ३) ।

सतां मुखेन ईरितामुदीरितामित्यर्थं विवक्षति । मुखराद् वाचालवचनात्प्रातिपदिकाद् धात्वर्थे णिचि निष्ठायां वाचालीकृतामित्यर्थः शक्यतेऽवगन्तुम् । स च प्रकृते न सङ्गच्छते ।

**मार्गे गवामन्यपदान्तरान्तरे** (१०, १६, १८) ।

अन्येषां गोपादीनां पदानां पादचिह्नानामन्तरेऽन्तरे मध्ये मध्ये । नैष व्यवहारः । न वयं समासे मध्यादिपदद्विरुक्त्याऽऽवृत्तिं ब्रूमः, समासवृत्त्यैव तद्गतेः । वृन्तसप्तपर्णः । अत्र वृन्ते वृन्ते सप्तपर्णान्यस्य सः । समासे वृन्तशब्दो न द्विरुच्यते ।

**शतैकशीर्ष्णः** (१०, १६, २८) ।

संख्याया अल्पीयस्याः पूर्वनिपात इष्यते ।

**तदेष नाथाप दुरापमन्यैः** (१०, १६, ३८) ।

पारोक्ष्येऽसत्यपि लिटं प्रयुङ्क्ते । तदस्य शीलम् ।

**तं तार्क्ष्यपुत्रः ... ... ... ...**
**प्रचण्डवेगो मधुसूदनासनः** (१०, १७, ७) ।

आस्तेऽत्रेत्यासनम् । अधिकरणे ल्युट् । मधुसूदनस्यासनम् इति मधुसूदनासनम् इति क्लीबं युक्तम् ।

**कालिन्द्या उपकूलतः** (१०, १७, ३०) ।

सामीप्येऽव्ययीभावेनैव तसेरर्थस्य गतेनार्थिस्तसिना ।

**शश्वत्तच्छीकरर्जीषद्रुममण्डलमण्डितम्** (१०, १८, ४) ।

तच्छीकरैरित्यत्र तच्छब्दः प्रथमचरणगतं वृत्तिस्थं निर्झरं निर्दिशति । एवंप्रकारको निर्देशोऽत्र पुराणे बहुलः ।

**(बलरामं) प्रशशंसुस्तदर्हणम् (१०, १८, ३१)।**

वृत्तिस्थस्तच्छब्दः किं परामृशति। प्रशंसाम् इति चेन्नासौ शब्दोक्ता। प्रशशंसुरिति च आश्रये तु तिङः स्मृता इति वचनाद् भूतानद्यतनपरोक्षप्रशंसनक्रियायाः कर्तॄनाह !

**क्षणं युगशतमिव यासां येन विनाऽभवत् (१०, १९, १६)।**

क्षण इति पुमान्।

**जलौघैर्निरभिद्यन्त सेतवो वर्षतीश्वरे (१०, २०, २३)।**

देवो वर्षति, इन्द्रो वर्षति, वासवो वर्षतीति वा प्रथते प्रयोगः, न त्वीश्वरो वर्षतीति। ईश्वरशब्दः शिवं स्मारयति। तस्य च वर्षणक्रियया नाभिसम्बन्धोऽस्ति।

**गावो मृगाः खगा नार्यः पुष्पिण्यः शरदाऽभवन् (१०, २०, ४६)।**

मृगाः खगा इति पुंसि प्रयोगौ प्रमादपठितौ। न हि खगा मृगा वाऽऽर्तवन्तो भवन्ति। पुष्पिण्य इत्यप्यस्थाने। पुष्पवत्य इत्येव व्यवहारमनुपतति। पुष्पान्मत्वर्थीय इनिस्त्वन्यत्र। यथा पुष्पिण्यौ जङ्घे इत्यैतरेयब्राह्मणे।

**उदहृष्यन्वारिजानि सूर्योत्थाने कुमुद् विना (१०, २०, ४७)।**

उद्धर्ष उत्सवो भवति। तथा चामरः पठति—**अथ क्षण उद्धर्षो मह उद्धव उत्सव इति**। तेनोत्पूर्वो हृषिर्विकसने न।

**वेणुं चुकूज (१०, २१, २)।**

अन्तर्णीतण्यर्थः कूजतिः। न हि वेणुकूजनमन्यत्र शृण्मः।

**रन्ध्रान्वेणोरधरसुधया पूरयन् (१०, २१, ५)।**

रन्ध्रं छिद्रं क्लीबम्।

**किं फलं कस्य चोद्देशः (१०, २४, ३)।**

कं देवमुद्दिश्येदं कर्म प्रवृत्तमिति विवक्षति। उद्देशो निमित्तमुच्यते। तेन कश्चोद्देश इति शोभनं वचः स्यात्।

**तच्छेषेणोपजीवन्ति (१०, २४, १०)।**

तच्छेषमुपजीवन्तीति वाच्यम्। तच्छेषेण जीवन्तीति वा।

**इन्द्राय मन्युं जनयन् (१०, २४, १२)।**

इन्द्रस्येति षष्ठी तु व्यवहारानुगा स्यात्। चतुर्थ्याः कः प्रसङ्गः।

**आजीव्यैकतरं भावं यस्त्वन्यमुपजीवति (१०, २४, १९)।**

डतरप्रत्ययेन नार्थः। एकं भावम् इत्येव पर्याप्स्यति।

**कालेनैव वयस्तनोः (१०, २६, ४)।**

वय इत्यायुरर्थे प्रयुक्तम्। तत्र चेदमशक्तम्।

**एकहायन आसीनो ह्रियमाणो विहायसा।**

**दैत्येन यस्तृणावर्तमहन्कण्ठग्रहातुरम् (१०, २६, ६)॥**

एवं न्यासे स दैत्यस्तृणावर्तादितर इति भाति। अनिष्टं चेदं न भायाद्यदि तृणावर्तेन दैत्येन ह्रियमाणस्तमहन्नित्येवमुच्येत। अयं त्वित्थम्भूतां विशदां वाचं न रोचयते।

**तानि चूडयता कान्तामुपविष्टमिह ध्रुवम् (१०, ३०, ३३)।**

तानीत्येतदनन्तरपूर्वे श्लोके प्रसूनावचय इत्यत्र पूर्वपदं प्रसूनानि प्रत्यवमृशति। इत्थम्भूतो यत्नलभ्यः प्रत्यवमर्श इह पुराणे बहुलः।

**तं त्रासयन्तं भगवान् स्वगोकुलं तद्धेषितैः (१०, ३७, २)।**

स्वस्य हेषितैरिति तु वक्तुमुचितम्। तदिति परोक्षे विजानीयादिति तच्छब्दो यस्य कस्यचित् परोक्षभूतस्य हेषितानि निर्दिशेत्। महाहयः केशी तु प्रत्यक्षः सम्मुखे स्थितः।

**गण्डं गण्डे सन्दधत्या (१०, ३३, १३)।**

गण्डं गण्डेन सन्दधत्येत्येवं वाच्यम्। साहचर्यविवक्षायां तृतीया सुप्रयुक्ता स्यात्।

**तं विजह्रिरे (१०, ३३, १५)।**

क्रीडायां विहरतिरकर्मकः। तेन तेनेति वक्तव्यम्।

**... निजशिक्षाः। ... अनयत् स्वरजातीः (१०, ३५, १४)।**

निजशिक्षाः स्वयं शिक्षिताः (स्वरजातीः)। निजेन आत्मना शिक्षा शिक्षणं विद्योपादानं यत्र ताः। निजशब्द आत्मवचनो नेत्यसकृदवोचाम।

**ममासन्नुषसः सुदर्शनाः (१०, ३८, १४)।**

कालवचन उषःशब्दो नपुंसकम्। तथा चामरः पठति—प्रत्यूषोऽहर्मुखं कल्यमुषः-प्रत्युषसी अपि इति। प्रकृते पुंस्त्वमार्षमिति कश्चिदृषिनिन्दकः।

**(यद्वाचः) प्राणन्ति शुम्भन्ति पुनन्ति वै जगत् (१०, ३०, १२)।**

प्राणन्ति शुम्भन्ति इत्युभयत्र णिज् न कृतः, स दोषः। प्रयोजकव्यापार-द्योतनायावश्यकः सः।

**आप्तसमस्तसत्कृतम् (१०, ३८, २३)।**

समस्तैराप्तै बन्धिवैः सत्कृतम् इति कवेर्विवक्षा। तस्मात्समस्ताप्त-सत्कृतमित्यानुपूर्वीकं पदमिष्यते।

**पुलकाचिताङ्ग औत्कण्ठचात् (१०, ३८, ३५)।**

उत्कण्ठेव औत्कण्ठचम्। इहैव प्रयोगः। तद्धितप्रियत्वमस्यासकृदध-स्ताद् दर्शितचरम्।

**रामकृष्णोरुमानितः (१०, ३९, १)।**

बहुमानित इत्यर्थः। उरुशब्दप्रियोऽयं व्यवहारं नाद्रियते।

**तात सौम्यागतः कच्चित् स्वागतम् (१०, ३९, ४)।**

स्वागतं स्वस्ति=क्षेमेण। इहैव क्रियाविशेषणत्वेन प्रयोगः।

**प्रहस्य पितरं नन्दं राजादिष्टं विजज्ञतुः (१०, ३९, १०)।**

विजज्ञतुः=विज्ञापयामासतुः। अत्यन्तापेक्षितमपि णिचं परिहरति। न ह्येतद् वृत्तं त्वां जानामीत्येवं ब्रूतेऽप्रमत्तः।

**अहो अस्मदभूद् भूरि पित्रोर्वृजिनमार्ययोः।**
**यद्धेतोः पुत्रमरणं यद्धेतोर्बन्धनं तयोः (१०, ३९, ६)॥**

उत्तरार्द्धेऽस्मच्छब्दमतिहाय यच्छब्दप्रयोगः कस्मात्। अस्मच्छब्देनो-पक्रमः, अस्मच्छब्देनैवापवर्ग इष्टः। अन्यथाकरणेऽपदेशो न लभ्यते।

**विहाय गेहान् (१०, ३९, २२)।**

गेहं नपुंसकम्। न चास्य बहुत्वे पुंस्त्वं गृहवत्। समानार्थे अपि भिन्ने गृहगेहे शब्दरूपे।

**सुखं प्रभाता रजनीयमाशिषः**
**सत्या बभूवुः ··· ··· ··· ··· (१०, ३९, २३)।**

लटः स्थाने लिट् कस्मात्। नायं लौकिको व्यवहारः।

**सोहं तवाङ्घ्र्युपगतोऽस्म्यसतां दुरापम् (१०, ४०, २८)।**

अङ्घ्रि नपुंसकं मन्यते। चरणोऽस्त्रियाम्, अङ्घ्रिस्तु नियतः पुंसि।

**तच्चाप्यहं भवदनुग्रह ईश मन्ये (१०, ४०, २८)।**

अनुग्रह इत्यत्र प्रथमा नोपपद्यते । अनुक्ते कर्मणि द्वितीयैव साध्वी स्यात् ।

**विना युवां कोऽन्यतमस्तदर्हति (१०, ४२, ३)।**

डतमा नार्थः। कोऽन्य इत्येव पर्याप्स्यति ।

**मदकर्युरुक्रमः (१०, ४२, १७)।**

मदकरी प्रभिन्नद्विरदः । मत्तः करीति ऋजुर्वाक् कुतो नाश्रीयते ।

**धनुषः पञ्चविंशतिम् (१०, ४३, ८)।**

धनुषाम् (पञ्चविंशतिम्) इत्येवं वक्तव्यम् । पञ्चविंशतिर्धनूंषि धनुषां वा पञ्चविंशतिरित्येकोऽर्थः। संख्यासंख्येययोः प्राधान्यविकल्पात् ।

**मयि विक्रम-वार्ष्णेय बलेन सह मुष्टिकः (१०, ४३, ४०)।**

अस्थाने सहशब्दः । साहचर्यस्याविवक्षणात् । यथा वाक्यादौ मयीति वैषयिकी सप्तमी प्रयुक्ता तथैवेहापि सैवोचिता ।

**कृतसंवन्दनौ (१०, ४४, ५१)।**

सम्पूर्वो वन्दतिरिहैव । इदं व्यवहारदूषणायालम् ।

**बाल्यपौगण्डकैशोराः (१०, ४५, ३)।**

बाल्यपौगण्डकैशोराणीति वक्तुमुचितम् । कैशोरमिति भावेऽञन्तं नित्यं नपुंसकम् ।

**दृष्टं श्रुतं भूतभवद्भविष्यत्**
**स्थास्नुश्चरिष्णुर्महदल्पकं च (१०, ४६, ४३)।**

स्थास्नुश्चरिष्णुरित्यत्र पुंस्त्वं कथम् । यथान्यत्र सामान्ये नपुंसकमाश्रितं तथेहापि युक्तं समाश्रयितुम् ।

**विनाऽच्युताद्वस्तु तरां न वाच्यम् (१०, ४६, ४३)।**

अहो स्वाच्छन्द्यं कवेः । नूत्नाञ्शब्दान्कल्पयति कुम्भकार इव घटान् । नतरामिति वक्तव्ये तरां नेत्याह । अव्ययात्परो यस्तरप् तदन्तादाम्विधिः, न तु तरपः केवलात् । प्रकृतिप्रत्यययोः पौर्वापर्यविपर्यय आर्ष इति ऋषीणां खलीकारे प्रत्यभिनिविष्टः कश्चित् ।

**रज्जूर्विकर्षद् भुजकङ्कणस्रजः (१०, ४६, ४५)।**

स्रगिति ग्रथितेषु माल्येषु रूढम् । कङ्कणश्रेणय इति निर्दुष्टं स्यात् ।

या (गोप्यः) मया क्रीडता रात्र्यां
वनेऽस्मिन्व्रज आस्थिताः (१०, ४७, ३७)।

भावलक्षणायां सप्तम्यां प्राप्तायां तृतीयाप्रयुक्तिर्व्यवहारदूषणी।

क्वेमाः स्त्रियो वनचरीर्व्यभिचारदुष्टाः (१०, ४७, ५९)।

वनचर्यं इति तु वक्तुमुचितम्।

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः (१०, ४७, ६०)।

कुतोऽन्यासाम् इति वक्तव्यम्। अन्या इति प्रथमाबहुवचनमनन्वितं तिष्ठति।

अतो न बन्धस्तव नैव मोक्षः
स्याताम् ... ... ... ... ... (१०, ४८, २२)।

नञ्द्वयेन द्वित्वापह्नवे वाक्यभेदाद् द्विवचनान्ता क्रिया कथमुपपत्तिमती स्यात्।

यथावदुपसङ्गम्य बन्धुभिर्नन्दिनीसुतः (१०, ४९, ३)।

बन्धुभिः संगम्य, बन्धूनुपगम्येति वा वक्तव्यम्।

हित्वा वा मच्छरैश्छिन्नं
देहं स्वर्याहि मां जहि (१०, ५०, १९)।

मां वा जहीति वक्तव्यम्। अन्यथा वाक्यार्थानन्वयः स्पष्टः।

क्वचिद्रजांसि विममे पार्थिवान्युरुजन्मभिः (१०, ५१, ३८)।

अस्थाने लिट्। विमिमीतेति प्रयोज्यम्। संभावनायां शक्तौ वा लिङ् स्थाने स्यात्।

कलेवरो विट्कृमिभस्मसंज्ञितः (१०, ५१, ५१)।

कलेवरं नपुंसकम्। पुंस्त्वं त्वस्योपज्ञा बहुज्ञस्य।

अस्त्येव नित्यदा तुभ्यं भक्तिर्मय्यनपायिनी (१०, ५१, ६२)।

त्वयि भक्तिर्ममानपायिनीत्येवं न्यासो निर्दुष्टः स्यात्।

तां बुद्धिलक्षणौदार्यरूपशीलगुणाश्रयाम् (१०, ५२, २३)।

आश्रयः पुमान्। षष्ठीतत्पुरुषः समासः। परवल्लिङ्गत्वाद् बुद्ध्याद्याश्रयम् इत्येव साधु।

**एवं वध्वाः प्रतीक्षन्त्या गोविन्दागमनं किल ।**
**वाम ऊरुर्भुजो नेत्रमस्फुरन् प्रियभाषिणः (१०, ५३, २७) ।**

प्रियभाषिण इति वध्वा विशेषणत्वे पुंस्त्वं दुर्लभम् । प्रियभाषिण्या इति तु युज्यते वक्तुम् । ऊर्वादीनां विशेषणत्वेपि पुंशेषो न युक्तः । नपुंसकशेषे प्रियभाषीणीति स्यात् । उभयथाऽसह्योयं वाग्भ्रंशः ।

**धौतपादकराम्बुजा (१०, ५३, ४४) ।**

आ रजस्वलपादहालिकात्प्रसिद्धा पाणिपादम् इत्याकारानुपूर्वी किमस्या-प्रतीता, यदन्यथा व्यवहरति ।

**शौरेः सप्तदशाहं वै संयुगानि पराजितः (१०, ५४, १३) ।**

शौरेः=शौरिणा । अहं सप्तदश संयुगनि पराजितः । संयुगः पुमान् । तथा चामरः पठति—**सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगा** इति ।

**रिपवो जिग्युरधुना काल आत्मानुसारिणि (१०, ५४, १६) ।**

अधुनेति सति जिग्युरिति लिट् प्रयोगेऽब्रह्मण्यमुद्घोषणीयं भवति ।

**स तं बिभ्रन्मणिं कण्ठे (१०, ५६, ४) ।**

कण्ठेनेति तृतीया प्रयोक्तव्या । अत्र करणत्वविवक्षा स्थिता शिष्टानाम् ।

**मणिहेतोरिह प्राप्ता वयमृक्षपते बिलम् ।**
**मिथ्याभिशापं प्रमृजन्नात्मनो मणिनामुना (१०, ५६, ३१) ॥**

अत्र प्रमृजन्निति समानाधिकरणं वयमिति वहुवचनान्तेन नान्वेतीति न पश्यति पुराणकारः सुधीः ।

**साहाय्ये कृतवर्म्माणमयाचत (१०, ५७, ११) ।**

लोकस्तु कृतवर्माणं साहाय्यमयाचतेति वा कृतवर्मणः साहाय्यमयाचतेति वा प्रयुङ्क्ते ।

**किं कृत्वा साधु मह्यं स्यात् (१०, ५६, ४१) ।**

कस्मिन्कर्मणि कृते सति मम साधु (भद्रं) स्यादिति विवक्षति । समान-कर्तृकताभावे क्त्वाप्रयोगो व्यवहारदूषणम् ।

**द्वन्द्वयुद्धं ... तवासीदष्टाविंशाहम् (१०, ५६, २४) ।**

अष्टाविंशतेरह्नां पूरणमहः=अष्टाविंशमहः । अत्यन्तसंयोगे द्वितीया । अभिप्रेतार्थस्तु न गम्यते । अष्टाविंशतिमहानीत्येवं वक्तव्यम् ।

**शतधन्वानमारेभे हन्तुम् (१०, ५७, १०)।**

तद्वधायोद्यमं विदध इति विवक्षति। हननमारब्धवानिति त्वक्षरार्थः। शकधृषज्ञाग्लाघटरभेत्यादिना तुमुन्।

**मिनीयापः पिण्डान्विमुच्यर्णं च शेषितम् (१०, ५७, ३७)।**

न ह्यृणं मुञ्चतीति व्यवहारः। ऋणान्मुच्यते नाम, ऋणेन वा। अपाकृत्य निर्यात्य विगणय्येत्याद्येव व्यवहार्यम्।

**नागाच्छतगुणान्रथान् (१०, ५८, ५१)।**

अत्र नागादित्येकवचनं कथम्? जाताविति चेन्न। नात्र जातिर्विवक्षिता। परिगणिता एव नागादयो व्यक्तयः। तेन व्यक्तिनिर्देशे व्यक्तीनां बहुत्वे बहुवचनमेव युक्तम्।

**प्रेष्ठो भवान् बलिभुजामपि तेपि तुभ्यम् (१०, ६०, ३७)।**

तेऽपि तवेति षष्ठ्येव व्यवहारानुपातिनी भवति।

**ऐकपत्यं राज्यं विसृज्य (१०, ६०, ४१)।**

एकः पतिरधिपतिर्यस्मिंस्तदेकपति। चतुर्वर्णाच्चिचतुराश्रमाच्च दृश्यमानः स्वार्थिकः ष्यञ् एकपतिशब्दात्तु न दृश्यते।

**युयुत्सुर्दिग्गजानहम् (१०, ६२, ९)।**

युधिरकर्मक इति नायं वेद। विद्याच्चेद् द्वितीयां न व्यवहरेत्।

**सुहृद्दिदृक्षुरुत्कण्ठः (१०, ६५, १)।**

उत्कण्ठितेऽर्थे उत्कण्ठः। उत्कृतग्रीवः, उन्नतकन्धर इति तदर्थः, न तु समुत्सुकः।

**सर्वे कुशलमासते (१०, ६५, ७)।**

आरोग्येऽर्थे कुशलं नपुंसकं प्रसिद्धम्। आरोग्यवांस्तु कुशलीत्युच्यते। गुणवद्वचनः कुशलशब्दस्तु प्रवीणमाह।

**शयिष्यसे हतस्तत्र भविता शरणं शुनाम् (१०, ६६, ९)।**

भवितेति प्रथमपुरुषो न युक्तः। शयिष्यत इत्यस्य समभिव्याहाराद् भवानित्यध्याहर्तुं न शक्यते। शुनां शरणं रक्षिता भवितासीत्यनर्थकं वचः। श्वानस्तु रक्षितारो भविष्यन्तीत्यर्थस्तु शब्दमर्यादया दुर्लभः। नहि शरणं शरणंगतमाह।

**व्रजामि शरणं तेऽद्य (१०, ६६, २०)।**

अत्रापूर्वो व्यवहारव्यतिक्रमः। शरणमिति रक्षितृपर्यायः। शरणं गृहरक्षित्रोरित्यमरः। त्वां शरणं व्रजामीति व्यवस्थितो व्यवहारः। तमिमं व्यवहारं प्रायेणापभ्रष्टवाचो बौद्धा अपि बुद्धं शरणं यामीत्यादि प्रयुञ्जानाः साध्वन्वपालयन्का कथेतरेषाम्। परमभागवतोऽयं भागवतकारः कथं नाम कृष्णः शरणं ममेति वैष्णवानां महावाक्ये शरणं रक्षितेति विसस्मार कथं च प्रकृते षष्ठीं व्यवजहार। षष्ठीप्रयोगश्च वर्तमानं हिन्दीव्यवहारं बलात्स्मारयति।

**सन्ध्योपगमादि (१०, ७०, ६)।**

सन्ध्योपासनमित्येव प्रसिध्यति व्यवहारः।

**नटयोरिव रङ्गिणोः (१०, ७२, ३५)।**

रङ्गस्थयो रङ्गावतीर्णयोरित्यर्थं विवक्षति। मत्वर्थीय इनिस्तु नैतमर्थमाचष्टे।

**सहदेवं तत्तनयम् ... ... ... ...**
**अभ्यषिञ्चदमेयात्मा मगधानां पतिं प्रभुः (१०, ७२, ४८)।**

पतित्वेऽभ्यषिञ्चदिति तु व्यवहारमनुपतेत्। यथास्थिते तु मगधानां पतिं सन्तमित्यर्थः प्रतीयेत।

**मलिना मलवाससः (१०, ७३, ५)।**

मलवद्वासस इति मतुवन्ते पूर्वपदे व्यवहारानुसारः स्यात्।

**अग्निराहुतयो मन्त्राः साङ्ख्यं योगश्च यत्परः (१०, ७४, २०)।**

यत्पर इत्यत्र पुंशेषो दुर्लभः।

**हैमाः किलोपकरणा वरुणस्य यथा पुरा (१०, ७४, १३)।**

उपकरणं ल्युडन्तं नित्यं नपुंसकम्।

**क्षोमं वधुर्मलधियाम् (१०, ७५, १७)।**

मलिनधियाम् इति वक्तव्यम्। शाकपार्थिवादित्वाद्युक्ताद्युत्तरपदलोपेन न शक्यं व्याख्यातुम् इत्यन्यत्र सोपपत्तिकं सप्रमाणं च निर्दशितमिति नेह वितन्यते।

**पौरुषं दर्शयन्ति स्म शूरा न बहुभाषिणः (१०, ७७, १९)।**

लट् स्मे, अपरोक्षे चेति सूत्राभ्यां स्मयोगे लिटो लङश्च स्थाने लडभ्यनुज्ञायते, तेन दर्शयन्ति स्मेति [illegible] प्रयोगो गंस्यते।

वर्तमानकाला क्रिया चेह विवक्षिता । तेन स्मेत्यनर्थको निपात इत्यगत्या स्वीकर्तव्यं भवति । अस्थाने चायम् । भ्रमकत्वात् ।

**गोमतीं गण्डकीं स्नात्वा विपाशां शोण आप्लुतः (१०, ७९, ११)।**

गोमत्यां गण्डक्यां चेति वक्तव्यम् । अधिकरणे सप्तमी प्रयोक्तव्या । यथा शोणे इत्यत्र ।

**एकं प्राणाधिकं मन्य उतैकं शिक्षयाधिकम् (१०, ७९, २६) ।**

प्राणैरधिकम् इत्येवं व्यस्तं वाच्यम् ।

**यद् दरिद्रतमो लक्ष्मीमाश्लिष्टो बिभ्रतोरसि (१०, ८१, १५) ।**

लक्ष्मीमुरसा बिभ्रतेत्येवं वाच्यम् । करणत्वविवक्षयोरसेति तृतीया-प्रयुक्तिरेव व्यवहारानुगा ।

**अभिवर्षति नोऽखिलानर्थान् (१०, ८२, ३०) ।**

नोऽस्मानखिलैरर्थैरभिवर्षति, अखिलानर्थानस्मासु वर्षतीति वा वक्तव्यम् । एष व्यवहारः । यत्तु कश्चिद् अभेः कर्मप्रवचनीयतां प्रकल्प्य नोऽस्मानभितो वर्षतीत्येवमर्थापयते तन्न युक्तम् । विवक्षितार्थानर्पणात् । अभितः परितोऽर्थाभिवृष्टौ सत्यां नावश्यं वयमर्थैरभिवृष्यामहे । कर्मत्वं चास्मदादीनामभिषेचन-क्रियाया विवक्षितम् ।

**निवासितः प्रियाजुष्टे पर्यङ्के भ्रातरो यथा (१०, ८१, १७) ।**

इहोपमानोपमेययोर्वचनभेदः किमप्युद्वेजयति सचेतसः ।

**कनकोज्ज्वलरत्नमालाम् (१०, ८३, २८) ।**

मालाशब्दो ग्रथितासु सुमनःसु रूढः । रत्नानां च गुम्फितानां हार उच्यते ।

**शिशिरहासकटाक्षमोक्षैः (१०, ८३, २९) ।**

शिशिरशब्दः शारदीं चन्द्रिकामाह । शब्दार्थौ भागवतकारस्य वशौ, इति तेन पुत्तलिकावत्सं चार्येते ।

**यस्यानुभूतिः कालेन ... न रिष्यति (१०, ८४, ३२) ।**

अनुभूतिः स्वप्रकाशलक्षणं ज्ञानम् । अस्थाने व्यवहारः । अनुभूति-र्वाऽनुभवो वा स्वभावसिद्धो न भवति, यत्नसाध्यस्तु सः । चित्स्वरूपे भगवत्य-नुपपन्नोऽनुभूतिशब्द इति नात्र बहु वक्तव्यं भवति ।

**वचो वः समवेतार्थं तातैतदुपमन्महे (१०, ८५, २२)।**

उपपूर्वो मनु अवबोधने इहैव।

**सोऽपश्यत्तत्र महतीं कन्यां वीरमनोहराम् (१०, ८६, ६)।**

महतीं कौमारमतिक्रान्तां तारुण्यमागताम्। महती कन्या तरुणी भवतीति कविर्मन्यते। महाकायेति तु शक्यार्थः स्यात्। हिन्दीव्यवहारानुकार एष इति विभावयन्तु सुधियः।

**तव परि ये चरन्ति (१०, ८७, २७)।**

व्यवहिताश्चेति च्छन्दोवत्कृत्वा पदान्तरेण व्यवधत्त उपसर्गम्। इदमपि व्यवहारदूषणम्।

**व्यभिचरति क्व च क्व च मृषा न (१०, ८७, ३६)।**

चशब्दश्चिदर्थे। अन्यत्रापीह पुराणेऽसकृद् दृष्टः।

**यदि नः श्रवणायालं युष्मद्-व्यवसितं प्रभो (१०, ८८, ३०)।**

श्रवणायालं श्रोतव्यं श्रवणोचितं श्रवणार्हमिति विवक्षति। अलं भूषणपर्याप्तिशक्तिवारणवाचकम् इत्यमरे योग्यार्थस्यासङ्ग्रहादन्यत्राप्रयोगाच्चेदं व्यवहारदूषणमेव। शक्तिशब्देन च शक्तिमत एव ग्रहणं न शक्यस्येति शक्यार्थतापि न शक्या परिग्रहीतुम्।

**ऊचुर्मुकुन्दैकधियो गिर उन्मत्तवज्जडम् (१०, ९०, १४)।**

उन्मत्तवद् जडवच्चेति वक्तव्ये नूत्नशब्दक्लृप्तिः। जडमिति क्रियाविशेषणमिति कश्चिन्मुग्धः।

**तीर्थं चक्रे नृपोनं यदजनि यदुषु स्वःसरित्पादशौचम् (१०, ९०, ४७)।**

पादशौचमेव स्वःसरित् स्वर्धुनी गङ्गेति व्यस्तरूपकम्। समासे तु स्वःसरिद्रूपं पादशौचम् इत्यनिष्टार्थप्रतीतिः स्यात्। इत्थम्भूता स्वःसरित् तीर्थमिति पुना रूप्यते। यथास्थिते स्वःसरिदिति प्रथमान्तम्। इष्यते च द्वितीयान्तम्। ऊनमिति विधेयेनान्वयात्।

**तस्योदरगतं लोहं स शल्ये लुब्धकोऽकरोत् (११, १, २३)।**

तच्छब्दः प्रसिद्धिं ब्रूयात्पूर्वसङ्केतं वा। लुब्धकश्च न पूर्वसङ्केतितो न च प्रसिद्धः। अविदितनामा कश्चिद् भवति। तत्र तच्छब्दोऽस्थाने। जरानामकोऽसौ लुब्धक इहाभिप्रेत इति तु व्याख्यागम्यं न तु पुराणकारकृत उद्देशः।

**धर्मान्भागवतान् ब्रूत यदि नः श्रुतये क्षमम् (११, २, ३१)।**

श्रुतेरिति शेषे षष्ठी युक्ता स्यात् । क्षमम् इति नपुंसकमेकवचनान्तं कथम् ? सामान्ये नपुंसकस्य नायं विषयः ।

**धाराभिर्हस्तिहस्ताभिः (११, ३, ११)।**

हस्तशब्दस्य हस्तसदृशे लक्षणायाः स्वीकारेपि स्वलिङ्गत्यागः कथम् ? हस्तः पुमान् । तेन हस्तिहस्तैरिति युक्तमुक्तं स्यात् ।

**हृतस्पर्शोऽवकाशेन वायुर्नभसि लीयते (११; ३, १४)।**

अवरुद्ध आकाशोऽवकाशो भवति। उपहित इत्यर्थः। अत्र कविः किं विवक्षतीति न व्यक्तम् ।

**नात्मा जजान न मरिष्यति नैधतेऽसौ (११, ३, ३८)।**

जन जनने छान्दसः। स च सकर्मकः। **न तं विदाथ य इमा जजान** (ऋ० १०, ८२, ७) इति श्रुतौ यथा।

**पाद्यादीनुपकल्प्य (११, ३, ५१)।**

पाद्यमादिर्येषां तानि पाद्यादीनि। सामान्ये नपुंसकमिष्यते।

**धर्मस्य दक्षदुहितर्यजनिष्ट मूर्त्याम् (११, ४, ६)।**

धर्मादिति वक्तव्यम् । इदं हि व्यवहारानुगुणं भवति। अन्यथा पत्न्याम् इत्यध्याहार्यं भवति ।

**त्वां सेवतां सुरकृता बहवोऽन्तरायाः**
**स्वौको विलङ्घ्य परमं व्रजतां पदं ते (११, ४, १०)।**

स्वशब्दो वृत्तिच्छन्नं सुरशब्दं परामृशत्वितीच्छति । तदयुक्तम् । इत्थम्भूतः परामर्श इह पुराणे बहुलः ।

**सवर्णां स्वर्गभूषणाम् (११, ४, १४)।**

षष्ठीसमासे स्वर्गभूषणम् इत्येव युक्तम् । बहुव्रीहौ तु भूषण-भूष्यभावो विपरीयात् ।

**कौर्मे धृतोद्रिरमृतोन्मथने स्वपृष्ठे (११, ४, १८)।**

कौर्मेण स्वपृष्ठेनेति करणत्वविवक्षया तृतीयां प्रयुञ्जते शिष्टाः।

**वदन्ति चाटुकान् मूढाः (११, ५, ६)।**

चाटुकानि (चाटूनि) इति सामान्ये नपुंसकमिष्यते।

**मनोरथानां प्रवदन्ति वार्तया (११, ५, १०)।**

वार्तायाम् इति सप्तमी तु सुप्रयुक्ता स्यात्। वार्तायां संकथायाम्।

**लोके व्यवायामिषमद्यसेवा**

**नित्यास्तु ... ... व्यवस्थितिस्तेषु (११, ५, ११)।**

'तेषु' अत्र पुंस्त्वं कथम्। कश्चिदाह—घञन्तटाबन्तयोस्तन्त्रेण निर्देश इति। स पृच्छ्यते घञन्तसेवशब्दः क्व दृष्ट इति।

**त्रैवर्गिका ह्यक्षणिका आत्मानं घातयन्ति ते (११, ५, १६)।**

अक्षणिकाः श्रवणाद्यवसरहीनाः। क्षणिको हि क्षणमात्रावस्थायिनमर्थमाह प्रसिद्धया। अवसरवत्यर्थे क्षणीतीन्नन्तं व्यवहरन्ति व्यवहारस्य कोविदाः।

**यतो विन्देत परमां शान्तिं नश्यति संसृतिः (११, ५, ३७)।**

पूर्वत्र वाक्ये लिङ् अपरत्र च लट् इति लकारवैषम्ये को हेतुः।

**... ... ... ... ... शिशुपालपौण्ड्र-**
**शाल्वादयः ... ... ... ... ... ...**
**ध्यायन्त आकृतधियः शयनासनादौ**
**तत्साम्यमापुरनुरक्तधियां पुनः किम् (११, ५, ४८)।**

किं पुनरनुरक्तधिय इत्येष व्यवहारः। षष्ठीप्रयुक्तिस्तु हिन्दीम् अनुकरोति।

**प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः।**
**हेतुनैव समीहन्ते आयुषो यशसः श्रियः (११, ७, २७)।**

आयुरादयो हेतवः समीहायाः। तेन आयुरादिभिर्हेतुभिरिति विवक्षिते आयुषा यशसा श्रियेति तृतीयान्तानि साधूनि स्युः। षष्ठी त्वप्रसक्ता।

**साधु शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् (११, ७, ३८)।**

केयमपूर्वा भाषितभङ्गी। भूभृतः शिक्षेत नगाच्च शिक्षेतेत्येवमृजुर्मार्गः कुतो नाश्रीयते। यथास्थिते तु नगशिष्यः (वृक्षच्छात्रः) सन् पर्वताच्छिक्षेतेत्यर्थः प्रतीयेत। सोऽनिष्टः।

**कपोतश्चात्मजान् बद्धानात्मनोऽप्यधिकान् प्रियान् (११, ७, ६७)।**

अधिकं प्रियान् इत्येवं वक्तव्यम्। प्रियत्व आधिक्यं क्रियाविशेषणमेवेष्टं वक्तुम्।

**निर्गच्छन्ती प्रविशती निशीथं समपद्यत (११, ८, २६)।**

निशीथमर्धरात्रं समपद्यत प्राप्नोदित्यर्थः। नैष शिष्टजुष्टोऽभिधेया-भिधानविधिः। निर्गच्छन्त्याः प्रविशन्त्याश्च तस्या निशीथः समपद्यतेति शिष्टैः शीलितो वाचां मार्गः। सम्पादिः प्रायेणाकर्मकः। परिणामे रूपान्तरापत्तौ च वर्तते। कृभ्वस्तियोगे सम्पद्यकर्तरि च्विरिति लिङ्गात्।

**सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः (११, ९, ७)।**

भृशं व्रीडिताऽत्यर्थं वा व्रीडितेति तु वक्तुमुचितम्। यथा स्थिते तु महतीति प्रथमान्तं विशेषणं सेत्यनेनान्वियात्। उद्देश्येनानन्वये त्वेतत् पृथग् विधेयान्तरं स्यादनर्थश्चोपनतः स्यात्। सा महती बभूव व्रीडिता च बभूवेत्यर्थप्रसङ्गात्। महतीति व्रीडितेति विशेष्टुं नार्हति। इदं चात्र विस्मरति पुराणकारः—विशेषणमप्रधानं भवति। द्वयोरप्रधानयोः प्रधानापेक्षावतोर्नास्ति परस्परोपकारित्वमिति परस्परमनभिसम्बन्धः, गुणानां परार्थत्वादसम्बन्धः समत्वादिति हि पारमर्षं सूत्रम्। न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति भगवतो भाष्यकारस्य वचनं च। प्रकृतो वाक्यप्रयोगः प्रचरन्तीं हिन्दीं भूयसाऽनुकरोति। तामनुकुर्वन्तः केचन संस्कृतेपि प्रयुञ्जते प्राधीताः, अधीतिनां तन्न युज्यते।

**कथं वर्तेत विहरेत् कैर्वा ज्ञायेत लक्षणैः।**
**किं भुञ्जीतोत विसृजेच्छयीतासीत याति वा (११, १०, ३६)।**

यातीति लट्-प्रयोग उद्वेगकरः। लिङा प्रारब्धं लिङैव समाप्यम्। तथा प्रक्रमभङ्गः परिहृतो भवति।

**मनसा वचसा दृष्टया गृह्यतेऽन्यैरपीन्द्रियैः।**
**अहमेव न मत्तोऽन्यत् ··· ··· ··· ··· ··· (११, १३, २४)।**

अस्मद्युत्तम इत्युत्तमपुरुषस्तु युज्यते। यद् गृह्यते तदहमेवेत्येवं साध्याहारं वचः संश्रित्य समाधिं चिकीर्षन्ति केचित्। तद्धास्यम्।

**एते यमाः सनियमा उभयोर्द्वादश स्मृताः (११, १९, ३५)।**

नियमैः सह वर्तमाना यमा द्वादश भवन्तीत्यक्षरार्थः। यमाश्च नियमाश्च सम्पिण्डिताः समुदिता द्वादश भवन्तीत्युक्तं भवति। तत्पूर्वोक्तेन व्याहन्यते। व्याघातपरीहाराय यमाश्च नियमाश्च प्रत्येकं द्वादश भवन्तीति वक्तव्यम्। उभयोरिति क्वान्वेति। पूर्वयोः श्लोकयोरुक्ता इत्यर्थः। श्लोकयोरिति किमिति परिहृतम्। प्रतिपित्सूनां व्यामोहाय।

तावत् कर्माणि कुर्वीत
न निर्विद्येत यावता (११, २०, ९)।

यावदिति वक्तव्यम्। तृतीयया नार्थः।

श्वित्रो रूपमिवेप्सितम् (११, २३, १६)।

कुष्ठश्वित्रे (नपुंसके) इत्यमराच्छ्वित्रं नपुंसकम्।

दृष्ट्वा (तं) पर्यभवन्भद्र बह्वीभिः परिभूतिभिः (११, २३, ३३)।

बहुविधं तं पर्यभवन्नित्येवं सरलसंक्षिप्तेन संस्कृतेन वक्तव्ये सति किमनयाऽनपेक्षितप्रपञ्चया पुनरुक्तपदया वाचोयुक्त्या ?

इत्येके विहसन्त्येनमेके दुर्वातयन्ति च।
तं बबन्धुर्निरुरुधुर्यथा क्रीडनकं द्विजम् (११, २३, ४०)॥

पूर्वार्द्धे लटं प्रयुङ्क्ते उत्तरार्द्धे च लिटम्। समानकालाश्च क्रियाः। परा नाम व्यवहारावहेला।

जनस्तु हेतुः सुखदुःखयोश्चेत्
किमात्मनश्चात्र हि भौमयोस्तत् (११, २३, ५१)।

सुखदुःखे प्रत्यवमृशंस्तच्छब्द एकवचनान्तः कथं स्यात्। भौमयोरित्यत्र द्विवचनं च कथम्। भूमिविकारभूतयोः (पार्थिवयोः) स्वस्य परस्य च देहयोरिति विवक्षया द्वित्वं नानुपपन्नमिति चेन्न। न हि परकीयदेहः प्रकृतः।

मल्लक्षणमिमं कामं लब्ध्वा मद्धर्म आस्थितः (११, २६, १)।

आङ्पूर्वस्तिष्ठतिः सकर्मकः प्रसिध्यति। आस्थित आश्रितः। तेन मद्धर्ममास्थित इति वक्तव्यम्।

सङ्गं न कुर्यादसताम् ... ...
तस्यानुगस्तमस्यन्धे पतति (११, २६, ३)।

तस्येत्येकवचनान्तमसताम् इत्येतत् कथं परामृशेदिति नेक्षते कविः। असमीक्ष्यकारितैवास्य सर्वमाकुलं करोति नाज्ञानम्। बहुविदयमित्यभ्युपगमः।

तेषु नित्यं महाभाग महाभागेषु मत्कथाः
सम्भवन्ति हिता नृणां जुषतां प्रपुनन्त्यघम् (११, २६, २८)।

मत्कथा इत्येकं प्रपुनन्ति इत्यस्य कर्तृ, जुषताम् इत्यस्य च कर्म। तद्युगपन्नोपपद्यते। विरोधात्।

**आत्मसुबोधहेतिना (११, २९, ३९)।**

ऊतियूतिजूतिसातिहेतिकीर्तयश्चेति स्त्रियां हिनोतेर्वा हन्तेर्वा निपातितम्। तेन हेतिर्नित्यं स्त्री।

**प्रेयसीं सर्वनेत्राणां तनुं स कथमत्यजत्।**
**... ... ... ... ... ...**
**कर्णाविष्टं न सरति ततो यत्सतामात्मलग्नम् (११, ३०, २-३)।**

यच्छब्दो नपुंसकं स्त्रियं तनुं कथं निर्दिशेदिति जानानष्टीकाकारो निवचनेकृत्य वपुरिति पठति वाचकांश्च वञ्चयते।

**कालेन ते कृताः सर्वे कथामात्राः कथासु च (१२, २, ४४)।**

मात्रं कात्स्न्येंऽवधारण इति कोषप्रामाण्यान्नपुंसकैकत्वे कथामात्रमिति तु वक्तव्यम्। कथाशेषाः कृता इति वक्तव्येऽनपेक्षितोऽनृजुर्वाक्-प्रपञ्चः संश्रितः। तदस्य शीलम्।

**कृते यद् ध्यायतो विष्णुं त्रेतायां भजतो मखैः।**
**द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् (१२, ३, ५२)॥**

पूर्वार्द्धे द्वे षष्ठ्यौ। उत्तरार्द्धे एकत्र सप्तमी, अपरत्र पञ्चमीति विभक्तिवैषम्यं किंकृतम्?

**विद्यात उपसादिते (१२, ४, ६)।**

उपसादिते उपसन्ने प्राप्ते। णिचा नार्थः। छन्दोऽनुरोधात् कृत इति मन्ये।

**ततः प्रचण्डपवनो वर्षाणामधिकं शतम्**
**... ... ... ... ... ...**
**वाति ... ... ... ... ... (१२, ४, ११-१२)।**

वर्षशतादधिकं (कालम्) इत्यर्थे प्रयोगः। अपूर्वः पूर्वैरव्यवहृतपूर्वो वाग्विन्यासः।

**यथा जलधरा व्योम्नि भवन्ति न भवन्ति च।**
**ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात् (१२, ४, २६)।**

तथा ब्रह्मणीदं सावयवं जगदुदेति चाप्येति चेत्येवं वक्तव्यम्। उदयाप्ययादिति पञ्चम्यस्थाने। औपम्यस्य विघटिका चेति न दुर्विभावं सुधीभिः।

**तस्मै सपर्यां व्यदधात्सगणाय सहोमया (१२, १०, १५)।**

यथा सगणायेत्यत्र तस्मै इत्यनेन सामानाधिकरण्याय चतुर्थी प्रयुक्ता तथैव सहोमया इत्यनुक्त्वा सहोमायेति वक्तव्यम्। परं तथावचने वृत्तं भङ्क्ष्यत इति भिया वाचमन्यथयति, वर्तमानाय इत्यध्याहारं च रोचयते।

सर्वथाऽक्षमोऽयं कविः स्वेनाभिधित्सितं शब्दैरभिधातुमिति किञ्चिन्निदर्श्य प्रकरणमिदमवसाययामः।

**आत्मनः पितृपुत्त्राभ्यामनुमेयौ भवाप्ययौ (११, २२, ४८)।**

अत्र किं विवक्षति कविः किं च वक्ति। पितृपुत्त्राभ्यामात्मनो भवाप्ययौ (जननमरणे) अनुमेयाविति यथास्थितेऽर्थः। स च हास्यः। यद्विवक्षति तदहास्यम्। पिता पुत्त्रस्य जन्म दृष्ट्वा स्वं जन्मानुमिमीत। पुत्त्रश्च पितुर्मरणं दृष्ट्वा स्वस्यापि कालेन मरणं भविष्यतीत्यनुमिनुयात्। एष विवक्षितोऽर्थः। स च शब्दैर्नोक्त इत्यसामर्थ्यं कवेः।

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्यां व्यवहारदूषणनिरूपणो नाम द्वितीयोऽध्यायः॥

# तृतीयोऽध्यायः

## रूढिं प्रत्यनादरः

अस्ति कश्चिद्योगवशोऽर्थः, अस्ति च रूढिवशः। सम्भवत्यपि योग-लभ्येऽर्थे रूढ्यर्थ एवोपास्यते योगाश्रयश्चापास्यते, रूढिर्योगापहारिणीति वचनात्। अयं तु प्रौढिमात्रसमाश्रयो रूढिं नाद्रियत इतीदानीं निदिदर्शयिषामः—

**सर्वान्मुञ्चति हृच्छयान् (१, ६, २३)।**

हृच्छय इति कामे कन्दर्पे रूढः। इह तु व्युत्पत्तिबलमाश्रित्येष्टार्थ-मात्रे प्रयुक्तः।

**अर्जुनः सहसाऽऽज्ञाय हरेर्हार्दम् ··· ··· (१, ७, ५५)।**

हार्दं हृद्गतोऽभिप्राय इति व्युत्पत्त्याश्रयोऽर्थः। रूढिस्त्वस्य प्रेमणि। तथा चामरः पठति—प्रेमा ना प्रियता हार्दम् इति।

**पानपात्रं मुखं दृशाम् (१, ११, २६)।**

अमृतस्य पूर्णं पात्रमिह पानपात्रमुक्तम्। मैरेयचषके त्वस्य रूढिः।

**सारङ्गाणां पदाम्बुजम् (१, ११, २६)।**

सारङ्गाः कृष्णभक्ता इति श्रीधरः। सारं कृष्णं गायन्तीति सारङ्गा इति व्युत्पत्तेरिति च सः। सारङ्गः पुंसि हरिणे चातके च मतङ्गज इति मेदिनीकरः सारङ्गं हरिणादिनामसु पठति।

**यदात्मनोऽङ्गमाक्रीडं भगवानुत्सिसृक्षति (१, १४, ८)।**

आक्रीडतेऽनेनेत्याक्रीडं क्रीडासाधनम् अङ्गविशेषणम्। रूढिस्त्व-स्योद्याने। तथा चामरः पठति—पुमानाक्रीड उद्यानम् इति।

**श्रीविष्णुपद्या मनुजस्तुलस्या**
**श्वसञ्छवो यस्तु न वेद गन्धम् (२, ३, २३)।**

विष्णोः पादयोर्भवायास्तत्रार्पितायास्तुलस्या इति व्युत्पत्तिमात्रलभ्यमर्थ-माश्रयते। रूढिं तु नाद्रियते। रूढिस्त्वस्य विष्णुपदीशब्दस्य जाह्नव्याम्। गङ्गा विष्णुपदी जह्नुतनयेत्यमरः।

**जीवोऽजीवमजीवयत् (२, ५, ३४)।**

जीवयतीति जीवो भगवान्। अजीवं चेतनारहितम्। जीवशब्दस्तु सुरगुरौ शरीरिणि च रूढः। व्युत्पत्तिमात्रसमाश्रयेणार्थाभ्युपगमो महतेऽनर्थाय। रूढ्यनादरेण सर्वाः स्थितयः संकीर्येरन्। न हि कश्चित्केनचित् प्रतिपिपादयिषितमर्थं प्रतिपद्येत अप्रतिपद्य च यथा तथा प्रवर्तेत।

**अथाह तन्मन्त्रदृशां वरीयान् (३, १, १०)।**

इह मन्त्रदृगिति मन्त्रविदि प्रयुक्तम्। रूढिश्चास्य ऋगादिमन्त्रद्रष्टरि वसिष्ठादावृषौ।

**अयाजयद् गोसवेन गोपराजं द्विजोत्तमैः (३, २, ३२)।**

इन्द्रमानभङ्गाय कृता गवां पूजैव गोसव उक्तः। गोसवस्तु ब्राह्मणेष्वेकाहनामा सोमयागविशेष उच्यते।

**धरां रजःस्वभावेन पणयो ये च ताननु (३, ६, २७)।**

पणन्ते व्यवहरन्तीति पणयो मनुष्या इति व्युत्पत्तिलभ्यमर्थमङ्गीकरोति। रूढिस्त्वस्य वणिजि। आह च यास्कः—पणिर्वणिग्भवतीति।

**योगैर्हेमेव दुर्वर्णं भावयिष्यन्ति साधवः (३, १४, ४५)।**

दुर्वर्णं हेम—धात्वन्तरसंमिश्रं हिरण्यम्। दुर्वर्णमिति रजते रूढम्। दुर्वर्णं रजतं रूप्यम् इत्यमरः।

**सोदपानाश्च सरितश्चुक्षुभुः शुष्कपङ्कजाः (३, १७, ७)।**

उदकानि पिबन्ति येषु त उदपाना वापीकूपतटाकादयः। अयं व्युत्पत्तिमात्रलभ्योऽर्थः। रूढिस्त्वस्य कूपे। पुंस्येवान्धुः प्राहः कूप उदपानं तु पुंसि वेत्यमरे पाठः। मूले कूपोऽर्थः किमिति न गृह्येत। बाढं न शक्येत ग्रहीतुम्। तथा सत्यत्यल्पमेव गृह्येत, इष्यते च बहोरर्थस्य ग्रहणं स्यादिति।

**दुकूलच्छन्नरोधसम् (स्त्रियम्) (३, २०, २९)।**

रुध्यत आव्रियत इति व्युत्पत्त्या रोध इह कटिमाचष्टे। रूढिस्त्वस्य नद्यास्तटे।

**नीलालकवरूथिनीम् (३, २०, ३१)।**

वरूथः सङ्घातः कलाप इत्यस्याभिमानः। वरूथस्तु रथगुप्तौ रूढः। वरूथिनी च सैन्ये।

**मलिनं यथार्हणमसंस्कृतम् (३, २१, ४७)।**

अर्ह्यते पूज्यते सत्क्रियतेऽनेनेत्यर्हणं रत्नम्। व्युत्पत्तिमात्रलभ्योऽर्थः। तेन नायं नियमो रत्नमेवाभिदधीत। यत्किमपि सत्क्रियासाधनं ब्रुवीत, नैकत्रावतिष्ठेत। अयमेव रूढ्यनाश्रये दोषः।

**अयातयामास्तस्यासन्यमाः स्वान्तरयापनाः (३, २२, ३५)।**

अयाता अगता इव यामा येषां ते। सकला इति यावत्। अयं व्युत्पत्तिमात्रव्यपाश्रयोर्थः। जीर्णं च परिभुक्तं च यातयामम् इदं द्वयम् इति तु रूढिः।

**कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् (३, २९, १०)।**

निर्हारो निवृत्तिः, (पाप-) क्षयः। रूढिस्त्वस्यान्यत्र। रणाजिरात् क्षतविक्षतानां योधानामपनयने प्रेतादेर्ग्रामाद् बहिर्नयने वेति विदां नागोचरोऽर्थः। अयं तु रूढि प्रत्यनादृत इति रूढम्।

**अनाहुता अप्यभियन्ति सौहृदं**
**भर्तुर्गुरोर्देहकृतश्च केतनम् (४, ३, १३)।**

सुहृदामिदं केतनम्। सुहृच्छब्दाच्छैषिकेऽणि सौहृदमिति रूपं कल्पयति। सौहृदमिति च सुहृद्भावे सुहृत्कर्मणि वा भावकर्मणोरणि प्रसिध्यति। तां प्रसिद्धिं न संश्रयते।

**मनूनामाद्यं मनुम् (४, ६, ३९)।**

मनवो मन्तारो मननशीला इति व्युत्पत्त्यर्थं समाश्रयते। न च मनुस्तत्र प्रसिध्यति।

**तं नस्त्वं शवशयनाभशान्तमेवम् (४, ७, ३३)।**

शवाः शेरतेऽस्मिन्निति व्युत्पत्तिमाश्रित्य कल्पितं रूपमाश्रयते पृषोदरादीनि यथोपदिष्टम् इत्याचार्यानुशिष्टिं च नाद्रियते। अत्रार्थे यथोपदेशं शिष्टोच्चारणमनुल्लङ्घ्य श्मशानम् इत्यानुपूर्वीकं शब्दरूपं प्रयोक्तव्यम्, न तु नूत्नं रूपमुत्पाद्यम्।

**पुरोडाशं निरवपन् शिपिविष्टाय विष्णवे (४, १३, ३५)।**

शिपिविष्टो विष्णुरिति रूढिः। तामनादृत्य व्युत्पत्तिमाश्रित्य विशेषणत्वेन योजयति। शिपिषु पशुषु (यज्ञरूपेण) विष्ट इति शिपिविष्टः।

**आक्रीडे क्रीडतो बालान् (४, १३, ४१)।**

आक्रीडे क्रीडासमये। उद्याने त्वस्य रूढिः।

**गभीरवेधा उपगुप्तवित्तः (४, १६, १०)।**

गभीरमविज्ञातफलं कार्यं विदधाति करोतीति गभीरवेधाः। वेध इति सकारान्तं प्रातिपदिकं विधातरि ब्रह्मणि रूढम्। अयं तु रूढिमानादृत्यानुष्ठातृमात्रे प्रयुङ्क्ते।

**कलिर्न स्यात् कृतत्वच्चरणैकतानयोः (४, २०, २७)।**

कृत एकोऽव्यवच्छिन्नः त्वच्चरणयोः तानो मनोविस्तारो याभ्यां तौ, तयोः। अमरस्त्वेकतान इत्येकाग्रेऽर्थे पठति। तथा हि तत्रत्यः पर्यायपाठः—**एकतानोऽनन्यवृत्तिरेकाग्रैकायनावपि।** अप्येकसर्ग एकाग्र्योप्येकायनगतोपि चेति।

**तद्बोधं कवयः प्राहुरात्मापह्नवमात्मनः (४, २२, ३१)।**

**अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् (४, २२, ३३)।**

अपह्नवो नाशः। सर्वानर्थानपह्नुतेऽपनयतीति व्युत्पत्तेः। अपह्नवोऽपलाप इति तु रूढिः।

**अस्य लोककल्पस्य राधसे (४, २४, १८)।**

राधसे रक्षायै। धात्वर्थं समाश्रयते रूढिं चावगणयते।

**(महत्सरः) स्वच्छं प्रसन्नसलिलाशयम् (४, २४, २०)।**

सलिलाशयो जलाशयः सर इत्यनर्थान्तरम्। अयं त्वाशेतेः कर्तयचं मत्वा प्रसन्नाः सलिल आशेरते मत्स्यादयो यत्र तत् महत्सर इत्येवं व्युत्पत्तिलभ्यार्थेन विशेषणेन विशेष्यं योजयति। न ह्याशयशब्दः क्वचिन्मत्स्यादौ प्रसिध्यति।

**भूतले निरवस्तारे शयानां पश्य शत्रुहन् (४, २६, १७)।**

अवस्तार आस्तरणं धात्वर्थसमाश्रयेण। प्रसिद्धिस्त्वस्य जवनिकायाम्। **तथा च अवे तृस्त्रोर्घञ् (३, ३, १२०) इति सूत्रे वृत्तिः—अवस्तारो जवनिकेति।**

**का देवरं वशगतं कुसुमास्त्रवेगविस्रस्तपौंस्नमुशती**
**न भजेत कृत्ये (४, २६, २६)।**

देवरः पत्युः कनीयान्भ्राता भवति। अयं तु योगमाश्रित्य रतिसुखदे पत्यौ प्रयुङ्क्ते। देवो देवनं क्रीडा रतिस्तां राति ददातीति देवरः कान्त इति योगलभ्योऽर्थः। देवो रतिरिति बलात्कार इवानौपयिको विपश्चिताम्।

**महार्हतल्पे महिषी भुजोपधिः (४, २७, ४)।**

उपधिरुपधानम्। रूढिस्त्वस्य च्छद्मनि। धातूपसर्गयोः समानत्वेप्येकत्र रूढोऽपरोऽपरत्र शब्दस्वाभाव्यात्।

**देशिनीं रोदमानाया निदधे स दयान्वितः (४, ३०, १४)।**

प्रदेशिनीति तर्जन्यां रूढं न तु देशिनीति। धात्वर्थमादायोपसर्गं चानादाय किमिति देशिनी प्रदेशिनीं नाचक्षीतेत्यभिमन्यते। अनृषिरप्यृषिरिव नियोगपर्यनुयोगानर्हः कविः।

**मद्वार्ता-यातयामानां न बन्धाय गृहा मताः (४, ३०, १६)।**

मत्कीर्तनेन गतः कालो येषामिति विवक्षति। यथान्यत्र तथेहापि रूढिमनाश्रित्य व्युत्पत्तिमात्रमाश्रयते। जीर्णं च परिभुक्तं च यातयाममिदं द्वयम् इति त्वमरः।

**इज्ययोरुभारश्चरथा (५, ३, ७)।**

भार उपकरणजातम्। संभारशब्द एव तत्र प्रसिध्यति।

**शीतोष्णवातवर्षेषु वृष इवानावृताङ्गः**
**पीनः संहननाङ्गः (५, ९, १०)।**

संहन्यन्ते निबिडीभवन्त्यङ्गानि यस्य स दृढावयव इत्यर्थः। धात्वर्थं प्रधानीकृत्य सङ्घातकठिनेर्थे संहननशब्दः प्रवर्तितः। शरीरे त्वस्य रूढिः। गात्रं वपुः संहननं शरीरमिति चामरः। वराङ्गरूपोपेतः सिंहसंहननो हि स इत्यमरपाठेपि संहननं शरीरम्।

**विमानानीकसंकुलेन देवयानेनावतरन्ती (५, १७, ४)।**

देवयानमाकाशमार्ग इति व्युत्पत्तिलभ्योर्थः। रूढिस्त्वस्य देवजुष्टे पथिविशेषे। द्वौ हि पन्थानौ प्रथेते देवयानं पितृयाणं च। श्रुतिश्च—**सत्येन पन्था विततो देवयान इति।**

**कामकलिलविलास० (५, १७, १३)।**

कामेन कलिलः कृतो निर्वृत्त इति कामकलिलः। कलिः क्रियाऽस्यास्तीति मत्वर्थीयो लच् तद्धितः। कलिवली कामधेनू इति कलिः क्रियामाह। रूढिस्तु कलिलशब्दस्य पङ्के। यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यतीति गीतासु तदर्थे श्रवणात्।

**यस्यास्ति भक्तिर्भगवत्यकिञ्चना (५, १८, १२)।**

अकिञ्चन इति दरिद्रे प्रसिध्यति। इह तु नास्ति किञ्चित् प्रयोजनं यत्र सा निष्कारणेत्यर्थे प्रयोगो व्युत्पत्तिव्यपाश्रयः।

**विविक्तपरव्यथः (५, २६, १७)।**

विविक्ता विविच्य ज्ञाता विज्ञाता परव्यथा येन सः। विविक्तौ पूतविजनाविति तु कोषः।

**यदेव साधुहृच्छयस्त्वयाऽसुरः समाश्रितः (७, ८, २१)।**

साधूनां हृदि भयजनकत्वेन नित्यं शेतेऽभिनिविशत इति साधुहृच्छयः। रूढिस्तु हृच्छयस्य काम इत्यसकृदुक्तमधस्तात्।

**क्व तवीयरतिर्भार्या क्वायमात्मा नभश्छदिः (७, १४, १३)।**

नभश्छदिः। नभोपि च्छादयतीति। छदिः पटलं भवतीत्याभिधानिकाः। पाणिनीयलिङ्गानुशासने स्त्रीलिङ्गः, अन्यत्र नपुंसकम्।

**निशम्य कर्म तच्छम्भोर्देवदेवस्य मीढुषः (८, ७, ४५)।**

मीढ्वानिति वेदैकगोचरः शब्द इन्द्रनामधेयम्। इह तु कामान् वृष्टवानिति व्युत्पत्त्यर्थे प्रयुक्तो महादेवं विशिनष्टि।

**रमण्यः स्वर्गिणां वल्गुगतिगीतावलोकनैः (८, ८, ८)।**

रमण्यो रमयित्र्यः। सुन्दरी रमणी रामेति स्त्रीविशेषेषु नामलिङ्गानुशासनेऽमरः।

**नवयौवननिर्वृत्तस्तनभारकृशोदरम् (८, ८, ४३)।**

नवयौवनेन हेतुना नितरां वृत्तौ वर्तुलौ यौ स्तनौ तयोर्भारेणेव कृशमुदरं यस्य (तद् योषिद्रूपम्)। निर्वृत्तं तु निष्पन्नं भवति। तत्र ह्यस्य रूढिः।

**पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीनिव (८, १५, १०)।**

परिधयो दिशः। परिधीयन्ते परिच्छिद्यन्तेऽवच्छिद्यन्त अर्था आभिरिति व्युत्पत्तिमाश्रित्य प्रयोगः। परिवेषस्तु परिधिरुपसूर्यकमण्डले इत्यमरात्परिधिः परिवेषे रूढः।

**ददौ कृष्णाजिनं भूमिर् दण्डं सोमो वनस्पतिः (८, १८, १५)।**

इहैव वनस्वामिन्यर्थे विशेषणं वनस्पतिशब्दः प्रयोगमवतारितो नवमर्थमुपजानता कविना। रूढिस्त्वस्य वानस्पत्यः फलैः पुष्पात् तैरपुष्पाद् वनस्पतिरित्यमरानुसाराद् अपुष्पात्फलोत्पादो यत्र तादृशे तरौ।

**नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात् (८, २०, ५)।**

अधन्यं दारिद्र्यम्। धनगणं लब्धा (४, ४, ८४) इति ताच्छीलिके यति धन्य इति सिध्यति, रूढिस्त्वस्य धनवति नास्ति।

**ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम् (९, ९, ३४)।**

दिधिषुं गर्भाधानस्य कर्तारं पतिम् इति योगलभ्योर्थः। अन्यश्च रूढयर्थः। पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिरित्यमरे पुनर्भ्वाः पति-

दिधिषुरुक्तः । छन्दस्यप्यत्रार्थे प्रयोगः—उदीर्ष्व नार्यभि जीवलोकम् (ऋ० १०, १८, ८) इत्यत्र ।

**आराध्य परिकर्मभिः (९, १५, १७)।**

परिकर्म परिचर्या । करोतेश्चरतेश्चार्थसाम्यमुपादाय परिकर्मेति परिचर्यायां प्रयुङ्क्ते । परिकर्माङ्गसंस्कार इति तु रूढार्थमाचष्टेऽमरः ।

**व्यत्यस्यतां (जरा) यथाकामं वयसा योऽभिधास्यति (९, १८, ३७)।**

अभिधास्यति अभितो धारयिष्यतीत्यर्थे प्रयोगः । अभिपूर्वो दधातिः कथने प्रसिध्यति वेदे बन्धनेऽपि । व्युत्पत्तिमात्रसमाश्रयो धारणार्थस्तु न विदितो विदुषाम् ।

**शरीरिणां श्रेय उपायनं वपुः (१०, २, ३४)।**

उपायनमुपायः। उपेयते प्राप्यतेऽनेनेति व्युत्पत्तेः। रूढिस्त्वस्योपग्राह्ये।

**नैकत्र प्रियसंवासः सुहृदां चित्रकर्मणाम् ।**
**ओघेन व्यूह्यमानानां प्लवानां स्रोतसो यथा (१०, ५, २५)॥**

प्लवन्त इति प्लवास्तृणकाष्ठादयः। प्लव इत्युडुपे मण्डूके कारण्डवे च रूढः ।

**अजः सर्वस्वरूपो बभूव (१०, १३, १९)।**

अज इति ब्रह्मणि रूढः । अयं तु व्युत्पत्तिबलाद् विष्णौ प्रयुङ्क्ते ।

**°विषोच्छ्वसिताम्बुराशिः (१०, १६, ७)।**

अम्बुराशिर्ह्रद इति व्युत्पत्तिबलादर्थमाश्रयते। अयं समुद्रे रूढः ।

**श्यामं हिरण्यपरिधिम् (१०, २३, २२)।**

हिरण्यपरिधिम् इति पीताम्बरमाचष्टे। हिरण्यं हिरण्यवर्णः परिधिः परिधानमस्येति विग्रहः । परिधीयते परिवेष्टयतेऽयमनेनेति वा परिधिरिति व्युत्पत्तिलभ्येऽर्थे प्रयोगः। परिवेष इति तु रूढिः । वेदेऽग्निं परितः स्थापिता यज्ञतरोः शाखा अपि परिधय उच्यन्ते । परिधाने संव्याने त्वत्रैव पुराणे प्रयोगः ।

**वाक्यैः पवित्रार्थपदैर् नयनैः प्राकृतैरपि (१०, ५०, ३४)।**

नयनैः नीतिवचनैः ।

**तपःश्रुतब्रह्मवदान्यसद्भ्यः (१०, ६४, १४)।**

ब्रह्म चेदं वदन्ति प्रवदन्ति इति ब्रह्मवदान्या इति व्युत्पत्त्यर्थमूरीकुरुते। वदान्यो दानशौण्ड इति तु रूढिः।

**दान्ता रुक्मपरिच्छदाः पर्यङ्काः (१०, ८१, २९)।**

रुक्मं सुवर्णम्। तस्य विकाराः परिच्छदाः परितश्छदा येषां ते। परिच्छदस्तु राजार्हे छत्रचामरादौ रूढः।

**पूर्णचन्द्रकलामृष्टे कौमुदीगन्धवायुना (१०, ६५, १८)।**

अत्र कौमुदीशब्दः कुमुद्वत्यर्थे प्रयुक्तः। ज्योत्स्नादित्वं कल्पयित्वा मत्वर्थीयेऽणि कुमुदानि सन्त्यस्या इति व्युत्पत्तेः। रूढिस्त्वस्य चन्द्रिकायाम्। तत्र कुमुदानामियं कौमुदी। शैषिकेऽणि रूपम्।

**क्रीडाभिषङ्गधूतकुन्तलवृन्दबन्धः (१०, ९०, ११)।**

अभितः सङ्ग इति व्युत्पत्त्यर्थमाश्रयते। रूढिस्त्वस्य पराभवे शापे च। तथा चाहामरः—शापे त्वभिषङ्गः पराभवे। मेदिनी च—**अभिषङ्गः पुँल्लिङ्गः पराभवाक्रोशशपथेषु इति।**

**क्षौद्रालापय कामदम् (१०, ९०, २४)।**

क्षुद्रस्य (कृष्णस्य) अयं क्षौद्रः (दूतः), तत्सम्बुद्धौ। क्षौद्रमिति क्षुद्राभिर्मक्षिकाभिः कृते मधुनि रूढम्।

**संछिद्य ... अखिलसंशयाधिं मां भजत (११, १३, ३३)।**

भिन्नत्वाभिन्नत्वैकत्वानेकत्वादीनि आधीयन्तेऽस्मिन्नित्याधिरहङ्कारः। आधिर्मानसी व्यथेति तु कोषः।

**गुणानां समितिर्हि सा (११, २५, ८)।**

समितिः संनिपातः। उपसर्गसहकृतेन एतिना धातुना शक्योऽयमर्थः प्रत्याययितुम्। रूढ्यर्थश्चान्यः। आभिधानिकाः समितिं युद्धं वा सभां वाऽऽहुः।

**नाहं वेदाभिनिर्मुक्तः सूर्यो वाऽभ्युदितोऽमुया।**
**मुषितः ... ... ... ... ... (११, २६, ८)॥**

अभिनिपूर्वो मुञ्चतिः (म्लोचतिः) क्तान्तोऽभ्युत्पूर्वं एतिश्चास्तं गतम् उदितं वा सूर्यं नाहतः। तत्रार्थे रूढेर्विरहात्। यस्य गृहे स्थितस्य सूर्योऽस्तमेति

शयानस्य चोदयते स वर्ण्यादिरुच्यते । तथा चामरः पठति—सुप्ते यस्मिन्नस्तमेति सुप्ते यस्मिन्नुदेति च । अंशुमानभिनिर्मुक्ताभ्युदितौ च यथाक्रमात् इति ।

**अदन्ति चैकं फलमस्य गृध्राः (११, १२, २३) ।**

गृध्यन्तीति गृध्रा विषयाभिलाषिणः । व्युत्पत्तिमात्रश्रितोऽतश्र्योऽर्थः । रूढिस्त्वस्य क्रव्यात्पक्षिविशेषे ।

**प्रत्युद्गमैरदीनानां (शिशूनां) पितरौ**

**( पक्षिणौ दम्पती ) मुदमापतुः (११, ७, ६०) ।**

प्रत्युद्गमैरदूरोत्पतनैः । रूढिस्तु आयान्तमर्हन्तं जनमभिमुखे दृष्ट्वा स्वासनादुच्चलनम् इत्यत्रार्थे ।

**परिसरपद्धतिं हृदयमारुणयो वहरम् ।**

परितः सरन्तीति परिसरा नाड्यः । परिसरः पर्यन्तभूरिति तु कोषः ।

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्यां रूढ्यनादरनिरूपणो नाम तृतीयोऽध्यायः ॥

## चतुर्थोऽध्यायः

# अध्याहारबाहुल्यम्

यत्र वक्ता तत्तदर्थोक्तावपेक्षितानि पदानि परित्यजति यान्यन्तराऽर्थो न स्फुटति, अन्वयो वा न घटते, सा वाक् छान्दी ह्याकाङ्क्षा शब्दैरेव पूर्यत इति वचनादध्याहृतैः पदैः पूरणीया भवति। सोऽयमध्याहारो नाम काव्यबन्धदूषणायालं कवेरनलङ्कर्मीणतां व्यनक्ति। भागवतकारस्य चाध्याहारबहुला वागिति तामल्पामुदाहराम:—

**देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् (१, ४, ५)।**

परिदधुर्वस्त्राणीति शेषः। सुतस्येत्यतोऽनन्तरं दर्शने इति शेषो बोध्यः। पुरो गच्छत इति वा। चित्रमित्यतः पूर्वम् इदमिति च। एतावदनध्याहृत्य न शक्यो वाक्यार्थः सङ्गमयितुम्।

**स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम्।**
**अवेक्षते ... ... ... ... ... ... (१, ४, ८)॥**

यावता कालेनैका गौर्दुह्यते तावन्मात्रं कालं (प्रतीक्षते) इति विवक्षति। न च कालशब्दं व्यवहरति। अव्यवहृते च तस्मिन्गोदोहनमात्रं प्रतीक्षते, अवसिते च गोदोहने ततः प्रतिष्ठत इत्यनिष्टार्थो गम्येत।

**न यद्वचश्चित्रपदं हरेर्यशो**
**जगत्पवित्रं प्रगृणीत कर्हिचित्**
**तद्वायसं तीर्थम् ... ... ... (१, ५, १०)।**

यस्य वचश्चित्रपदमपि सद्हरेर्यशो न गृणाति न स्तवीति इत्यर्थविवक्षयाऽपिः पूरणीयः। यथास्थितेऽपिशब्देऽसति विरुद्धमतिकृत्त्वं दोषः। अचित्रपदं वचो भगवन्तमगृणन्न वायसं तीर्थं स्यादिति प्रतीतिर्जायमाना न वार्येत।

**आमयो यश्च भूतानां जायते येन सुव्रत ।**

**तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् (१, ५, ३३) ।**

(येनामयो जायते) तदेव द्रव्यमामयं न पुनाति चिकित्सितं सत् तु पुनातीत्येवमुपस्करणीयं भवति । यथा स्थिते तु चिकित्सितमिति पृथक्-पदमनन्वितमास्ते ।

**कस्य वा बृहतीमेतामात्मारामः समभ्यसत् (१, ७, ९) ।**

कस्येत्यतः परं कारणात् कृते इति वाऽध्याहरणीयम् ।

**... ... ... ... ... भगवान्भक्तवत्सलः ।**

**अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत (१, ८, ११) ।**

कर्तुं प्रवृत्तस्य द्रौणेरिति विवक्षति । सर्वत्र सशेषाऽस्य वाक् ।

**भक्तियोगविधानार्थं कथं पश्येम हि स्त्रियः (१, ८, २०) ।**

विधानार्थम् इत्यस्य क्रियार्थायां क्रियायामन्वय इष्यते सा च न श्रूयते वाक्ये । तेनेष्टान्वयलाभाय धरामवतीर्णमिति पूरणीयम् ।

**अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् (१, ८, ३३) ।**

वसुदेवस्य भार्यायामिति पूरणीयम् । वसुदेवदेवकीभ्यां याचित इति च वक्तव्यं विवक्षितेऽसन्देहाय ।

**यथा पङ्केन पङ्काम्भः सुरया वा सुराकृतम् (१, ८, ५२) ।**

पङ्केन पङ्काम्भः (पङ्किलं सलिलम्) न प्रक्षाल्यते, सुरया च सुराकृतो दुर्गन्धो नापनीयते इत्यर्थं विवक्षति तदर्थार्पकाणि पदानि तु न प्रयुङ्क्ते ।

**किं ते कामाः सुरस्पार्हाः ... ... ...**

**अधिजह्रुर्मुदं राज्ञः क्षुधितस्य यथेतरे (१, १२, ६) ।**

क्षुधितो ह्यन्नं कामयते क्षुधः शान्तये । अत इतरे इत्यनेनान्नातिरिक्ताः सुगन्धनृत्यगीतवाद्यादयो भोगा गृह्यन्ते । शब्देन च ते नोच्यन्त इत्याध्याहरणीया भवन्ति ।

**धनं प्रहीणमाजह्रुरुदीच्यां दिशि भूरिशः (१, १२, ३३) ।**

क्व वा केन वा कैर्वा प्रहीणं त्यक्तमिति नोक्तम् । मरुत्तस्य राज्ञो यज्ञे विप्रैराप्तदक्षिणैरिति पुराणान्तरकथानुसन्धानादिह योज्यं येनोत्थिताऽऽकाङ्क्षा शाम्येत् ।

**यावतः कृतवान्प्रश्नान् क्षत्ता कौषारवाग्रतः ।**

**जातभक्तिर्गोविन्दे तेभ्यश्चोपरराम ह (१, १३, २) ।**

यावतः प्रश्नान्कृतवांस्तैर्दत्तोत्तरैर्गोविन्दे जातभक्तिर्बभूव तेभ्यश्चोपरराेमेति संकुलं वचः प्रमत्तगीतमिव भाति । यावतः प्रश्नान्कृतवांस्तेषु कतिपय-प्रश्नोत्तरैरेव गोविन्दे जातभक्तिः (चरितार्थः सन्) अवशिष्टप्रश्नोत्तर-निशमनेऽनिच्छ इत्येतावताऽध्याहारेण तेभ्य उपररामेति वचनं लब्धसङ्गति बुद्धिमुपारोहति । अपेक्षिततमपदपरिहारेऽर्थ आकुलो भवतीति किं चित्रम् ।

**बाहवो लोकपालानां सारङ्गाणाभिवाम्बुजम् (१, ११, २५) ।**

निवास (आश्रयः) इत्यध्याहार्यम् । पानपात्रं मुखं दृशाम् इत्यनेन मध्यगेन वाक्यखण्डेन निवास इत्यनुवर्तमानो विच्छिन्न इति पुनरुपादानीयः । अन्यथाऽर्थासंगतिः स्यात् ।

**यत्तेजसा नृपशिरोङ्घ्रिमहन् (१, १५, ९) ।**

नृपशिरस्वङ्घ्रिर्यस्य, तम् । स जरासन्ध इति न शब्देनोक्तम् । न चेह विशेषणमहिम्ना विशेष्यार्थलाभः संभवति, यथा सागराम्बरेत्यत्र । अवयवार्थस्य विशेष्यार्थानुपकारित्वात् ।

**पदयोः पतिताश्रुमुख्याः (१, १५, १०) ।**

स्वस्य पदयोरिति वक्तव्यं कस्येस्याकाङ्क्षाशमनाय । पदयोरित्यस्याभि-सम्बन्धाय तत्कालं प्राप्तस्येति वा पूरणीयम् । पदयोः पतिताश्रुमुख्याः (=पतिताया अश्रुमुख्याः) । अत्र सहसा वक्तव्यविरामः, वाक्यापरिसमाप्तिश्च तिङन्ताश्रवणात् । अपि वा कारणादित्यध्याहृत्य अकृतेत्यनेनान्वय एषणीयः ।

**ययाहरद् भुवो भारं तां तनुं विजहावजः ।**

**कण्टकं कण्टकेनेव ... ... ... ... ... (१, १५, १२) ॥**

उद्धृत्येति पूरणीयम् ।

**शून्योस्मि रहितो नित्यं मन्यसे (१, १५, ४४) ।**

इतिरपेक्षितोऽप्युपेक्षितः । सोऽवश्यं पाठ्यः । अन्यथा शून्य इत्यत्र रहित इत्यत्र च श्रूयमाणा प्रथमा नोपपत्तिमती स्यात् ।

**ते साधुकृतसर्वार्था ज्ञात्वात्यन्तिकमात्मनः (१, १५, ४६) ।**

आत्यन्तिकमित्यस्य विशेष्यं शरणमिति नोक्तम्, तदध्याहार्यम् ।

**कृष्णावेशेन तच्चित्त: पितृभि: स्वक्षयं ययौ (१, १५, ४९)।**

तदानयनायागतैरिति पूरणीयम् । अन्यथा क्व इमे पितर: कुतस्त्याश्चेति स्फुटावगमं न स्यात् ।

**वेपमानं पदैकेन सीदन्तं शूद्रताडितम् (१, १७, २)।**

एकेन पदा स्थितमिति शेष: ।

**कुशलान्याशु सिध्यन्ति नेतराणि कृतानि यत् (१, १८, ७)।**

कुशलानि मनसा चिन्तितान्येवेति पूरणीयम्। इतराणि दुष्कर्माणि क्रियया निर्वृत्तानि सन्त्येव सिध्यन्ति फलन्तीत्याह ।

**मृषा समाधिराहोस्वित् किं नु स्यात्क्षत्रबन्धुभि: (१, १८, ३१)।**

'आगतै: क्षत्रबन्धुभि: किं नु न: प्रयोजनं स्यादिति धिया' इत्येवमुपस्करणीयम् । अन्यथा वाक्ययो: सामर्थ्यमरोहितं भवति, तद् दोषाय ।

**छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम् (२, १, १५)।**

अनु ये च तम् इति न्यूनपदो वाक्यांश इत्थं पूरणीय:—तं (देहम्) अनुसृत्य ये वर्तमाना: कलत्रापत्यादय:, तेषु च स्पृहाम् इति।

**भगवान् सर्वभूतेषु लक्षित: स्वात्मना हरि: ।**
**दृश्यैर्बुद्ध्यादिभिर्द्रष्टा लक्षणैरनुमापकै: (२, २, ३५)॥**

दृश्यैर्द्रष्टाऽनुमीयते इति पूरणीयम् ।

**उरुगायगुणोदारा: सतां स्युर्हि समागमे (२, ३, १६)।**

°गुणोदारा: कथा इति शेष: ।

**अविज्ञाय परं मत्त एतावत्त्वं यतो हि मे (२, ५, १०)।**

अविज्ञायेत्यनेन ल्यबन्तेन समानकर्तृकतायै जानासीति पदं पूरणीयम् ।

**अस्मिन्विधूय कपिलस्य गतिं प्रपेदे (२, ७, ३)।**

अस्मिन्नित्यत उत्तरं जन्मनीति पूरणीयम् ।

**याच्ञामृते पथि चरन् प्रभुभिर्न चाल्य: (२, ७, १७)।**

प्रभुभिरपीति वक्तव्यम् । अन्यथा विपरीतार्थावगम: स्यात् ।

**भगवान् सर्वभूतानामध्यक्षोऽवस्थितो गुहाम् (२, ९, २४)।**

गुहां प्रविश्यावस्थित इत्येवं शेषाध्याहारेण वक्तव्यम् ।

**जहे पदं मूर्ध्नि दधत् सुपर्णः (३, ३, ३)।**

यथा सुपर्णो देवताभ्यः सुधां जह्रे इत्येवमुपस्कृत्य व्याख्येयम्, अन्यथा सुपर्ण इत्येकं पदं नार्थप्रतिपत्तयेऽलं स्यात् ।

**यच्छ्रद्धया श्रुतवत्या च भक्त्या**
**संमृज्यमाने हृदयेऽवधाय ।**
**ज्ञानेन वैराग्येण बलेन धीरा**
**व्रजेम तत्तेऽङ्घ्रिसरोजपीठम् (३, ५, ४१)।**

यत्पदं हृदयेऽवधाय धीरा भवन्तीति शेषः। धीरा इति विधेयम्। भवन्तीति सति विधेयता स्फुटति। अन्यथोद्देश्यताप्रतीतिप्रसङ्गः।

**ये ते पदन्यासविलासलक्ष्म्याः (३, ५, ४४)।**

लक्ष्म्या भाजनानीति शेषः। कश्चिदाह लक्ष्म्याः सम्बन्धिन इति। अध्यहारात्तु न निर्मोक्षः।

**नान्यत्त्वदस्ति भगवन्नपि तन्न शुद्धम् (३, ९, १)।**

अपि तन्न शुद्धम् इत्यस्य यदपि प्रतीयते तदपि शुद्धं नेत्यर्थः। तेन यदपि प्रतीयत इत्येतावद् अध्याहार्यम्। अन्यथा विवक्षितार्थोऽनुक्तः स्यात्।

**उत्थाय विश्वविजयाय च नो विषादम्।**
**अपनयतात् ... ... ... ... (३, ९, २५)।**

चकारेणास्मदनुग्रहायेति गृह्यते इति टीकाकृतः। अवश्यं चेदमभ्युपेयम्। अन्यथा चकारो व्यर्थः स्यात्।

**प्रवृद्धभक्त्या ह्यनुभाविताशये**
**निवेश्य वैकुण्ठमिमं विहास्यति (३, १४, ४७)।**

इमं देहम् इति शेषः। न हि देह इदमोऽर्थः। न ह्ययमित्युक्ते देहो गम्यते।

**क्वणयती चरणारविन्दम् (३, १५, २१)।**

नूपुरेणेति शेषः। नूपुरमन्तरा न शक्यं चरणारविन्दं क्वणयितुम्।

**वृद्धान् दशार्धवयसो विदितात्मतत्त्वान् (३, १५, ३०)।**

दशार्धमिति पञ्चाह। पञ्चवर्षाणीति तु नाह। पञ्चवर्षबालकवत् प्रतीयमानानिति विवक्षति। वृद्धाश्च ते दशार्धवयसश्चेति विरोधः। तत्परिहाराय दशार्धवयस इत्यतोऽनन्तरमिवेति प्रयोज्यम्।

**अलिभिर्विरुतया वनमालया च (३, १५, ४०)।**

शोभितम् इति शेषः।

**नात्यन्तिकं विगणयन्त्यपि तं प्रसावं**
**किन्त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते (३, १५, ४८)।**

आत्यन्तिकं मोक्षमिति शेषः। अन्यद् इन्द्रादिपदम्। किन्तु=किमु=किं पुनः=किमुत।

**यन्नामानि गृह्णाति लोको भृत्ये कृतागसि (३, १६, ५)।**

यद् यस्मात्। नामानि नाम गृह्णाति स्वामिन इति शेषः। अल्पं ब्रुवतोप्यस्य नाशेषा वाक् प्रवर्तते।

**विप्रांस्तु यो न विषहेत (३, १६, ९)।**

अपकुर्वाणानपीति शेषः।

**ये ब्राह्मणान् मयि धिया क्षिपतोऽर्चयन्तः (३, १६, ११)।**

क्षिपतोऽपीति पूरणीयम्। परुषं वदतोपि ब्राह्मणानर्चयन्ति किमुत ये श्लक्ष्णगिरस्तान्।

**तौ तु गीर्वाणऋषभौ दुस्तराद् हरिलोकतः।**
**हतश्रियौ ब्रह्मशापाद् ... ... ... (३, १६, ३३)।**

हरिलोकतः पतन्ताविति शेषः।

**तव क्षेत्रे देवहूत्यां प्रणेष्ये तत्त्वसंहिताम् (३, २१, ३२)।**

देवहूत्यामवतीर्येति शेषः पूरणीयः। अन्यथा देवहूत्यामधिकरणे तत्त्वसंहिताप्रणीतिर्न युक्तिमती स्यात्।

**यावत्तेजो बिभ्रियादात्मनो मे (३, २२, १९)।**

आत्मनो देहात्। च्युतमिति पूरणीयम्।

**इति स्वमातुर्निरवद्यमीप्सितं निशम्य पुंसामपवर्गवर्धनम् (३, २५, १२)।**

अपवर्गे या रतिरुत्कटोऽभिलाषस्तस्या वर्धनमिति विवक्षति। रत्यादिपदं च नोपादत्ते। तदुपादातव्यं तदन्तरार्थासङ्गतेः।

**एतान्यसंहत्य यदा महदादीनि सप्त वै (३, २६, ५०)।**

असंहत्य = असन्धाय = अमिलित्वा। स्थितानीति पूरणीयम्। ल्यबन्तोक्ता पौर्वकालिकी क्रियोत्तरकालं क्रियान्तरमाकाङ्क्षति। तत्राप्ययं प्रयोगं परिहरति। विचित्रा ह्यस्य चित्तवृत्तिः।

**शारीरके दमशरीर्यंवर: स्वदेहे (३, ३१, १९)।**

शारीरके इत्यतः परं सुखदुःखे इति शेषः पूरणीयः। स्वयं किं न पूरयति। किमेतावतोऽल्पस्य शेषस्य पूरणमस्यातिभारः?

**एवं कृतमतिर्गर्भे दशमास्यः स्तुवन्नृषिः।**
**सद्यः क्षिपत्यवाचीनं प्रसूत्यै सूतिमारुतः (३, ३१, २२)।**

अत्र क्षिपतेः कर्मत्वेन तम् इत्यध्याहर्तव्यम्।

**किं चिच्चकार वदनं पुत्रविश्लेषणातुरा (३, ३३, २०)**

व्याकुलमिति शेषः। वस्तुतोऽयं हिन्दीव्यवहारानुकारः।

**तामागतां तत्र न कश्चनाद्रियत्**
**... ... ... ... ...**

**ऋते स्वसॄर्वै जननीं च सादराः**
**प्रेमाश्रुकण्ठ्यः परिषस्वजुर्मुदा (४, ४, ७)।**

सादरा इत्यतः पूर्वं तास्तु (स्वसारो जननी च) इति पूरणीयम्। असन्देहाय पदान्वयाय चायमध्यहारोऽपेक्ष्यतेतमाम्।

**ये मूर्धभिर्दधति तच्चरणावसृष्टम् (४, ४, १६)।**

निर्माल्यं जलादिकं वा विशेष्यं पूरणीयम्।

**यस्मिन्यदा पुष्करनाभमायया**
**दुरन्तया स्पृष्टधियः पृथग्दृशः (४, ६, ४८)।**

सद्भ्योऽपराध्यन्तीति शेषः।

**यदि रचितधियं माऽऽविद्यलोकोऽपविद्धं**
**जपति न गणये तत् ... ... ... (४, ७, २९)।**

अपविद्धमपविद्धाचारम्। उत्तरपदं लुम्पति। अध्याहरिष्यति वाचक इति लोपेऽस्य धीः।

**स वै तदेव प्रतिपादितां गिरं**
**दैवीं ... ... ... (४, ९, ५)।**

केन प्रतिपादितां दत्ताम् इति नोक्तम्। दैवीमिति दिव्यामाह। देवस्य भगवतः कृष्णस्य सम्बन्धिनीमिति वा शैषिकेऽणि। केनेत्याकाङ्क्षा न शाम्यति। प्रतिपद्येत्यनध्याहृत्य गिरमित्यनन्वयं तिष्ठति। अत्रैवोत्तरार्द्धे ध्रुवक्षितिरित्यत्र भविष्यदिति पूर्वपदं देयम्।

**तस्य व्यभिचरन्त्यर्था:**

**प्रारब्धाश्च पुन: पुन: (४, १८, ५)।**

फलं व्यभिचरन्तीति वक्तव्यमनुक्तमुक्तं यथा स्यात्।

**तरवो भूरिवर्ष्माण: प्रासूयन्त मधुच्युत: (४, १९, ८)।**

पुष्पफलानि प्रासूयन्तेति वक्तव्यं शेषो यथा पूर्येत।

**विधत्स्व कर्णायुतमेव मे वर: (४, २०, २४)।**

येनाहं यत्र क्वापि कीर्त्यमानास्त्वद्गुणकथा: शृणुयामिति शेषो बोध्य:।

**अस्ति यज्ञपतिर्नाम केषांचिदर्हसत्तमा: (४, २१, २७)।**

यज्ञपति: कर्मफलप्रदोऽस्ति इति शेषं पूरयित्वा वक्तव्यम्। केषांचिन्मते इति चोक्त्वा न्यूनपदता चापाकरणीया।

**सङ्ग: खलु साधूनामुभयेषां च सम्मत: (४, २२, १९)।**

श्रोतॄणां वक्तॄणां चेति शेष:।

**को नाम तत्प्रतिकरोति विनोदपात्रम् (४, २२, ४७)।**

अत्र तृतीयचरणगतं त्वददभ्रकरुणा इत्यनुवर्तते। ता य: कश्चित्प्रति-कर्तुमीहेत स विनोदपात्रं (हास्यभाजनं) स्यादित्येवं शेषं पूरयित्वा वक्तव्यम्। अन्यथा विनोदपात्रमित्यनन्वितं तिष्ठति।

**श्रियानपायिन्याक्षिप्तनिकषाश्मोरसोल्लसत् (४, २४, ४९)।**

अत्राक्षिप्तो निन्दित: प्रत्याख्यातो निकषाश्मा (निकषोपल:) येन तेनोरसा। अत्र निर्विशेषो निकषाश्मा न विवक्षित:, किन्तर्हि कषितसुवर्ण-रेखाङ्कित:। अन्यथोरसा दीप्तिमत्ता न गम्येत। अतादृशस्योपमानता च न घटेत।

**क्षुल्लेलिहानोऽहिरिवाखुमन्तक: (४, २४, ६६)।**

क्षुधा लेलिहान:। सृक्किणी इति शेष:।

**इमामुपपुरीं भीरु किं चिकीर्षसि शंस मे (४, २५, २६)।**

पुर्या: समीपस्था पू:=उपपुरी। तां प्राप्य, तामालक्ष्येति वा शेष: पूरणीय:। अन्यथा उपपुरीम् इति द्वितीया नोपपद्येत।

क्व पद्मकोशः पतितः कराग्रात् (४, २५, २८)।

यदि रमाऽसि तदेति पदसन्दोहोऽध्याहार्यः। अन्यथा क्वेत्यादिः प्रश्नो नोत्तिष्ठेत्।

तत्पुण्यसलिलैर्नित्यमुभयत्रात्मनो मृजन् (४, २८, ३५)।

मृजन् शुन्धन् पुनानः। मलम् इति शेषः।

देवर्षिवर्यमुखनिःसृतमात्मशौचं
यः कीर्त्यमानम् ... ... ... (४, २९, ८४)।

आत्मशौचमात्मनः शुचित्वस्य (प्रायत्यस्य) साधनं कीर्त्यमानं शृणोतीति पूरणीयम्।

पर्जन्यनादरुतया (४, ३०, ७)।

वाचेति शेषः। पर्जन्यनादो मेघगर्जितम्, स इव रुतं रवो यस्याः सा वाक्, तया।

अथो त्वात्मसमं गृणीमः (४, ३०, ४१)।

आत्मनः सामर्थ्यस्य समम् इति क्रियाविशेषणम्। तेन सामर्थ्यमिति शेषः, स पूरणीयः।

यो जायमानः सर्वेषां तेजस्तेजस्विनां रुचा।
स्वयोपादत्त दाक्ष्याच्च कर्मणां दक्षमब्रुवन्। (४, ३०, ५०)

तं सर्वे दक्षमब्रुवन्नित्येवं शेषपूर्त्या वाच्यम्।

प्राणोपहाराच्च यथेन्द्रियाणां
तथैव सर्वार्हणमच्युतेज्या (४, ३१, १४)।

इन्द्रियाणाम् इत्यतः परं तृप्तिर्भवतीति शेषः पूरणीयः।

यथाऽसवो जाग्रति सुप्तशक्तयः (५, ३१, १६)।

सृष्टिकाले जाग्रति प्रलयकाले च सुप्तशक्तयो भवन्तीत्येवमपेक्षितमध्याहृत्य योज्यम्।

नायं देहो देहभाजां नृलोके
कष्टान् कामानर्हते विड्भुजां ये (५, ५, १)।

ये कामा विड्भुजामपि सुलभा इति विवक्षति। शब्देन च विवक्षितं न ब्रूते।

**गुरुर्न स स्यात् ... ... ...**

**न मोचयेद्यः समुपेतमृत्युम् (५, ५, १८)।**

भक्तिभावोपदेशेनेति शेषः।

**योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली (५, ६, ४)।**

मनसि ह्यनवस्थिते इति तृतीयपद्यस्थद्वितीयचरणगतमिह तृतीयया विपरिणमय्य योज्यम्। अनवस्थितेन मनसा कृतमैत्रस्य योगिनः। किं भवतीति नोक्तम्। नाशो भवतीति वक्तव्यम्। तत्र दृष्टान्त उच्यते—**यथा पुंश्चली जायाऽऽत्मनि कृतविश्वासस्य पत्युर्वधाय भवति।** एवमर्थानुगमाय बह्वध्याहार्यं भवति। अध्याहारापेक्षया वाचा व्यामोक्ष्यन्ति श्रोतार इति नास्य चिन्ता।

**तद् ब्रूह्यसङ्गो जडवन्निगूढ-**
**विज्ञानवीर्यो विचरस्यपारः (५, १०, १८)।**

स त्वं क इति ब्रूहीति शेषपूर्त्या वाच्यं सन्दर्भस्य प्रसन्नतायै।

**यथाऽसतोदानयनाद्यभावात् (५, १०, २१)।**

असता (=अविद्यमानेन) घटेनेति वाच्यम्। उदानयनमुदकाहरणम्।

**निगमाचारेऽशुद्धितो यस्य मिथुनीभावः**
**कुटुम्बभरणं च (५, १४, ३०)।**

अशुद्धित आशौचाद् निगमाचारे(वेदविहिते कर्मणि)ऽधिकाराभावादिति पूरणीयम्।

**स त्वं ह्यमाप्यच्युत शीर्ष्णि वन्दितं**
**कराम्बुजं यत्त्वदधायि सात्वताम् (५, १८, २३)।**

प्रहेलिकावद् धेहीति क्रियापदं लुम्पति। ऊहिष्यते वाचक इति।

**व्यपेतं निरपत्रपम् (६, १, ६०)।**

व्यपेतम् अपेतं भ्रष्टम्। कस्मादिति नोक्तम्। स्वाचारादिति मनसिकृत्य ब्रूते।

**स्वानामहो नविदुषां रचिताञ्जलीनां**
**क्षान्तिर्गरीयसि (६, ३, ३०)।**

गरीयसि प्रभौ क्षान्तिरेव युक्तेति वाच्यम्। अन्यथा वाक्यं न परिसमाप्यते।

**स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम् ।**

**यद्वा अश्वशिरो नाम ··· (६, ९, ५२) ।**

अश्विभ्याम् इत्यस्य उपदिदेशेत्यश्रूयमाणया क्रिययाऽभिसम्बन्धः । प्रहेलिकायामिव क्रियापदं लुम्पति ।

**युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोऽङ्गानि दास्यति (६, ९, ५४) ।**

अश्विभ्याम् इति यथास्थिते निरन्वयं तिष्ठति । अतोन्वयलाभाय यथा शिरश्छेदमङ्गीकृत्याप्यश्विभ्यां ब्रह्मविद्यामदादित्येतावत् पूरणीयम् । अतः शक्यं श्रद्धातुं याचितः सन् स्वानि गात्राणि नो दास्यतीति सर्वं सूक्तं भवति ।

**न सार्वभौमं न रसाधिपत्यम् (६, ११, २५) ।**

राज्यमिति शेषः । सार्वभौमम् इति विशेषणं विशेष्यापेक्षम् ।

**मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिध्यति (६, १४, ४) ।**

कश्चिदेव गृहादिसङ्गाद् मुच्येत कश्चिदेव च सिध्यति इत्येवमपेक्षित-पदाध्याहारेण वक्तव्यम् अन्यथा मुच्येत सिध्यति इति क्रिये विश्लिष्टे अपार्थके भवतः ।

**न नन्वयन्त्यप्रजं मां क्षुत्तृट्काममिवापरे (६, १४, २५) ।**

क्षुत्तृट्कामम् इत्यनेन क्षुत्तृषोः शान्तिं कामयमानम् इति विवक्षति । अतः क्षुत्तृट्शान्तिकामम् इति वाच्यम् । अन्यथा क्षुत्तृषौ कामयत इति णे प्रत्यये क्षुत्तृट्काम इत्यसङ्गतार्थः स्यात् ।

**लोके विततमात्मानं लोकं चात्मनि सन्ततम् (६, १६, ५२) ।**

पश्येदिति शेषः ।

**न तच्चित्रं हि योषिति (६, १८, २९) ।**

योषिति प्रसक्तस्येति विशेषणं देयम् । अन्यथाऽभीष्टार्थलाभो न स्यात् ।

**सम्प्रत्यमर्षी गोविन्दे दन्तवक्त्रश्च दुर्मतिः (७, १, १७) ।**

सम्प्रति इत्यतोऽनन्तरमपिः पूरणीयः । तदभावे पुराऽमर्षी नाभूदिति प्रतीतिर्जायेत ।

**एतद् भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना (७, १, २०) ।**

एतदिति द्वितीया प्रतियोगमन्तरेण नोपपद्यत इति प्रतिरध्याहार्यं इति श्रीधरः । एतत् प्रति = एतद्विषये ।

**अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् (७, ३, ९)।**

सर्वधिष्ण्येभ्यः श्रेय इति विवक्षति न च तदर्थे शब्दं प्रयुङ्क्ते।

**सर्वेषां लोकपालानां महिमानं यथाऽऽत्मनः (७, ३, ३८)।**

लोकपालानां मध्ये यथाऽऽत्मनस्ते महिमाऽस्ति तं महिमानं मे देहीति विवक्षति पदानि च तत्पराणि न प्रयुङ्क्ते। तान्यध्याहर्तव्यानि भवन्ति।

**पुत्रान् ··· ··· उपालभन्ते शिक्षार्थं नैवाघमपरो यथा (७, ४, ४५)।**

अघं दुःखं न कुर्वन्तीति क्रियाध्याहार्या।

**सर्वैरुपायैर्हन्तव्यः सम्भोजशयनासनैः (७, ५, ३८)।**

सम्भोजादय उपाया न। सम्भोजादिकाले शक्यक्रियैरनुष्ठेयैरिति विवक्षति, तदर्थकानि पदानि तु न प्रयुङ्क्ते।

**बुद्धिश्च पुंसां वयसाऽऽर्यसेवया (७, ५, ५०)।**

उत्पद्यते परिवर्तत इति वेह पूरणीयम्।

**यदाचार्यः परावृत्तो गृहमेधीयकर्मसु (७, ५, ५४)।**

परावृत्तोऽध्ययनस्थानादिति शेषः। गृहमेधीयेषु कर्मसु च प्रसक्त इति च शेषः।

**··· ··· ··· ··· उशत्तम तेऽङ्घ्रिमूलं**
**प्रीतोऽपवर्गशरणं ह्वयसे कदा नु (७, ९, १६)॥**

ह्वयतिः शब्दकर्मा। तस्य लोके वेदे वा द्विकर्मकता न दृष्टा। तेन अङ्घ्रिमूलमिति द्वितीयोपपत्तये प्रतिमध्याहरन्ति व्याख्यातारः।

**कामस्यान्तं क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात्।**
**जनो याति ··· ··· ··· ··· ··· ··· ··· (७, १५, २०)॥**

क्षुत्तृड्भ्यां शान्ताभ्यामित्युक्ते वाक्यार्थः सङ्गच्छते।

**स्थिरं समं सुखं तस्मिन्नासीतर्ज्वङ्ग ओमिति (७, १५, ३१)।**

उच्चारयन्निति शेषः।

**निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः (७, १५, ५२)।**

एतद् यानं पितृयाणमाप्नोतीत्यध्याहार्यम्। यथास्थिते त्वनुवाद्यमुदितं विधेयं च नोदीरितम् इति वाक्यमुत्थिताकाङ्क्षम्।

**तेनाहनन्नृप सवाहमरिं त्र्यधीशः (८, १०, ५६)।**

त्र्यधीशः त्रिलोकीनाथः। लोकशब्देऽनुपात्ते केषां त्रयाणामधीश इति विशिष्य न ज्ञायते।

**मोहयित्वाऽसुरगणान् हरिः सोममपाययत् (८, १२, १)।**

सुरानिति शेषः।

**असुराणां सुधादानं सर्पाणामिव दुर्नयम् (९, १, १९)।**

क्षीरपानं (क्षीरपाणमिति) शेषः। अन्यथोपमानानुक्तेरर्थव्यक्तिरिष्टा न स्यात्।

**खड्गमादाय तरसा प्रलीनोडुगणे निशि (९, २, ६)।**

प्रलीनोऽन्तर्हित उडुगणो यत्र समये। समये इत्यध्याहार्यं भवति। अन्यथा निशि इत्यस्य विशेष्यत्वे प्रलीनोडुगण इत्यत्र पुंस्त्वं दुर्घटं स्यात्। अध्याहृतेपि समयशब्दे तद्वैयर्थ्यं नापैति। गडुभूतः स इति प्रतीतिरवतिष्ठते।

**यत्राविरिञ्चान्निरयांश्चकार (९, ५, २५)।**

आ विरिञ्चात् इत्यतः परं लोकान् इति पूरणीयम्।

**कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम् (९, ६, ३१)।**

स्तन्यं प्रतीति वक्तव्यम्। रोरूयतेरकर्मकत्वात्।

**योगैश्वर्येण बालांस्तान् दर्शयित्वा ततो ययौ (९, ८, १८)।**

जीवान्, संजीवितान् इति वा विशेषणं देयम्।

**रक्षः कृतं तद् विदित्वा चक्रे द्वादशवार्षिकम् (९, ९, २३)।**

शापमिति शेषः। राजानमशपत् क्रुद्ध इति त्रयोविंशे श्लोके श्रवणादध्याहारः सुकरो भवति न त्वनपेक्षितः। द्वादशवार्षिकमिति विशेष्यमाकाङ्क्षति।

**वैरूप्याच्च शूर्पणख्याः (९, १०, ४)।**

वैरूप्यकरणादिति विवक्षति। प्रिया-विरहो वैरूप्यसम्पादनादेव जातो न तु स्वभावसिद्धाद् वैरूप्यात्।

**पुत्रान् स्वमातरस्तास्तु प्राणांस्तन्व इवोत्थिताः (९, १०, ४८)।**

पुत्रान् समीक्ष्य प्राणान् प्राप्योत्थितास्तन्वो मृता देहा इवेत्यर्थं विवक्षति। प्राप्येत्याद्यनध्याहारे त्वन्वयो दुर्लभः। मृतानां देहानामेव प्राणप्रतिपत्तिः संगता भवतीति तन्व इत्यत्र मृता इति विशेषणं देयम्।

**यदङ्गान्तरमासाद्य च्यवते ह रिरंसया (९, १४, २०)।**

अत्र किं च्यवत इति नोक्तम्। विवेकादिति वक्तव्यम्।

**संवत्सरान्ते हि भवानेकरात्रं महेश्वर।**
**वत्स्यत्यपत्यानि च ते भविष्यन्त्यपराणि भोः (९, १४, ३९)।**

वत्स्यति मयीति शेषः।

**कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः (९, १८, ४)।**

कन्याभ्यां कृतदार इति केचिदध्याहृत्य योजयन्ति। सत्यप्यध्याहारे नार्थानन्वयो निवर्तते। तत्र कन्याभ्याम् इत्यत्र तृतीया केन ? नहि कन्ये दारकर्मणि करणे, किन्तर्हि कर्मणी। किं च। काव्यस्येत्यतोऽनन्तरं चोऽपेक्षितः। स किमित्युपेक्षितः। असति तस्मिन्काव्यवृषपर्वणोः सामानाधिकरण्यं भासेत, तदनिष्टम्।

**कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति (९, १९, ११)।**

बहुतिथं कालम् इत्यतोऽनन्तरं भोगान् भुञ्जान इति पूरणीयम्। अन्यथा कालमित्यत्र द्वितीया नोपपद्येत।

**स सम्राड् लोकपालाख्यमैश्वर्यमधिराट् श्रियम्।**
**चक्रं चास्खलितं प्राणान् मृषेत्युपरराम ह (९, २०, ३३)॥**

मृषेति निश्चित्येति वक्तव्यं येन लोकपालाख्यम् इत्यादिषु द्वितीयोपपत्तिमती स्यात्।

**अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपते।**
**विभक्तं व्यभजत्तस्मै ... ... ... ... ... (९, २१, ७)॥**

अत्रायययाविति क्रियापदं लुम्पति।

**बृहत्क्षत्रस्य पुत्रो भूद्धस्ती यद्धस्तिनापुरम् (९, २१, २०)।**

येन हस्तिनापुरं निर्वृत्तं, निवेशितमिति वा वक्तव्यम्। अनुवाद्यमुदित्वा विधेयं नोदीरयति तेन श्रोतुर्निराकाङ्क्षता न जायते।

**वेदवादातिवादान्वै ततो देवो ववर्ष ह (९, २२, १७)।**

वेदवादातिवादानुवादेतीत्थं क्रियापदमध्याहृत्य वाक्यं सम्पाद्यम्। देवापिना कृते वेदार्थातिवादे देवो ववर्षेति संकुलं वचः। वेदनिन्दया पातित्येन देवापे राज्यानर्हत्वे सति शन्तनो राज्याप्तौ दोषाभावाद् देवो ववर्षेत्येतावता सन्दर्भेणाध्याहृतेन सर्वमसङ्कुलं भवति।

... ... ... ... ... द्रौणे ब्रह्मास्त्रतेजसा ।
त्वं च कृष्णानुभावेन सजीवो मोचितोऽन्तकात् (९, २२, ३४) ।

अन्वयलाभाय तेजसा इत्यतोऽनन्तरं धक्ष्यमाण इति पूरणीयम् ।

क्षत्रं यत्तालजङ्घाख्यमौर्वतेजोपसंहृतम् (९, २३, २८) ।

औवंस्य ऋषेस्तेजसा युक्तेन सगरेण उपसंहृतमिति विवक्षति । यथास्थिते च औवंतेजसैव तद् विनाशितमिति प्रतीतिर्जायमाना न वार्यते ।

अन्तर्बहिः पूरुषकालरूपैः (१०, १, ७) ।

अन्तर्बहिर्दृष्टीनामिति सोपस्कारं वचः कवेरभिप्रेतम् ।

भ्रातुः समनुतप्तस्य क्षान्तरोषा च देवकी ।
व्यसृजत् ... ... ... ... ... (१०, ४, २५) ।

व्यसृजत् शोकमिति केचित् । वाचमिति चापरे । अध्याहारे नैयत्यं नास्ति ।

नेह स्थेयं बहुतिथम् (१०, ५, ३१) ।

पूरणे डटि तिथुकि चागमे यत् पूर्यते तन्नोक्तम् । बहुतिथं कालम् इति वाच्यम् ।

व्यावाय केशांश्चरणौ भुजावपि ।
प्रसार्य ... ... ... ... ... (१०, ६, १३) ।

व्यादाय मुखमिति वक्तव्यम् । न हि व्यादानमात्रेण मुखव्यादानं गम्यते, विपादिकादेरपि व्यादानसंभवात् ।

सद्भिः क्षिणोति तं तर्षम् (१०, १०, १७) ।

सद्भिः संयुक्तः, सद्भिः सङ्गेनेति वा वक्तव्यम् ।

क्षेपणैः क्षिपतः क्वचित् (१०, ११, ३९) ।

क्षेपणैः क्षेपणसाधनैः । बिल्वामलकादि इति क्षिपतेः कर्म बोध्यम् । तन्मूलकारेण नोक्तमित्यस्मदादिभिः पूरणीयम् ।

सर्वं विष्णुमयं गिरोऽङ्गवद् अजः सर्वस्वरूपो बभौ (१०, १३, १९) ।

सर्वं विष्णुमयमिति गीरितिना परिच्छेद्या । यथेयमर्थंरूपेणाङ्गवती शरीरिणी प्रत्यक्षा भवति तथेत्येतावच्चाध्याहार्यम् । अन्यथा सर्वमिदं विश्लिष्ट-मनन्वितं पदकदम्बकं वाक्यमपि न भवति, दूरे वाक्यार्थसंगतिः ।

**पञ्चषासु त्रियामासु हायनापूरणीष्वज: (१०, १३, २८)।**

अवशिष्टासु सतीष्विति शेष: ।

**तदस्तु मे नाथ स भूरि भागो**
**भवेऽत्र वान्यत्र तु वा तिरश्चाम् (१०, १४, ३०)।**

तिरश्चां मध्ये यो भव:, तस्मिन्वेति विवक्षति ।

**उद्धर्मशार्वरहर (१०, १४, ४०)।**

शार्वरं शार्वरिकम् । तम इति विशेष्यं नोक्तं तद्वक्तव्यम् ।

**सूक्तैश्च कोकिलगणा गृहमागताय (१०, १५, ७)।**

स्वागतं व्याहरन्तीति शेष: । प्रवह्लिकावल्लभोऽयं कवि: । कानिचित्पदान्युक्त्वा सहसा विरमति, शेष ऊह्यतामिति सगर्वमाह्वयते श्रोतॄन् ।

**क्षेत्राणि सस्यसम्पद्भि: कर्षकाणां मुदं ददु: ।**
**धनिनामुपतापं च दैवाधीनमजानताम् (१०, २०, १२)।**

पूर्वार्द्धे वृष्टेरविच्छेदेनेति पूरणीयम् । उत्तरार्द्धे च वृष्टेर्विच्छेदेनेति । लाभालाभौ दैवाधीनावित्यजानताम् इत्येवमपेक्षितपदमध्याहृत्य व्याख्येयम् ।

**गोप्य: किमाचरदयं कुशलं स्म वेणुर्दामोदरसुधामपि गोपिकानाम् । भुङ्क्ते स्वयं यदवशिष्टरसं ह्रदिन्यो हृष्यत्त्वचोऽश्रु मुमुचुस्तरवो यथाऽऽर्या: (१०, २१, ९) ॥**

अत्र बह्वध्याहार्यम् । गोपिकानाम् इत्यत्र भोग्यमिति शेष: । ह्रदिनीनां लोमहर्ष:, तरूणामश्रुविमोक्ष: कस्मादिति च नोक्तम् ।

**तद् द्रव्येण गिरिद्विजान्**
**उपहृत्य बलीन् सर्वान् (१०, २४, ३२-३३)।**

प्रति इत्यध्याहार्यम् । तथा सत्यपि उपपदविभक्ते: कारकविभक्तिर्बलीयसीत्युपपदविभक्ति द्वितीयां बाधित्वा सम्प्रदानचतुर्थ्येव भविष्यति । न हि ब्राह्मणेभ्यो ददातीत्यस्य स्थाने ब्राह्मणान् प्रति ददातीत्युच्यते ।

**क्षन्तुं प्रभोऽथार्हसि मूढचेतस: (१०, २७, ८)।**

मूढचेतसो मेऽपराधमिति शेषं पूरयित्वा वाच्यम् ।

**करावपि गृहकृत्ये (निविष्टौ) (१०, २९, ३४)।**

सम्प्रति निश्चेष्टौ जाताविति शेष: ।

**जड उदीक्षतां पक्ष्मकृद् दृशाम् (१०, ३१, १५)।**

जड इति भातीति सशेषं वच: ।

न पारयेऽहं निरवद्यसंयुजां
स्वसाधुकृत्यं विबुधायुषापि वः (१०, ३२, २२)।

निर्यातयितुमिति शेषः।

वाचो विमिश्रा गुणकर्मजन्मभिः (१०, ३८, १२)।

गुणकर्मजन्मकथाभिरिति विवक्षति। अस्थाने संकोचो गिराम्।

शिरसाऽधत्त याः शर्वः स्वर्याताः सगरात्मजाः (१०, ४१, १५)।

याभिः स्वर्याता इत्येवं पूरणीयमस्य स्खलद्वचः।

पितरावुपलब्धार्थौ विदित्वा पुरुषोत्तमः।
मा भूदिति निजां मायां ततान जनमोहिनीम् (१०, ४५, १)।

मा भूदिति परमार्थतः स्वस्य रूपस्य ज्ञानं मा भूदित्यस्यार्थे संक्षिप्तं वचः।

सर्वान् स्वज्ञातिसम्बन्धान् दिग्भ्यः कंसभयाकुलान् (१०, ४५, १५)।

दिग्भ्य इत्युत्तरम् आनाय्येति पूरणीयम्। तावतापि न पूर्यतेऽर्थः। दिशो विद्रुतांस्तांस्तत आनाय्येत्यर्थस्य विवक्षणात्।

धावन्तीभिश्च वाश्राभिरूधोभारैः स्ववत्सकान् (१०, ४६, ९)।

स्ववत्सकान्प्रति इति वक्तव्यम्। अन्यथा स्ववत्सकान् इति द्वितीया नोपपद्येत। धावतिर्गत्यर्थोऽकर्मकः। प्रतिपूर्वोऽनुपूर्वो वा सकर्मको भवति। प्रकृते तु प्रतिः कर्मप्रवचनीयः। तद्योगे द्वितीया सूपपन्ना भवति।

एवं निशा सा ब्रुवतो र्व्यतीता
नन्दस्य कृष्णानुचरस्य राजन् (१०, ४६, ४४)।

चकारोऽपेक्षिततमोप्युपेक्षितः। संक्षेपे रुचेः।

विजयसखसखीनां गीयतां तत्प्रसङ्गः (१०, ४७, १४)।

अग्रत इति शेषः।

भवापवर्गो भ्रमतो यदा भवेत्
जनस्य तर्ह्यच्युत तत्समागमः (१०, ५१, ५४)।

सन्निहितो भवेदिति विवक्षति। अपवर्गः परिसमाप्तिः।

स्यमन्तकेन मणिना स्वयमुद्यम्य
दत्तवान् (स्वकन्याम्) (१०, ५६, १)।

अपराधक्षान्त्यर्थमुद्यम्येति शेषपूर्त्या वाच्यम्।

**हा हेति साध्वृषयः सुरेश्वराः**
**ईडिरे ... ... ... ... ... (१०, ५९, २२)।**

नरकासुरस्य बान्धवाः (भुवि पतितं तच्छिरो दृष्ट्वा) हा हेति चुक्रुशुरिति विवक्षति।

**वाञ्छन्ति ये सम्पद एव तत्पतिम् (१०, ६०, ५३)।**

तत्पतिं तासां सम्पदां पतिं न वाञ्छन्तीति विवक्षति। प्रतिषेधार्थकं नकारं च लुम्पति।

**ब्रह्मास्त्रस्य ब्रह्मास्त्रं वायव्यस्य च पार्वतम्।**
**आग्नेयस्य च पार्जन्यं नैजं पाशुपतस्य च (१०, ६३, १३)।**

शमकं बभूवेत्यध्याहार्यम्।

**उद्धवं प्रेषयामास धृतराष्ट्रं बुभुत्सया (१०. ६८, १६)।**

धृतराष्ट्रं प्रतीति वक्तव्यम्। चतुर्थी वा प्रयोज्या।

**तत्राहुर्ब्राह्मणाः केचिद् आसीना ब्रह्मवादिनः (१०, ७०, २१)।**

वेदं प्राहुरिति विवक्षति। कर्म च न वक्ति। वाचकः स्वयमभ्यूहिष्यतीति।

**किं वा जनः स्वकृतमृच्छति (१०, ७०, २७)।**

त्वया रक्ष्यमाणोपीति शेषः। स वक्तव्यः। तमन्तरेण पृच्छाया वैयर्थ्यप्रसङ्गः।

**स्वप्नायितं नृपसुखं परतन्त्रमीश**
**शश्वद् भयेन मृतकेन धुरं वहामः (१०, ७०, २८)।**

स्वप्नायितं यन्नृपसुखं तदर्थमिति पूरणीयमुत्तरार्द्धेनान्वयप्रक्लृप्तये।

**राजदूतमुवाचेदं भगवान्प्रीणयन् गिरा।**
**मा भैष्ट दूत भद्रं ते घातयिष्यामि मागधम् (१०, ७१, १९)।**

यथास्थिते हे दूत मा भैष्टेति बहुवचनान्तं क्रियापदं दुष्प्रयुक्तं भवति। हे दूत मा भैष्टेति राज्ञो ब्रूहीति शेषश्चेत् पूर्येत तदेव सुप्रयुक्तं भवति। एवं शेषपूर्त्या यत्र तत्र साधूकरणीयाऽस्य वाग्भवति।

**सहदेवं दक्षिणस्यामादिशत् (१०, ७२, १३)।**

यथास्थिते किमुक्तं भवति, किमपि न। दक्षिणस्यां दिशि याहीत्येवमुपस्क्रियेत चेत् सर्वं संगतं भवेत्।

**यस्मिस्तदा मधुपतेर्महिषीसहस्रं**
**श्रोणीभरेण शनकैः क्वणदङ्घ्रिशोभम् (१०, ७५, ३३)।**

शनकैश्चलदिति शेषः पूरणीयः, अन्यथा शनकैरित्यनन्वितं स्यात्।

**वीक्ष्य तत्कदनं स्वानां निरूप्य पुररक्षणम् (१०, ७७, ९)।**

आर्यमिश्रं (रामं) पुररक्षणं प्रति निरूप्य नियुज्येत्याह। पुररक्षणम् इति प्रतियोगे द्वितीया, न तु कर्मणि। प्रतिश्च न श्रूयते, स उच्चार्यः।

**न सतां परः स्वः (१०, ८२, ३९)।**

परो वा स्वो वेति विवक्षति, शब्दं चार्थपर्याप्तये न प्रयुङ्क्ते।

**य इत्थं वीर्यशुल्कां मां दासीभिश्चतुरङ्गिणीम्।**
**पथि निर्जित्य राजन्यान् ... ... ... (१०, ८३, १४)॥**

चतुरङ्गिणीमादायेति शेषपूर्त्या वक्तव्यम्।

**दुर्योधनाय रामस्तां दास्यतीति(अश्रुणोत्)न चापरे (१०, ८६, ३)।**

अपरे वसुदेवादयो न दित्सन्तीति शेषः।

**कोन्वर्थः सुखयत्येनं कामो वा मृत्युरन्तिके (११, १०, २०)।**

यथा मृत्युरन्तिके भवतीति वाक्यं पाठ्यं पूर्वेणार्थसङ्गतये।

**तस्य त्रैकालिकी बुद्धिर्जन्ममृत्यूपबृंहिता (११, १५, २८)।**

जन्ममृत्युविषयज्ञानेनोपबृंहितेति विवक्षति न च विवक्षितार्थार्पकाणि पदानि प्रयुङ्क्ते।

**पुरा किल महाबाहो धर्मं परमकं प्रभो**
**... ... ... ... ... ...**
**स इदानीं सुमहता कालेनामित्रकर्शन।**
**न प्रायो भविता मर्त्यलोके ... ... ... (११, १७, ३-४)॥**

स इदानीं लुप्तप्राय इत्येवं शेषपूर्त्या वाच्यम्। अग्रे चापि न भवितेत्येवं च योज्यम्।

**शुश्रूषमाण आचार्यं सदोपासीत नीचवत्।**
**यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलिः (११, १७, २९)॥**

यानशय्यासनस्थानैरित्यनेन किं विवक्षति। यानादीनि शुश्रूषायां करणानि। नैतद्यथातथं ... मित्यन्वयः। यानादीनां तत्र कथं करणत्वम् इति

न व्यक्तयति । तदित्थं व्यक्तिं नयन्त्यस्य हृदयस्य विज्ञा विवरीतारः—यान्तम् (आचार्यम्) अनुयायात्, संविशन्तमनुसंविशेषददूरे वर्तमानः, श्रान्तमासीनमुपासीत, चरणसंवाहनं कुर्यात् । स्थितं चोपासीत कृताञ्जलिस्तदाज्ञां प्रतीक्षमाणः । एवं बहुतरकमनुक्तमूहनीयं भवति ।

**गृहार्थी सदृशीं भार्यामुद्वहेत् …**
**यां सवर्णामनुक्रमात् (११, १७, ३९) ।**

यामन्यां कामत उद्वहेत् तामपि सवर्णामनु प्रथमोढायाः सवर्णाया अनन्तरमेव, तत्रापि अनुक्रमाद् वर्णक्रमादेवेति बह्वध्याहार्यं भवति । प्रहेलिका-वल्लभः कविर्विश्लिष्टानि वाक्यमाभासयन्ति प्रयुङ्क्ते पदानि । अयमस्य स्वो भावः ।

**विण्मूत्रपूये रमतां कृमीणां किं यदन्तरम् (११, २६, २१) ।**

रमतां पुंसां कृमीणां चेति वक्तव्यम् । अपेक्षिततममपि चकारं जहाति । तद्धानौ प्रसज्यमानानर्थासङ्गतिं च नेक्षते । कवयस्तु भेदे षष्ठ्यौ नियतं चकारेण व्यवदधते ।

**यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णमबाधितम् ।**
**व्यर्थेनाप्यर्थवादोऽयं द्वयं पण्डितमानिनाम् (११, २८, ३७) ।**

यन्नामाकृतिभिर्ग्राह्यं पञ्चवर्णं द्वयं द्वैतं तदबाधितमिति मन्यमानानां पण्डितमानिनामयं ब्रह्मात्मवादोऽपि व्यर्थेन (=अकारणम्) अर्थवाद एव प्रतीयत इति बह्वध्याहारभागस्य वाक् कस्य व्यामोहाय न ?

**न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च ।**
**नारकाश्चानुगृह्णन्ति यां यां योनिमसौ गतः ।।**

यां यां योनिमसौ गत इत्यनन्वयमिव । तत्रान्वयलाभाय तत्रस्था अपि इति पूरणीयम् ।

**इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्यामध्याहारबाहुल्यनिरूपणो नाम चतुर्थोऽध्यायः ।।**

# पञ्चमोऽध्यायः

## अधिकपदत्वम्

यावदर्थं शब्दप्रयोग इति यावद्भिः शब्दैर्विवक्षितः सर्वोऽर्थः स्पष्टमुदितो भवति तावन्तस्ते प्रयोज्याः, न ततोऽतिरिक्ताः। वैयर्थ्यप्रसङ्गात्। गतार्थाश्च न पुनर्वक्तव्याः, तत एव कारणात्। शब्दातिरेकेऽर्थानतिरेक इति दोषमुदाहरन्ति साहित्याचार्य्याः, अधिकपदत्वं चैतद् व्यपदिशन्ति। अत्र पुराणेऽधिकपदप्रयोगो बहुलः। कांश्चिदेव स्वल्पांस्तत्प्रदेशानुदाहरामः—

**शिवाय लोकस्य भवाय भूतये (१, ४, १२)।**

भवो भूतिश्च समानार्थौ। प्रत्ययभेदो नार्थभेदः। एकतरः शक्यो हातुम्। भवाय भवनिवृत्तये (संसारमोक्षाय), मशकार्थो धूम इतिवद् इति कश्चिदुत्प्रेक्षते न च तत्रोत्प्रेक्षायां किञ्चिदनौचित्यमीक्षते। भूतिरैश्वर्यम्। भवनिवृत्तिरपवर्गः। तस्य पूर्वं न्यासः कथं घटते। उत्तरोत्तरमुत्कर्षो युज्यते वक्तुम्।

**मन्ये त्वां कालमीशानमनादिनिधनं विभुम्।**
**समं चरन्तं सर्वत्र भूतानां यन्मिथः कलिः (१, ८, २८)।**

अनर्थको यच्छब्दः। तुशब्दस्तु सुप्रयुक्तः स्यात्।

**भूतहत्यां तथैवैकां न यज्ञैर्मार्ष्टुमर्हति (१, ८, ५२)।**

अत्रैकाम् इति नापेक्षितम्। शब्दोपजनो नार्थोपजनः।

**... ... ... ...पृथा बालप्रजा वधूः।**
**युष्मत्कृते बहून्क्लेशान्प्राप्ता तोकवती मुहुः (१, ९, १३)।**

अत्र बालप्रजा पृथेत्युक्त्या तोकवतीति गतार्थम्। यदि बालव्यतिरिक्ता अबाला अपि तत्सुताः स्युर्बालप्रजेति विशेषणमपार्थकं स्यात्। यदि न सा केवला क्लेशान्प्राप्ताऽपि तु तस्या अपत्यान्यपीति बोधयितुमिष्यते तर्हि तोकैः सममिति वक्तव्यम्।

**अहो अलं श्लाघ्यतमं यदोः कुलम् (१, १०, २६)।**

अलमत्यर्थम्। तमपोक्तार्थत्वादलमिति शक्यमवक्तुम्।

**मरुधन्वमतिक्रम्य (१, १०, ३५)।**

समानौ मरुधन्वानावित्यमरवचनात्पर्यायवचनावेतौ। पर्यायवचनानामसहप्रयोग इति स्वभावतः सिद्धम् ।

**नित्यं निरीक्षमाणानां यद्यपि द्वारकौकसाम् ।**
**न वितृप्यन्ति हि दृशः ··· ··· (१, ११, २५)॥**

अत्र यच्छब्दो यस्मात्कारणादित्यर्थं उपात्तः, हिशब्दोपि तदर्थकः। तयोरन्यतरः शक्यो हातुम् ।

**स वा अद्यतनाद्राजन् परतः पञ्चमेऽहनि ।**
**कलेवरं हास्यति ··· ··· ··· (१, १३, ५६)।**

अत्र अद्यतनाद् इत्यत्र टचुला तद्धितेन नार्थः। परत इति चाप्यतिरिक्तः। अद्य (=इतः) पञ्चमेहनीत्यल्पाक्षरो न्यास एव निर्दूषणः श्रेयः।

**वारुणीं मदिरां पीत्वा (१, १५, २६) ।**

वारुणीति मदिरानामसु पठ्यते । पर्यायाणां च युगपत्प्रयोगो न। पर्यायेणार्थं ब्रुवन्तीति पर्यायवचनानीत्युच्यन्ते ।

**आहर्तास्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम् (१, १७, १५)।**

साङ्गदं केयूरभूषितम् । साङ्गदो भवतु मा वा भूद् भुजोच्छेदं करिष्यामीति प्रतिजानीते । तेनापुष्टार्थविशेषणमिदम्। आहर्तेत्यत्राङ्प्यस्थाने। केवलं हर्तेति वोच्येत अपहर्तेति वा ।

**वर्षपूगसहस्रान्ते तदण्डमुदकेशयम् (२, ५, ३४)।**

वर्षपूगानां सहस्रं तदन्ते। पूगशब्देन गडुभूतेन किम् । बहुत्वं तु सहस्रशब्देनैवोच्यते । किं ग्रन्थकृतश्छिद्यते यदि पूगशब्दं न प्रयुञ्जीत।

**पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः (२, ६, १८)।**

स्थितिपद इति षष्ठ्यन्तं पुंसो विशेषणं व्यर्थम्। स्थितयो लोकाः। तिष्ठन्ति जीवा आसु। ताः पादा इव पादा यस्य। पुंसः पादेषु सर्वभूतानि स्थितानीत्युक्तमेव। प्रकृतेन विशेषणेन किमतिरिक्तमभिधित्स्यते।

**प्रत्याह तं सुबहुवित् प्रीतात्मा श्रूयतामिति (३, १, ५)।**

बहुशब्दे सति सुशब्देन किमधिकमुच्यते ।

**हतं व्यकर्षद् व्यसुमोजसोर्व्याम् (३, ३, १)।**

हतस्य च व्यसोश्च को विशेषः। नेति चेदेकतरं शक्यं हातुम् ।

**संसारदुःखं बहिरुत्क्षिपन्ति (३, ५, ३८)।**

बहिरिति वा उदिति वा हेयम्। एकतरेणार्थगतेः।

**पराहृतान्तर्मनसः (३, ५, ४४)।**

अन्तःशब्देन नार्थः। नहि बहिर्मनः किंचिदस्ति यतो व्यतिरेकायान्तर् इत्युपादीयेत।

**यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः (३, ७, १०)।**

अमुष्येत्यधिकम्। एतदन्तरापि पूर्यत आकाङ्क्षा। किं च। विप्रकर्षस्याविवक्षायां सत्यामदसः प्रयोगः कमपि खिन्ते चेतः।

**अस्ति ह्यधस्तादिह किञ्चनैतद्।**
**अधिष्ठितं यत्र, सता नु भाव्यम् (३, ८, १८)।**

यत्रान्तेन वाक्येनोक्तोऽर्थः। सतेत्यादिना किमनुक्तमुच्यते। किमपि न। अनर्थको वाग्डम्बरः।

**कुर्वन्ति कामसुखलेशलवाय दीनाः (३, ९, ७)॥**

लवलेशौ पर्यायौ न युगपत् प्रयोगमर्हतः। कामं हिन्द्यामेष व्यवहारो न दोषभाक्।

**तावन्न संसृतिरसौ प्रतिसङ्क्रमेत (३, ९, ९)।**

अदसा नार्थः। न ह्येतदन्तरेणार्थो न पूर्यते।

**विश्वं समस्तं भगवन्विधेहि शम् (३, १३, ४५)।**

विश्वं समस्तमिति पर्यायौ। न हि विश्वमिति जगन्नामधेयमसर्वनाम। सावर्थ्यात् तात्पर्येण जगदाह। इदं विश्वमिति तु वाच्यम्।

**येऽनिमित्तनिमित्तेन धर्मेणाराधयन्हरिम् (३, १५, १४)।**

अनिमित्तं स्वप्रयोजनाभावो निमित्तं प्रवर्तकं यस्मिंस्तेन। निष्कारणेनेत्यर्थः। अहो वाग्डम्बरः। एतेन बत विद्यावन्तः परीक्ष्यन्ते।

**स्वर्हत्तमा ह्यपि हरेः प्रतिहारपाभ्याम् (३, १५, ३१)।**

सुशब्दोऽधिकः। तमपि सति नार्थोऽनेन। प्रतिहारप इत्यपि नूत्ना शब्दप्रक्लृप्तिः। द्वारि द्वाःस्थे प्रतीहार इति कोषान्नार्थ उत्तरपदेन।

**शुभ्रातपत्रशशिकेसरशीकराम्बुम् (३, १५, ३८)।**

शीकरो वातास्तवारिविप्रुषो भवन्तीत्यम्बुशब्दोऽतिरिक्तः शक्यः परिहर्तुम्।

**सतीं व्यादाय शृण्वन्तो लब्वीं गुर्वर्थगह्वरां**
**विगाह्यागाधगम्भीरां ( सरस्वतीम् ) ... ... (३, १६, १४) ।**

गुर्वर्थगह्वरामित्युक्तेऽगाधगम्भीरामिति विशेषणं नार्थवत् । किं तेनातिरिक्तमुच्यते यदर्थं तदुपादानं स्यात् ।

**तरन्ति ह्यञ्जसा मृत्युं निवृत्ता यदनुग्रहात् ।**
**स भवान् किंस्विदनुगृह्णीत यत्परैः (३, १६, १९) ॥**

नार्थो गडुभूतेन यच्छब्देन । नन्वयमितितच्छब्दयोरध्याहारं प्रयोजयति ।

**संस्थास्यतो यत्र च वा न तिष्ठते (३, २२, २०) ।**

चवोरेकतरं शक्यं हातुम् ।

**सर्वर्द्ध्युपचयोदर्कं (भवनम्) (३, २३, १३) ।**

उदर्क उत्तरोत्तराभिवृद्धिरिति विवरीतारः । ग्रद्येवमुदर्क इत्युपचयेन गतार्थः । न ह्युपचयस्तात्कालिकीं तत्कालस्थायिनीं वृद्धिमाहेति नियमः, उदर्कश्चानुवर्तमानं प्रकर्षम् ।

**तत्प्रादुर्भावसंयोगविद्योतितमना मुनिः (४, १, २३) ।**

संयोगः सन्निधिरिति कश्चित् । स च प्रादुर्भावेनैव गतार्थः । संयोगो यौगपद्यम् इत्यन्यः । तत्र चायमशक्त इत्यूरीकरणीयम् ।

**आज्ञप्त एवं कुपितेन मन्युना (४, ५, ५) ।**

अत्र कुपितेन (शङ्करेण) इति कर्तरि तृतीया वा प्रयुज्यतां मन्युनेति हेतौ तृतीया वा । उभयेन नार्थः ।

**उच्चाट्टहासस्तनयित्नुभिन्नदिक् (४, ५, १०) ।**

उच्चेन नार्थः । अट्टहास उच्च एव भवति नानुच्चः । अट्टशब्दोतिशयमाह ।

**पिङ्गैः पिशङ्गैर्मकरोदराननैः (४, ५, १३) ।**

कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलावित्यमरे समानार्थानि पठितानि । तेन पिङ्गैरिति वा वाच्यं पिशङ्गैरिति वा । नार्थ उभयेन ।

**नारदस्तदुपाकर्ण्य (४, ८, २५) ।**

उपेन नार्थः । उपेत्याकर्ण्येति नार्थः । स्वस्थाने स्थित एव नारदः समाधिबलेन तच्छृणोति ।

**यन्नित्यसम्बन्धनिषेवया (४, २१, ४०)।**

येषां नित्यया सेवयेत्यर्थः। तत्र सम्बन्धशब्दो निशब्दश्चोभावपि शक्यौ हातुम्। कश्चिदाह—सम्बन्धेन निष्कपटत्वेनेति। तन्निर्मूलम्।

**अन्तःपुरं परिविहारभुवश्च रम्याः (४, १२, १६)।**

परिविहार इत्यत्र परिणा नार्थः। इहैव च प्रयोगः।

**मौक्तिकैः कुसुमस्रग्भिः (४, २१, १)।**

स्रजः कौसुम्यः कुसुमविकारा एव भवन्ति। तस्मात् कुसुमानामिति विशेषणमपार्थम्।

**अर्थेन्द्रियार्थाभिध्यानं सर्वार्थापह्नवो नृणाम् (४, २२, ३३)।**

अर्थो धनम्। न हीन्द्रियार्थेभ्यो विषयेभ्यो धनं नाम किंचिद् व्यतिरिक्तमस्ति येन पृथङ्निर्देश उपपत्तिमान्स्यात्।

**सुजातरुचिराननम् (४, २४, ४५)।**

सुजातं रम्यं सुन्दरमित्यनर्थान्तरम्। यथा कालिदासे सुजातयोः पङ्कजकोषयोः श्रियम् इति।

**शोचन्विमुह्यन्नुपयाति कश्मलम् (५, १३, ७)।**

मुह्यति च कश्मलं याति चेत्येकोऽर्थः। मोघो वाचां प्रपञ्चः।

**देवदत्त उपाच्छिनत्ति (५, १४, २४)।**

आच्छिनत्तीत्येव दृष्टव्यवहारः। उपेन नार्थः। अन्यत्र उपाङौ सहचरितौ छिदिना युक्तौ न दृश्येते।

**ब्राह्मणकुलं समावसन् (५, १४, ३०)।**

नार्थः समा। व्यवहारविरोधात्, अर्थानभ्युच्चयाच्च।

**अभिव्यज्यमानरोमपुलककुलकः (५, १७, २)।**

रोमेत्यधिकम्। पुलको रोमाञ्चो भवति।

**अतिरभसतररंहसा (५, १७, ९)।**

रभसो वेगः। रभसो वेगहर्षयोरिति कोषात्। रंहोऽपि वेगः। न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्च्छति मारुतस्य इति कालिदासे दर्शनात्। पर्याया हि पर्यायेणार्थं ब्रुवन्ति न युगपत्।

**भगस्य कृत्स्नस्य परं परायणम् (५, १७, १८)।**

परं च तदयनं च परायणम्। परायणम् इत्युक्ते परम् इत्यधिकम्।

**प्रसन्न एषां स्विदुत स्वयं हरिः (५, १९, २१)।**

स्विदुतौ निरर्थकौ निपातौ छन्दःपूर्त्यर्थमाश्रितौ।

**मयेन मायाविना विनिर्मिताः पुरो**
**नानामणिप्रवरप्रवेकविरचित- (५, २४, ९)।**

प्रवरः सत्तमो भवति प्रवेकोपि। समानार्थकयोरेतयोः शक्यमेकतरं विहातुम्।

**भगवत्पुरुषै राजन् याम्याः प्रतिहतोद्यमाः।**
**पतिं विज्ञापयामासुर्यमं संयमनीपतिम्॥ (६, ३, ३)।**

नार्थः संयमनीपतिम् इति विशेषणेन। संयमनीति यमधानी भवति। नहि यमादन्यः कश्चित् संयमनीमीष्टे यो विशेषणेन व्यावर्त्येत।

**बध्नाति तन्त्यामिव दामभिर्गाः (६, ३, १३)।**

तन्तिर्दीर्घरज्जुः। दामेति खण्डरज्जुरिति कल्पना। दामानि खण्डरज्जवः संहतास्तन्तिं कुर्वन्तीति चेन्नार्थो दामग्रहणेन। तन्त्यैव तद्ग्रहात्।

**जातस्य मृत्युर्ध्रुव एव सर्वतः (६, १०, ३२)।**

एव इत्यनेन नार्थः। अस्तोभेन च कविकर्मणा भवितव्यम्।

**अथो हरे मे कुलिशेन वीर**
**हर्ता प्रमथ्यैव शिरो यदीह (६, ११, १८)।**

अथोयदिभ्यामेकार्थाभ्यां युगपत्प्रयुक्ताभ्यां नार्थः।

**यस्यात्मानुवशश्चेत्स्यात् सर्वे तद्वशगा इमे (६, १४, २०)।**

चेदिति नेह यद्यर्थे। अनर्थको निपातः।

**न ज्ञातिबन्धुर्न परो न च स्वः (६, १७, २२)।**

ज्ञातयो बन्धव इत्यनर्थान्तरम्। ततः सम्बन्धिनः श्यालादयो भिद्यन्ते।

**शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् (७, ६, ५)।**

पुरुषस्येदं पौरुषं मानुषम्। तदन्तरापि तदर्थगतेरधिकमिदं सुत्यजम्।

**विष्वग्भुजानीकशतम् (७, ८, २१)।**

अनीकं स्तोमः समूहः। विष्वक् सर्वतः प्रसृतानां भुजानां शतमित्युक्ते तेषां स्तोमरूपता स्वयमेयोक्ता भवतीति नार्थोऽनीकशब्देन।

**नोपैतुमशकन्मन्युसंरम्भं दुरासदम् (७, ९, १)।**

मन्युसंरम्भौ समानार्थौ। संरम्भः क्रोधो भवति मन्युरपि। प्रणिपात-प्रतीकारः संरम्भो हि महात्मनाम् इति तत्रार्थे रघुकारप्रयोगः। कश्चिदाह संरम्भ आवेश इति। तन्न। तत्र प्रयोगादर्शनात्।

**वार्ता भवन्त्युत न वाऽत्र तु दाम्भिकानाम् (७, ९, ४६)।**

उत नेति पर्याप्तौ विकल्पनिषेधावाख्यातुम्। वातू निरर्थकौ निपातौ।

**अथाग्रे ऋषयः कर्माणीहन्तेऽकर्महेतवे।**
**ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते॥ (८, १, १४)**

पूर्वार्द्धेनोक्त एवार्थ उत्तरार्द्धेन पुनरुच्यतेऽविकलमव्यक्ततरम्।

**निर्घोषैर्निर्झराम्भसाम् (८, २, ३)।**

अत्राम्भःशब्देन नार्थः। गिरितः पतद्वार्येव निर्झरो भवति। यथा करिणां घटना घटा भवति। ततः करिघटेति प्रयुञ्जानो बाढं व्यवहारावहेलया वाच्यो भवति।

**देवस्त्रीमज्जनामोदसौरभाम्बनिलैः युतः (८, २, ८)।**

आमोदसौरभयोरवान्तरभेदे सत्यपीह तयोरुभयोर्युगपत् प्रयोगो न युक्तः।

**काञ्चीकलापवलयहारनूपुरशोभिताम् (८, ३, ६)।**

कलापशब्दो बह्वर्थः। कलापो भूषणे बर्हे तूणीरे संहतेपि चेत्यमरः। कलापः संहतौ बर्हे काञ्च्यां भूषणतूणयोरित्यजयः। काञ्च्येव कलापो भूषण-मित्यन्वितार्थप्रकाशिका। यद्येवं नार्थः कलापेन। यथा वलयहारादयो भूषणानि तथा काञ्च्यपीति तत्र भूषणोपादानं नार्थस्योपस्कुरुते।

**स त्वं समीहितमदः स्थितिजन्मनाशम्।**
**भूतेहितं च जगतो भवबन्धमोक्षौ (८, १२, ११)।**

समीहितं चेष्टितमेव। भूतेहितमपि भूतानां चेष्टितम्। अनयोरेकतरं शक्यं त्यक्तुम्। भवबन्धमोक्षौ इत्यत्रापि भव इत्यधिकम्। भवः संसारः। प्रसिद्धेस्तस्यार्थस्य सुग्रहात्।

**गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि।**
**यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः (८, १६, ७)॥**

यदिशब्दोऽधिकः। फेरुराज इत्यत्र राजशब्दोऽपि।

**अप्यग्नयस्तु वेलायां न हुता हविषा सति (८, १६, ८)।**

हविषेत्यनेन नार्थः। हुता इति हविर्भिः प्रीणिता इत्याह। अग्निष्टोमेन जुहुयात् स्वर्गकाम इत्युच्यते न त्वग्निष्टोमेन हविर्भिरिति।

**वैरानुबन्ध एतावानामृत्योरिह देहिनाम् (८, १९, १३)।**

एतावान् इत्यपार्थकम्। अवधेराङोक्तत्वात्।

**मधुव्रतस्रग्वनमालया वृतः (८, २०, ३३)।**

मालाशब्दे सति किं स्रक्छब्देन। मधुव्रतानां स्रक् पङ्क्तिर्यस्यां सा मधुव्रतस्रग्वनमाला, तयेत्येवमर्थापयते कश्चिदधिक पदत्वं परिजिहीर्षमाणः। इदं च प्रस्मरति स्रक्छब्दो ग्रथिते माल्ये रूढः। न हि क्वचिन्मधुकराणां स्रक्छ्रूयते।

**उपेत्य भूमौ शिरसा महामना**
**ननाम मूर्ध्ना ··· ··· ··· (८, २२, १५)।**

नत्यर्थमेव भूमिं शिरसा गच्छति। ततो मूर्ध्ना नमनं किं नामातिरिक्तम्।

**भूयात्स ईशः परमो गुरोर्गुरुः (८, २४, ४८)।**

गुरोर्गुरुरित्युक्ते परम इत्यतिरिच्यतेऽनतिरिक्तार्थकः।

**पूजयामास वै शौरिर्बहुमानपुरःसरम् (१०, १, ५२)।**

इदमनर्थकम्। मानपूजनयोरैकार्थ्यात्।

**वल्गुस्मितापाङ्गविसर्गवीक्षितैः (१०, ६, ६)।**

विसर्गं इत्यधिकम्। अपाङ्गो नेत्रप्रान्तः, तेन वीक्षितैः। विसर्ग इति क्वोपयोगमायाति।

**कोषपरिच्छदासिवत् (१०, ६, ९)।**

परिच्छदः प्रच्छदः समुपच्छादः। स च कोष एव इति तस्मिन्सति किं तेन?

**निष्पीड्यमानाखिलजीवमर्मणि (१०, ६, ११)।**

जीवस्थानं भवेन्मर्मेत्यमराज्जीवशब्दोऽनर्थकः।

**यशोदा भयसम्भ्रान्तप्रेक्षणाक्षमभाषत (१०, ८, ३३)।**

किमनेन गडुभूतेन प्रेक्षणशब्देन? सम्भ्रमः कातर्यं हि नेत्रयोर्गुणो भवति न तु प्रेक्षणस्य।

**इत्थं द्विजा यादवदेवदत्तः**
**श्रुत्वा स्वरातुश्चरितं विचित्रम् (१०, १२, ४०)।**

स्वस्यात्मनो राता दाता, तस्य। सोऽयमर्थो यादवदेवदत्त इत्यनेनोक्तपूर्वः पुनरुच्यते इत्यधिकपदत्वं दोषः।

**ज्ञाने प्रयासमुदपास्य (१०, १४, ३)।**

उदस्येति वोच्यतामपास्येति वा। उदपयोरुभयोर्युगपत्प्रयोगेण नार्थः।

**अहोऽज्ञजनताज्ञता (१०, १४, २७)।**

नार्थः पूर्वेणाज्ञशब्देन।

**व्रजे विक्रीडतोरेवं गोपालच्छद्ममायया (१०, १८, २)।**

छद्ममाययोरेकतरं सुत्यजम्।

**निशामुखेषु खद्योतास्तमसा भान्ति न ग्रहाः (१०, २०, ६)।**

निशामुखेष्वित्यत्र मुखमित्यधिकम्। मुखमारम्भो भवति। तस्याविवक्षणात्।

**मेघागमोत्सवा हृष्टाः प्रत्यनन्दञ्छिखण्डिनः (१०, २०, २०)।**

अत्र एक एव हर्षलक्षणोऽर्थः शब्दभेदेन त्रिरुक्तः। भूयाञ्छब्दडम्बरः।

**भर्जिता क्वथिता धाना प्रायो बीजाय नेष्यते (१०, २२, २६)।**

धाना भृष्टयवे स्त्रिय इत्यमराद् भर्जिता क्वथितेति विशेषणद्वयमपार्थकम्। भर्जिता इत्यत्र णिजप्यधिकः। भृष्टा इत्येव सुप्रयुक्तं स्यात्। धाना इति बहुवचनं च व्यवहारानुसारि स्यात्।

**ऋतुभिर्नामनौनिभैः (१०, २५, ४)।**

नाममात्रेण नौसदृशैः। व्यक्तं निभशब्दोऽधिकः। नामशब्देनैव सादृश्यस्योक्तेः। ऋतवो नावो नौसदृशा अभिलप्यन्ते, न तु सोऽभिलापोऽर्थवान्भवतीति भावः।

**कृष्णे भिषिक्त एतानि सत्त्वानि कुरुनन्दन।**
**निर्वैराण्यभवंस्तात क्रूराण्यपि निसर्गतः (१०, २७, २७)।**

एतानीत्यनेन संनिहितान्येव सत्त्वानि शक्यानि परामर्ष्टुम्। न च तानि संनिहितानि श्रूयन्ते। व्यक्तं पादपूरणार्थं पदोपादानम्।

**स्पर्शोत्सवोत्पुलकिताङ्गरुहैर्विभासि (१०, ३०, १०)।**

उच्छब्देन नार्थः। पुलकाः संजाता अस्याः, सा पुलकिता। अङ्गरुहाणि तनूरुहाणि लोमानि।

**स्वमाययाऽऽत्मन् रचितैस्तदीक्षया (१०, ३८, ११)।**

स्वमायया रचितैरित्येतावत्युक्ते किमवशिष्यते यदीक्षया इत्युक्त्या गमयितुमिष्यते।

**रूपं दधानं श्रिय ईप्सितास्पदम् (१०, ३८, १४)।**

श्रिय ईप्सितमित्येवालं विवक्षितमर्थमर्पयितुम्। नार्थं आस्पदशब्देन।

**वयं त्विहावमुच्याथ ततो द्रक्ष्यामहे पुरीम्** (१०, ४१, १०)।

अथततः शब्दयोः शक्य एकतरो हातुम्।

**ददर्श तां स्फाटिकतुङ्गगोपुरद्वारां पुरीम्** (१०, ४१, २०)।

द्वारम् इति सुत्यजम्। गोपुरं हि नगरद्वारं भवति। द्वन्द्वेऽभ्युपगम्यमाने तु गृहद्वाराण्यपि स्फाटिकानि तुङ्गानीति प्रतीयेतार्थः। द्वन्द्वादौ श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत इति न्यायात्।

**विलोक्य वेगरभसं रिपुसैन्यस्य माधवौ** (१०, ५२, ७)।

रभसो वेगहर्षयोरिति कोषाद्वेगरभसौ पर्यायौ। एकतरः शक्यो हातुम्।

**एवं सम्पृष्टसम्प्रश्नः** (१०, ५२, ३६)।

सम्पृष्ट इत्येवालम्।

**भवानीं वन्दयाञ्चक्रुर्भवपत्नीं भवान्विताम्** (१०, ५३, ४५)।

भवपत्नीमित्यधिकम्। भवानीम् इत्येनन गतार्थत्वात्। भवानी भवस्य पत्नी भवति। पुंयोगे ङीष्, आनुगागमश्च। भवानीभवपत्न्योः समभिव्याहारं साहित्याचार्या दोषमुदाहरन्ति।

**भूयस्तस्मै प्रत्यर्पयत् प्रभुः** (१०, ५७, ४१)।

भूय इत्यधिकम्। तस्य प्रतिना गतार्थत्वात्।

**तस्य शम्भोः प्रसादेन किङ्करा इव तेऽमराः** (१०, ६२, ४)।

ते आराध्यत्वेन प्रसिद्धा इति कश्चित्। इन्द्रादयो देवाः प्रसिद्धा एव सर्वेषाम्। नहि ते तेशब्देन प्रसिद्धतराः क्रियन्ते। वस्तुतश्छन्दःपूर्त्यर्थं यत्र तत्रानपेक्षितं पदं प्रक्षिपति।

**दिवांशुभिस्तुमुलरवं बभौ रवेः** (१०, ७१, १७)।

दिवेत्यधिकम्। दिवैव भासते रविर्न नक्तम्।

**सुस्वागतं विबुधुरुत्स्मयवीक्षितेन** (१०, ७१, ३५)।

सु इत्यधिकम्। प्रागेव स्वागतशब्दे सुः पूर्वपदम्।

**सम्भृत्य सर्वसम्भारानाहरस्व महाक्रतुम्** (१०, ७२, ९)।

आहरणं हि सम्भारसमाहरणपूर्वकमनुष्ठानमाह। तेन सम्भारान् सम्भृत्येत्यतिरिक्तं रिक्तं वचः।

**शब्दः कोलाहलोप्यासीच्छिशुपाले हते महान्** (१०, ७४, ४४)।

शब्द इत्यधिकः शब्दः।

**याचित्वा चतुरो मुष्टीन् विप्रान् पृथुकतण्डुलान् (१०, ८०, १४)।**

तण्डुलशब्दोऽधिकः। तण्डुलविकारा एव पृथुका भवन्ति।

**दधार पादाववनिज्य तज्जलं**
**सवृन्द आशिरसा पुनाद्यदम्बु ह (१०, ८५, ३६)।**

अभिवति तज्जलम् इत्यनेन गतार्थम्। आवृत्तिपरीहाराय यदिति सर्वनाम प्रागेवास्ति।

**अग्निं विविक्षुः कृष्णेन प्रत्युक्तः प्रतिषेधता (१०, ८९, ४५)।**

प्रतिषेधता प्रत्युक्त इत्येकोऽर्थः। द्वे पदे। एकतरं शक्यं हातुम्।

**अण्डानि सुषुवे नीडे स्वपत्युः सन्निधौ सती (११, ७, ५७)।**

स्वशब्दः सुत्यजः। पतिशब्दस्य सम्बन्धिशब्दत्वात्। स्वशब्दमन्तरेणापि, स्वः पतिरेव गंस्यते। यथा मातरं नमति इत्यत्र या यस्य माता स तां नमतीति गम्यते।

**यथाऽनलः ... ... ... ...**
**बलेन दारुण्यधिमथ्यमानः (११, १२, १८)।**

अधिरधिकः। तदर्थस्य बलेनेत्यनेनोक्तत्वात्।

**नृपार्थिवात् (११, २३, ११)।**

नृणां पार्थिव इति विग्रहः। व्यर्थो नृशब्दः। पृथिव्या ईश्वरः पार्थिव इत्युच्यते। स च राजपर्यायः।

**असंयतं यस्य मनो विनश्यद्**
**दानादिभिश्चेदपरं किमेभिः (११, २३, ४७)।**

अपरम् इत्यनेन नार्थः।

**एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् (११, २९, २२)।**

अत्र तृतीयचरणोक्तोऽर्थस्तुरीयचरणेन पुनरुक्तः। न च विशेषः कश्चिन्निगदितः।

**काम एष नरेन्द्राणां मोघः स्याद् विदुषामपि।**
**येन फेनोपमे पिण्डे येऽतिविश्रम्भिता नृपाः॥ (१२, ३, २)**

नृपा इत्यधिकम्। ये इति सर्वनाम्नोक्तपूर्वाणां नरेन्द्राणां निर्देशस्य सौलभ्यात्।

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्याम् अधिकपदत्वनिरूपणो नाम पञ्चमोऽध्यायः॥

# षष्ठोऽध्यायः

## क्लिष्टान्वयः

दुःश्लिष्टानि क्लिष्टान्वयानि पदानि झटित्यर्थप्रतीतिं प्रतिबध्नन्ति, निरन्वयानि तु तानि वाक्यरूपमेव विघटयन्ति। अवान्तरवाक्यानि चापि तथा-जातीयकान्यर्थावगमं मन्थरयन्तीति नेष्टानि। इत्थम्भूतो दुरन्वयोऽनन्वयो वाऽत्र पुराणेऽविरलः। विस्तरभिया कियन्त्यश्चिद् दिश उपह्रियन्ते—

**पिबत भागवतं रसमालयम् (१, १, ३)।**

रसाश्रयमिति तु विवक्षति। आलय इति लीङ् श्लेषणे इत्यस्मादाङ्-पूर्वाद् घे प्रत्यये रूपम्। यथास्थिते सामानाधिकरण्यं दुरुपपादम्। श्रीधरस्त्वन्यथा-ऽर्थापयते—लयो मोक्षः। अभिविधावाङ्। मुक्तैरपि तत्पानस्येष्टत्वात् इति। तन्न। जननमरणादिदुःखान्मोक्षो लय इति नाभिधीयते, किन्तर्ह्यप्ययः। अपीता ब्रह्मणि लीनाः कथङ्कारं भागवतं रसं कामयेरन् रसयेरन्वेति विचारणीयम्। अपि च। भुवि गलितं तत्फलं त्वगष्ट्यादिरहितं रसरूपमेव, अत एव फलं रसमिति सामानाधिकरण्येनोक्तिरित्यभिमन्यते टीकाकारः। यद्येवं भुवि गलितस्य रजोवकीर्णत्वादपेयता स्यात् पिबतेति पुराणकृता प्ररोचना चासङ्गता स्यात्। रसाश्रयस्य फलस्य पानोक्तिः कथं घटेतेति चेत्, भवत्पक्षेपि फलस्यैव पानमुक्तं रसत्वं तु तत्रारोप इति यत्किञ्चिदेतत्।

**पुत्रेति तन्मयतया तरवोऽभिनेदुः (१, २, २)।**

पुत्रेत्यन्तं पूर्वार्द्धगतेन आजुहावेत्यनेनान्वेति तन्मयतया इत्यादि वाक्यं चानन्वितं तिष्ठति। तदेति वाक्योपक्रमेऽपेक्ष्यते। तथा सत्यपि तरवः किमभि-नेदुरिति न विज्ञायते। इष्यते च। भगवान् द्वैपायनः—**हे पुत्रेति यदाचुक्रोश तदैव शुकेन तन्मयतां गतास्तरवः प्रत्युत्तरमिति प्रतिध्वनयामासुरिति गम्येत न च यथास्थिते गम्यते। अनन्वयात्।**

**यद्येषोपरता देवी माया वैशारदी मतिः।**
**सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते॥ (१, ३, ३४)**

यदिशब्दो यदार्थे। यदा देवी देवनशीला वैशारदी ईश्वरीया मायोपरता भवति तदा मतिः सैव विद्यास्वरूपिणी भवतीत्यन्वयः। इत्थं

मतिरिति पृथक् पदं वाक्यम्। सम्पन्न एवेति विदुरिति च वाक्यद्वयम्। तत्र सम्पन्न इति ब्रह्मणि सम्पन्न इत्यर्थे। स्वे महिम्नि महीयत इति च वाक्यान्तरम्। अत्र पूर्वोक्तादर्थाद् व्यतिरिक्तो न कश्चिदर्थः। स्वे महिम्नि सम्पन्न इत्यन्वयश्चेद् महीयत इत्यनन्वितं तिष्ठति।

देव्यो ह्रिया परिदधुर्न सुतस्य चित्रम् (१, ४, ५)।

अत्र सुतस्येत्यनन्वितम्। सुतस्य पुरतो गच्छतो ह्रिया न परिदधुरिति चित्रमित्यन्वयः। एवं कथंचिदन्वयलाभेपि सुतस्येति षष्ठी साम्प्रतं न।

कुतः पुनः शश्वदभद्रमीश्वरे न चार्पितं यद्यप्यकारणम् (१, ५, १२)।

ईश्वरेऽनर्पितं शश्वदभद्रं (सत्त्वशुद्धेर्) अप्यकारणं यत्कर्म तत्पुनः कुतः (शोभेत) इति योजना। न चार्पितं कर्मेत्यत्र नञाऽसमासः कर्मोपसङ्ग्रहणीयश्चकारश्च वाक्यभेदं प्रयोजयतः। ईश्वरे चार्पितं कर्म नेत्यनिष्टान्वयं च। किं बहुनाऽनर्थकपदोपजना वाक्यभेददूषणाऽध्याहारवतीयं वाङ् न स्वदते वाग्योगविद्भ्यः।

यैः कोपितं ब्रह्मकुलं राजन्यैरकृतात्मभिः।
तत्कुलं प्रदहत्याशु सानुबन्धं शुचार्पितम् (१, ७, ४८)॥

अत्र पूर्वार्द्धे ब्रह्मकुलमित्युक्तं कर्म, उत्तरार्द्धे च तदेव ब्रह्मकुलं प्रदहनक्रियायां कर्तृतया वक्तुमिष्यते। (तत्कुलं तेषां राजन्यानां कुलमित्यनुक्तं कर्म)। तन्नोपपद्यते। सकृदुपात्तस्य ब्रह्मकुलस्य युगपच्छक्तिद्वयायोगात्। उक्तं च हरिणा—

शक्तिमात्रासमूहस्य विश्वस्यानेकधर्मणः।
सर्वदा सर्वथा भावात् क्वचित् किञ्चिद् विवक्ष्यते (वा०प० ३, ७, २)॥

किं च। शुचार्पितमिति ब्रह्मकुलं विशिनष्टि, सानुबन्धमिति च तत्कुलमित्यहो दुरन्वयः।

माया जवनिकाच्छन्नमज्ञाऽधोक्षजमव्ययम् (१, ८, १८)॥

अन्वयदुरूहत्वसम्पत्तये कृष्णविशेषणानां मध्येऽज्ञा (अहम्) इति प्रक्षिपति। इदं प्रथमचरणादौ पठितेन नमस्य इत्यनेनान्वेति।

गोप्याददे त्वयि कृतागसि दाम तावत् (१, ८, ३१)।

अयमाद्यश्चरणः। सा मा विमोहयति भीरपि यद्बिभेतीति च चतुर्थः। अत्र गतो यच्छब्दः प्रथमचरणगतं त्वयीति पदं परामृशति। यस्मात् त्वद् भीरपि बिभेति तस्मिंस्त्वयीत्यर्थात्। किमितोऽपि परोऽन्वयव्यवधिर्भवेत्।

नित्यं निरीक्षमाणानां यदपि द्वारकौकसाम् ।

न वितृप्यन्ति हि दृशः श्रियो धामाङ्गमच्युतम् (१, ११, २५)॥

श्रियो निवासो यस्योरः पानपात्रं मुखं दृशाम् ।

बाहवो लोकपालानां सारङ्गाणां पदाम्बुजम् (१, ११, २६)॥

निवास इति विधेयं पानपात्रं मुखं दृशाम् इत्यनेन व्यवहितविच्छिन्नं कथं पुनस्तृतीयतुर्यचरणयोर्बाहवो लोकपालानाम् इत्यादिना सन्धीयेत ।

ऊर्वक्षिबाहवो मह्यं स्फुरन्त्यङ्ग पुनः पुनः ।

वेपथुश्चापि हृदये आराद् दास्यन्ति विप्रियम् (१, १४, ११)॥

मह्यमित्यस्य प्रथमचरणगतस्य तुर्यचरणगतेन दास्यन्तीत्यनेनान्वयो दूरव्यवहितः ।

यो नो जुगोप वनमेत्य दुरन्तकृच्छ्राद्
दुर्वाससोऽरिविहितादयुताग्रभुग्यः ।
शाकान्नशिष्टमुपभुज्य यतस्त्रिलोकीं
तृप्तामंस्त सलिले विनिमग्नसङ्घः (१, १५, ११)॥

अत्यन्तं क्लिष्टोऽन्वयः । योऽरिविहिताद् दुर्वाससो (जायमानाद्) दुरन्तकृच्छ्राद् वनमेत्य शाकान्नं (च) उपभुज्य नो जुगोपेत्येकं वाक्यम् । योऽयुताग्रभुग् इति द्वितीयम् । यतः सलिले विनिमग्नसङ्घस्त्रिलोकीं तृप्ताममंस्तेति तृतीयम् । यत इति कारणं ब्रूते । यस्मात् कारणादित्यर्थः । यस्माज्जुगोप तस्मात्स सङ्घस्त्रिलोकीं तृप्ताममंस्तेति प्रतीतिं यन्न विवक्षितोऽर्थः । यस्माच्छाकान्नमुपबुभुजे तस्मादिति तु विवक्षितः । परं नायं यथास्थिताद् वाक्याल्लभ्यते । उपभुज्येति गुणीभूतक्रियया जुगोपेति प्रधानक्रियया विशेषणत्वेनान्वयात् । योऽयुताग्रभुग् इत्यत्र श्रूयमाणो यच्छब्दः सर्वनाम पूर्ववाक्यगतं पञ्चम्या निर्दिष्टं दुर्वासस इति पदं परामृशतीति कवेर्हृदयम् । यथास्थिते तु यो जुगोपेत्यादिवाक्येन सामर्थ्यलाभाय तत्र यच्छब्दोक्तं भगवन्तं कृष्णमेव प्रत्यवमृशेत्, न तु दुरन्तकृच्छ्रादित्यनेन संसृष्टं दुर्वासःपदार्थम् । वस्तुतो मूकस्य भाषेयमिति मूकाम्बा वा विजानीयात् किमेष भाषत इति मूको वा स्वयं संविद्यात् । किमपि वृत्तमतीतमाचिख्यासता कविना तथार्थो निबन्धनीयो यथा वृत्तमत्यन्तमज्ञातवतापि जनेनाविकलं विशदं च तज्ज्ञायेत । अज्ञातज्ञापनं ह्याख्यातुः कवेः प्रयोजनं न मोहस्यापादनम् ।

अथो विहायेममनुं च लोकं विमर्शितो हेयतया पुरस्तात् (१, १९, ५)।

अत्र प्रथमे चरणे लोकयोर्हानमुक्तम्। द्वितीये च पुरस्तादेव हेयतया विमर्शितः (निश्चितः) कश्चिदेक इत्युक्तमिति परस्परमनन्वयः।

क्षेत्रज्ञ एतां निनयेत्तमात्मनि
आत्मानमात्मन्यवरुध्य धीरः (२, २, १६)।

एतां (बुद्धिं) क्षेत्रज्ञ आत्मनि निनयेत् इति सुलभमन्वयं 'तम्' इति विघटयतीव। अयं हि तृतीयचरणगतमात्मानं प्रत्यवमृशति। सर्वनाम्नां संनिहितपरामर्शित्वं स्थितम्। अत्र तु दूरव्यवहितस्य आत्मानम् इत्यस्य परामर्श इति दुःखमावहति पुराणवाचकानाम्।

परं पदं वैष्णवमामनन्ति तद्
यन्नेति नेत्यतदुत्सिसृक्षवः।
विसृज्य दौरात्म्यमनन्यसौहृदा
हृदोपगुह्यार्हपदं पदे पदे (२, २, १८)॥

द्वितीयचरणादौ वर्तमानो यच्छब्दश्चतुर्थचरणेऽन्तः स्थितेन अर्हपदेनान्वेति। अहो दूरव्यवहितताऽन्वयस्य। हृदोपगुह्येत्यत्र तिङन्तं क्रियापदं नोक्तम्। तदध्याहार्यम्। आसत्त्यादिमान् पदोच्चयो वाक्यमिति विस्मरति मूलकारः कविः।

न यत्र शोको न जरा न मृत्यु-
र्नार्तिर्न चोद्वेग ऋते कुतश्चित्
यच्चित्ततोदः कृपयानिदंविदाम् (२, २, २७)।

अत्र कुतश्चिदिति पूर्वेण शोकादिनाऽन्वेति। कस्माच्चिदपि कारणादिति तदर्थः। ऋते इति च पञ्चम्या विपरिणतेन चित्ततोद इत्यनेन। अनिदंविदां कृपया (तत्र करुणया) यश्चित्ततोदो जायते तस्मादृत इत्यन्वयः। अत्र यच्छब्दो नपुंसकमन्वयविघटको विषसम्पृक्तान्नवत् त्याज्यः।

दन्तैर्विडम्बितककुब्जुष ऊढहासम्।
सद्योऽसुभिः सह विनेष्यति दारहर्तुः (२, ७, २५)॥

अत्र प्रथमे चरणे स्थितं विडम्बितककुब्जुष इति षष्ठ्यन्तं दारहर्तुरिति द्वितीयचरणान्ते वर्तमानम् इति च नाम्नाऽनिर्दिष्टस्य रावणस्य द्वे दूरव्यवहिते विशेषणे।

समाहुता भीष्मककन्यया ये
श्रियः सवर्णेन बुभूषयैषाम् ।
गान्धर्ववृत्त्या मिषतां स्वभागं
जह्रे पदं मूर्ध्नि दधत् सुपर्णः (३, ३, ३) ॥

समाहुता (समाहूताः) इति पाठान्तरम् । उभयमभ्युपेयम् । सवर्णः समानो वर्णः सारूप्यम् । हेतौ तृतीया । एषामित्यस्य स्थाने तेषाम् इति पाठ्यम् । यत्तदोर्नित्यः सम्बन्ध इति । गान्धर्ववृत्त्या बुभूषयेत्यन्वयः । तेषां मिषतामिति च । सुपर्ण इति स्वप्नोत्थितेन सहसोदीरितं पृथक्पदं सर्वथानन्वयि । यथा सुपर्णो गरुत्मान् देवतानां मूर्धनि पदं निधाय सुधां जहार तथेत्यध्याहारवशेनान्वयः प्रतिलभ्यते ।

गन्धेऽर्चिते तुलसिकाभरणेन तस्या
यस्मिंस्तपः सुमनसो बहु मानयन्ति (३, १५, १९) ॥

यस्मिन्वैकुण्ठे तुलसिकाभरणेन (भगवता) तुलसिकाया गन्धेऽर्चिते (तुलसिकाकुसुमान्याभरणीकुर्वता) सति सुमनसः (पूर्वोक्ता मन्दारादिपारिजातान्ताः) तस्याः तुलसिकाया एव तपो बहु मन्यन्त इत्यन्वयः ।

यत्संकुलं ... ... ... विमानैः ।
येषां बृहत्कटितटाः स्मितशोभिमुख्यः (स्त्रियः)
कृष्णात्मनां ... ... ... ... (३, १५, २०) ॥

येषां कृष्णात्मनाम् इत्येतावता न ज्ञायते केषामिति । न हि त इह निर्दिष्टपूर्वाः । यद्वैकुण्ठं विमानैः संकुलमिति पूर्ववाक्यम् । येषामित्यनेन हठाद्यत्सम्बन्धिनो विमानसम्बन्धिनो विमानारूढा उच्यन्ते । गत्यन्तरं नास्ति ।

श्रीरूपिणी क्वणयती चरणारविन्दं
लीलाम्बुजेन हरिसद्मनि मुक्तदोषा ।
संलक्ष्यते स्फटिककुड्य उपेतहेम्नि
संमार्जतीव यदनुग्रहणेऽन्ययत्नः (३, १५, २१) ॥

यदनुग्रहणेऽन्ययत्नः, सा रूपिणी श्रीः स्फटिककुड्य उपेतहेम्नि हरिसद्मनि मुक्तदोषा चरणारविन्दं क्वणयती लीलाम्बुजेन संमार्जतीव संलक्ष्यत इत्यन्वयः । अत्र लीलाम्बुजेन द्वितीयपादादौ स्थितेन करणभूतेन चतुर्थचरणादौ स्थितं संमार्जतीति क्रियापदेनान्वेतीति दूरान्वयः । तत्र पदपञ्चतयेन व्यवधिः । करणस्य क्रियापदस्य चैतावदन्तरं न सह्यते [illegible] । चतुर्थचरणांशो

यदनुग्रहणेऽन्ययत्न इति सर्वप्रथमं वाक्योपक्रमे न्यसनीयो भवति, अन्यथा यथास्थिते वाक्येऽवसिते पश्चादुपनतचिन्तो योजित इति प्रतीतिर्जायेत ।

तानेव ते मदनुसेवनयाऽवरुद्धान्
दृष्टिं प्रपश्य वितराम्यभयानशोकान् (३, २३, ७)।

ते त्वयाऽवरुद्धान्। ते (=तुभ्यम्) दृष्टिं वितरामीति पश्येत्यन्वयः। एतद्वाक्यघटका अवयवा मिथोऽसमर्था अध्याहारापेक्षाः ।

पश्यत्ययं धिषणया ननु सप्तवध्रिः
शारीरके दमशरीर्यपरः स्वदेहे ।
यत्सृष्टया··· ··· ··· ··· ··· ··· (३, ३१, १९)॥

अत्र पद्येऽयमित्यपर इत्यनेनान्वेति । धिषणयेति च सृष्टयेत्यनेन, दमशरीरीति चाहमित्यनेन तृतीयचरणगतेन । न जाने दूरव्यवहितेऽन्वये केनायं रमते कविः । अविकृतबुद्धिश्चेद् वक्ता स्याद् धिषणयेत्ययं पश्यतीत्यनेनान्वियात्, दमशरीरीति चायमपर इत्यनेन, विवक्षितं च विपरीयात् ।

किं वा शिवाख्यमशिवं न विदुस्त्वदन्ये
ब्रह्मादयस्तम् ··· ··· ··· ··· (४, ४, ६)।

किं त्वदन्ये ब्रह्मादयस्तं शिवाख्यमशिवं न (तत्त्वतः) विदुरिति वाक्यस्याव्यवहितानन्तरं ये (स्व-) मूर्धभिर्दधति तच्चरणावसृष्टमिति प्रतिनिर्देश-वाक्येन भवितुं युज्यते। इदं च अवकीर्य जटाः श्मशाने तन्माल्यभस्मनृकपाल्य-वसत् पिशाचैरिति दीर्घं वाक्यं व्यवधत्ते। इत्थं दूरव्यवहितोऽन्वयो विलम्बयत्यर्थ-प्रतीतिमिति प्रबन्धदूषणेष्वन्तर्गण्यते ।

तदाकर्ण्य प्रभुः प्राह तेजीयसि कृतागसि ।
क्षेमाय तत्र सा भूयान्न प्रायेण बुभूषताम् (४, ६, ४)॥

अत्यन्तं दुःश्लिष्टानि पदानि बह्वध्याहारापेक्षाणि । तेजीयसि महात्मनि कृतागसि अपि तत्र स्वमपराधं कृत्वा बुभूषतां भूतिमिच्छतां सा बुभूषा क्षेमाय न भूयान्न भवेदिति श्रीधरादयः। तैरेव संश्रितोऽपरः प्रकारो यथा—**तेजीयसि कृतागसि कृतमागो यस्य तादृशे सति क्षेमाय बुभूषतां जिजीविषतां तत्र क्षेमे सा बुभूषा जिजीविषा प्रायेण न भूयान्माभूदिति।** एवमन्वयाय विचेष्टमानाः श्रीधरादयो हास्या भवन्ति लोकस्य। अत्र ये तेजीयसि जने कृतागसस्त एव बुभूषन्तः, तत्र विभक्तिभेदः कथम् । सेति पृथक्पदं क्वान्वेति । तत्रेति गडुभूतं च क्वेति कः कथं विद्यात् । यत्सत्यं दुर्घटघटनापटीयसी वेदान्तिनां मायाऽपि नालमन्वयं घटयितुं किमङ्ग श्रीधरादयस्तज्ज्ञाः ।

**बैदूर्यकृतसोपाना वाप्य उत्पलमालिनीः ।**
**प्राप्तं किंपुरुषैर्दृष्ट्वा त आराद् ददृशुर्वटम् (४, ६, ३१) ।**

यत्र ··· वाप्यः सन्ति तत्किम्पुरुषैः प्राप्तं वनं दृष्ट्वेत्यन्वय इति श्रीधरः । अत्रोत्पलमालिनीरिति प्रथमया विपरिणमनीयं भवति । वापीरुत्पल-मलिनीः किम्पुरुषैः प्राप्तं वनं च दृष्ट्वेत्यन्वय इति गङ्गासहायः । एवमनुगमयन्स विपश्चिद् दर्शनपौर्वापर्यविपर्यासः प्रसज्यत इति न पश्यति । पूर्वं तावद् वनं पश्यन्ति ततस्तटस्था वापीरित्यनुक्रमोऽन्यथितो भवति ।

**न यस्य मायागुणचित्तवृत्तिभि-**
**र्निरीक्षतो ह्यण्वपि दृष्टिरज्यते ।**
**ईशे यथाऽजितमन्युरंहसां**
**कस्तं न मन्येत ··· ··· ··· (५, १७, १९) ॥**

अत्र ईशे इति क्वान्वेति । ईशेः कर्तर्यचि ईश इत्यदन्तं शब्दरूपम् । ततः सप्तमी । तदन्तम् इदमनन्वितं तिष्ठति । कर्तरि क्विप् वा स्यात् । तत ईशे इति चतुर्थ्यन्तम् । तदपि तथैवानन्वितम् । सम्पदादित्वाद् भावे क्विप् कल्प्यताम्, ततश्चतुर्थ्यामीशे इति रूपम् । ईशनायेत्यर्थः । ईशनाय विश्वमिदं निरीक्षतो निरीक्षमाणस्येत्येवंरूपोऽन्वयः कथं चिल्लभ्यते ।

**यत्सङ्गलब्धं निजवीर्यवैभवं**
**तीर्थं मुहुः संस्पृशतां हि मानसम् ।**
**हरत्यजोऽन्तःश्रुतिभिर्गतोऽङ्गजं**
**को वै न सेवेत मुकुन्दविक्रमम् (५, १८, ११) ॥**

यत्सङ्गलब्धं निजवीर्यवैभवं तीर्थं ( = तीर्थरूपम् ) मुकुन्दविक्रमं श्रुतिभिर्मुहुः संस्पृशतां मानसमङ्गजं च (मलम्) अन्तर्गतोऽजो हरिर्हरति को वै(तं)मुकुन्दविक्रमं न सेवेतेत्यन्वयः । तत्र यत्सङ्गलब्धं येषां भगवत्प्रियाणां सङ्गेन लब्धम् । तेषां किमित्याकाङ्क्षोत्तिष्ठति न च शाम्यति । सैषा तान् को विवेकी न सेवेतेत्यध्याहृत्य शमनीया । अङ्गजमित्यतोऽनन्तरं चकारः पूरणीयः । एवं सोपस्कारा व्यवहितान्वया कवेरियमुक्तिः कथंचित्संगमनीया । किं च । अजो मुकुन्दश्चैकोर्थः । तेन मुकुन्दवैभवम् इत्यनुक्त्वा तद्वैभवमिति सर्वनाम्ना निर्देशो युक्तः । अन्यथा व्यक्तिभेदो भासेत । स चानिष्टः ।

**यैर्जन्म लब्धं नृषु भारताजिरे**
**मुकुन्दसेवौपयिकं स्पृहा हि नः (५, १९, २१) ॥**

ते नः स्पृहा स्पृहाविषयः । गिरां पृथगर्थत्वेपि कर्मसङ्ग्रहं (संयोजकं)

सर्वनामादिनैवोपादत्ते । एष ह्यस्य निसर्गः । तेन ता निरन्वयास्तिष्ठन्ति, नाध्याहारमन्तराऽन्वितमर्थमर्पयन्ति ।

**तानक्षतान् स्वस्तिमतो निशाम्य (६, १०, २७)।**

अत्र पद्ये निशाम्य इत्यस्य शस्त्रास्त्रादिचरणत्रयेण व्यवहितं चतुर्थचरणान्ते स्थितं सैनिकान् इति कर्म। एवं दूरव्यवहितोऽन्वयो धीराणामपि त्रासनायालं किमुत त्रस्नूनाम् ।

**इमं तु पाशैर्वरुणस्य बद्ध्वा**
**निधेहि भीतो न पलायते यथा ।**
**बुद्धिश्च पुंसां वयसाऽऽर्यसेवया**
**यावद् गुरुर्भार्गव आगमिष्यति (७, ५, ५०) ॥**

अत्र बुद्धिश्च पुंसां वयसाऽऽर्यसेवयेति निरन्वयमध्याहारापेक्षं वाक्यं द्वितीयचरणस्य चतुर्थचरणेन सह सम्पत्स्यमानमिष्टमन्वयं प्रसभं विघटयति वाक्यार्थप्रतिपत्तिं च मन्थरयति ।

**यूयं नृलोके बत भूरिभागा**
**लोकं पुनाना मुनयोऽभियन्ति ।**
**येषां गृहानावसतीति साक्षाद्**
**गूढं परं ब्रह्म मनुष्यलिङ्गम् (७, १०, ४८) ॥**

मनुष्यलिङ्गं परं ब्रह्म येषां गृहानावसतीति मत्वा मुनयोपि येषां गृहानभियन्तीत्यावृत्त्या क्लिष्टोऽन्वयः ।

**विलोक्य तं देववरं त्रिलोक्या**
**भवाय देव्याऽभिमतं मुनीनाम् ।**
**आसीनमद्रावपवर्गहेतोः ··· ··· (८, ७, २०) ॥**

त्रिलोक्या भवाय देव्या (सह) अद्रौ आसीनं मुनीनामभिमतं (मुनीनाम्) अपवर्गहेतोस्तपो जुषाणं तं देववरं विलोक्येत्यन्वयः। मध्येवाक्यं प्रक्षिप्तं देव्या इति तृतीयान्तं पदं पदान्वयं विघटयति। कस्यापवर्ग इत्याकाङ्क्षापूर्त्तये मुनीनाम् इत्यावर्तनीयं भवति ।

**भिक्षवे सर्वमों कुर्वन्नालं कामेन चात्मने (८, १९, ४१)।**

आत्मने स्वस्मै कामेन (=भोगेन) अलं पर्याप्तो न भवतीति पदार्थः। कामेनेति तृतीयान्तं पदं क्वान्वेतीति न व्यक्तम्। आत्मनः कामस्य (भोगस्य) सिद्धये, आत्मनः कामायेति वा वक्तव्यं येन पदानि सुश्लिष्टानि स्युः ।

**कान्ताऽसमक्षमसताऽपहृता श्ववत्ते (९, १०, २२)।**

असता इति तृतीयान्तम्। 'ते' इति षष्ठी तृतीयार्थे। ते=त्वया। असता ते इति सामानाधिकरण्याभावादन्वयो न घटते।

**अध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः (९, १२, ४)।**

आत्मन्यधि इत्यध्यात्मम्। तत्कथमध्यगादित्यस्य कर्म स्यात्।

**कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः (९, १८, ४)।**

काव्यस्य वृषपर्वणश्च कन्याभ्यां कृतदार इति श्रीधरो व्याचष्टे। कन्याभ्यामित्यध्याहृतेऽपि न सुलभा पदयोजना। ययातिर्हि कन्ये (कर्मणी) दारान्कृतवान्न तु कन्याभ्यां करणभूताभ्यां तस्य दारकर्म। तथा सति तत्करणको दारान्तरपरिग्रहः प्रतीयेत।

**य आत्मनो दृश्यगुणेषु सन्निति व्यवस्यते (१०, ३, १८)।**

सन्नित्येकवचनान्तं न क्वचिदन्वेति। सन्त इति तु युज्यते। इहैव — विनाऽनुवादं न च तन्मनीषितं सम्यक् इति मध्यगं वाक्यखण्डं पूर्वोत्तरयोः सम्बन्धं विच्छिनत्ति। मनीषितं मीमांसितमित्यर्थेऽप्रसिद्धम्।

**... ... ... यथा वां बत पाप्मना।**
**पुरुषाद इवापत्यं बहवो हिंसिताः सुताः (१०, ४, १५)॥**

पुरुषादेनेवापत्यमित्येवं वक्तव्यम्। उपमानोपमेययोः सामानाधिकरण्यमिष्यते, अन्यथाऽन्वयो न स्यात्।

**पुंसस्त्रिवर्गो विहितः सुहृदोऽनुभावितः (१०, ५, २८)।**

यथास्थिते सर्वथा निरन्वयानि पदानि। सुहृद इति बहुवचनान्तम्। अनुभावित इत्येकवचनान्तम्। कथमन्वियाताम्। बह्वत्राध्याहार्यम्। (स एव) त्रिवर्गः पुंसः (शास्त्रेण) विहितः, (यः) सुहृदः (प्रति) अनुभावितः सम्पादितो भवतीत्यन्वितार्थः कथंचिल् लभ्यः।

**भूमौ निधाय तं गोपी विस्मिता भारपीडिता।**
**महापुरुषमादध्यौ जगतामास कर्मसु (१०, ७, १९)।**

जगतां भारपीडितेति दूरव्यवहितोऽन्वयः। कर्मसु चासेति वाक्यान्तरम्। कर्मोपसङ्ग्रहं चकारमपेक्षितमप्युपेक्षते।

**मर्कान्भोक्ष्यन् विभजति स चेन्नात्ति (१०, ८, २९)।**

स इत्येकवचनान्तेन कः परामृश्यते? प्रकृते मर्काः श्रूयन्ते। ते चेन्नाद्यु-

रिति वक्तव्यमन्वयलाभाय। मर्काणां मध्ये यः कश्चिदेक इत्यर्थं इति स इत्येकवचनसमाधित्सया प्रवृत्तस्य कस्यचिच्छ्रद्धाजडस्य यत्नः।

**आकल्पमार्कमर्हन्भगवन्नमस्ते (१०, १४, ४०)।**

आर्कमित्यर्हन्नित्यनेन योजयन्ति। आकल्पम् इति नम इत्यनेन। कथमियं योजनोपपत्तिमती भवतीति न निर्दिशन्ति। अर्कं यावद् या देवतास्ता अभिव्याप्य। तासां सर्वासामर्हन् पूज्य। आकल्पं नम इत्यनर्थकं वचः। नमस्कारस्य कल्पान्तस्थायिता न संभविनी।

**महन्मनःप्रख्यपयः सरस्वता**
**वातेन जुष्टं (वनम्) (१०, १५, ३)।**

महन्मनःप्रख्यपयः सरस्वतेत्यनन्वितम्। तच्छब्दप्रत्यवमृष्टं वनं विशेष्यम्। महतो मनः महन्मनः। तत्प्रख्यं तत्सदृशं पयो यत्र तानि सरांसि, तद्वता। केन। नेदं वनेनान्वेतुमर्हति। वनमिति द्वितीयान्तम्। न च जुष्टमित्यनेनान्वयः शक्यः कर्तुम्। मत्वर्थीयो हि तं वारयति। असति मतुपि महन्मनः प्रख्यपयः सरोभिरिति चेदुच्येत निर्बाधमन्वयः सम्पद्येत। वातेनेत्यस्य विशेषणमेतदिति कश्चित्। सर आश्रयत्वेन विद्यते यत्र तेन (वातेन) इति च सः। सरः सरांसि वा कथं वातस्याश्रय इति बुद्धेः पारंगतः स एव वेद।

**तत्र गत्वौदनं गोपा याचतास्मद्विसर्जिताः।**
**कीर्तयन्तो भगवत आर्यस्य मम चाभिधाम् (१०, २३, ४)।**

भगवतो याचतेत्यन्वयः। सोऽयं व्यवहितविप्रकृष्टः। अस्थाने प्रक्षिप्तं भगवत इति पदं कीर्तयन्त इत्यस्याभिधाम् इत्यनेन घटमानमन्वयं विघटयति।

**किं ते कृतं क्षिति तपो बत केशवाङ्घ्रि-**
**स्पर्शोत्सवोत्पुलकिताङ्गरुहैर् विभासि।**
**अप्यङ्घ्रिसम्भवः ... ... ... (१०, ३०, १०)॥**

अङ्घ्रिसम्भवः=अङ्घ्रेः सम्भवोऽस्य सः। कोऽयम्? कस्येदं विशेषणम्? कस्यापि न। इह पुलकिताङ्गरुहैर्विभासीत्युक्तम्। पुलकिताङ्गरुहैर्यद्विभानं स किमङ्घ्रि(स्पर्श)सम्भव इत्येवमुपस्कृत्यान्वयं मृगयते कश्चित्। विभानस्य नपुंसकस्य स इति पुंलिङ्गेन सर्वनाम्ना प्रतिनिर्देशेऽसाधुत्वं च नेक्षते।

**न नन्दसूनुः ... ... ...**
**नवप्रियः ... ... ... (१०, ३९, २२)।**

नवप्रिय इति चतुर्थचरणान्ते स्थितं नन्दसूनुरित्यनेनान्वेति। मध्ये

वर्तमानेन विहाय गेहान् स्वजनान्सुतान्पतींस्तद्दास्यमद्धोपगता इति पृथगर्थेन दीर्घेण वाक्येन विच्छिद्यते ।

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः ।
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः (१०, ४७, ६०) ।

अत्र चतुर्थे चरणे कुतोऽन्यासामिति वक्तुमुचितम् । अन्यथाऽन्वयो दुर्लभः ।

तवेयं विषमा बुद्धिः सर्वभूतेषु दुर्हृदाम् ।
यन्मन्यसे सदाभद्रं सुहृदां भद्रमज्ञवत् (१०, ५४, ४२) ॥

सर्वभूतेषु दुर्हृदां (=द्रोहवतां) सुहृदां (=बन्धूनां) यद् भद्रं (वपनरूपं दण्डं) तदभद्रं मन्यसेऽज्ञवदित्यन्वयः । अहो व्यवहितविप्रकृष्टान्यन्वयभाञ्जि पदानि । विश्लिष्टपदा वागस्य रुचेर्विषय इत्यत्र किन्नु कारणं स्यात् ?

जन्मादयस्तु देहस्य विक्रिया नात्मनः क्वचित् ।
कलानामिव नैवेन्दोर्मृतिर्ह्यस्य कुहूरिव (१०, ५४, ४७) ॥

कलानामिव कुहूरिवेत्युभयत्र इवशब्दो बुद्धिव्यामोहायैवेति सुपरिहरः । कुहूरिवेत्यनन्वितम् । मृतिरस्य कुह्वामिति वक्तव्यमन्वयो यथा स्यात् ।

तत्र राजन्यकन्यानां ... ... ...
भौमाहृतानां विक्रम्य राजभ्यः ... (१०, ५९, ३३) ।

यथास्थिते विक्रम्येत्यनन्वितम् । कर्तुरश्रवणात् । भौमेन विक्रम्य राजभ्य आहृतानाम् इत्येवं व्यासोक्त्याऽन्वयप्रतिलम्भो भवति, नान्यथा ।

अलं यदूनां नरदेवलाञ्छनै-
र्दातुः प्रतीपैः फणिनामिवामृतम् (१०, ६८, २७) ।

दातुः प्रतीपैः प्रतिकूलैः (दुःखाकरैः) नरदेवलाञ्छनैः (राजलक्ष्मभिश्छत्र-चामरादिभिः) अलम् (नार्थः), फणिनाममृतेनेवेत्यन्वयः सुघटः । यथास्थिते तु तृतीयान्तमुपमेयं प्रथमान्तेनोपमेयेन कथमन्वियात् ।

यद्येतद् ब्रह्महत्यायाः पावनं ...
चरिष्यति भवाँल्लोकसङ्ग्रहोऽनन्यचोदितः (१०, ७८, ३२) ।

यदि अनन्यचोदितो भवानेतद्ब्रह्महत्यायाः पावनं चरिष्यति तदा लोकसङ्ग्रहो भविष्यतीत्यन्वयः । उत्तरवाक्ये तदेत्यस्य परीहाराल्लोकसङ्ग्रह इत्यस्य चास्थाने निवेशादन्वयक्लेशः प्रसजति ।

**युवयोः स्म पित्रोर्न्यस्तावूषतुः ...**
**पक्ष्म ह यद्वदक्ष्णोः (१०, ८२, ३९)।**

पक्ष्म यद्वदक्ष्णोरित्येतत् क्वापि नान्वेति। पक्ष्माणि यथाऽक्ष्णो रक्षकाणि भवन्ति तद्वद् इति सोपस्कारं व्याख्यानेपि नान्वयो घटते। उत्थिताकाङ्क्षाया अनुपशमात्। पितरौ पक्ष्मस्थानीयौ। तौ रामकृष्णावक्षिभूतौ रिरक्षिषितौ। उपमानोपमेययोर्विभक्तिभेदोऽन्वयाभावाय कल्पते।

**त्वां सेवतां सुरकृता बहवोऽन्तरायाः**
**स्वौको विलङ्घ्य परमं व्रजतां पदं ते।**
**नान्यस्य बर्हिषि बलीन् ददतः स्वभागान्**
**धत्ते पदं, त्वमविता यदि, विघ्नमूर्ध्नि (११, ४, १०)॥**

धत्ते पदम् इत्यत्र कः कर्ता। त्वत्सेवका एव विघ्नमूर्ध्नि पदं दधति, त्वं चेदवितासीति विवक्षति। तेन धत्ते इत्येकवचनान्तं न क्वाप्यन्वेति। पूर्वापर-सम्बन्धमनालोच्यैव स्वैरं पदानि निक्षिपति। एषा ह्यस्य कवेः शैली।

**अधीयन्त व्यासशिष्यात्संहितां मत्पितुर्मुखात् (१२, ७, ६)।**

इयं सूतोक्तिः। व्यासशिष्यात् मत्पितुरिति पञ्चम्यन्ते पदे। मुखादिति षष्ठ्यन्तमपेक्षते। तच्च न श्रूयते। तेनेदमनन्वितं तिष्ठति।

**कविः कनीयान् विषयेषु निःस्पृहो**
**विसृज्य राज्यं सह बन्धुभिर्वनम्।**
**निवेश्य चित्ते पुरुषं स्वरोचिषं**
**विवेश कैशोरवयाः परं गतः॥**

अत्र कविर्वनं गत इत्यन्वयः कृच्छ्रलभ्यः। गत इति परमित्यनेनानुयन्भाति। स्वरोचिषं पुरुषं चित्ते निवेश्य परं विवेशेत्यसंगतमिव भासते। स्वरोचिषि पुरुषे निविष्टचित्तः परस्मिंस्तस्मिन्प्रविष्ट इति किमतिरिक्तमुक्तं परं विवेशेत्यनेन॥

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्यां विलष्टान्वयनिरूपणो नाम षष्ठोऽध्यायः।

## सप्तमोऽध्यायः

# अपाणिनीयाः प्रयोगाः

पुराणान्तरेषु यथाऽपाणिनीयाः प्रयोगाः प्रथन्ते तथात्रापि । इदमस्य तैः साधर्म्यम् । अन्यत्र ते प्रवाहपतिता अकामतः कृताः, अत्र तु कामतः प्रकल्पिता इति तैरस्य वैधर्म्यम् । तत्र कांश्चिदेवोत्कटानसोढव्यानपप्रयोगानुदाहरामः—

**पुत्रेति तन्मयतया तरवोऽभिनेदुः (१, २, २) ।**

(हे)पुत्रेति । अत्र दूराद्धूते चेति शास्त्रेण प्लुते कृते प्लुतप्रगृह्या अचि नित्यम् इति प्रकृतिभावेन भाव्यम् । स न कृत इति दोषः ।

**धर्मस्य ह्यापवर्ग्यस्य (१, २, ९) ।**

अपवर्ग एवापवर्गः । स्वार्थेऽण् । आपवर्गाय हित आपवर्ग्यः । उगवादिभ्यो यत् (५, १, २) इति व्युत्पत्तिरिति कश्चित् । सोऽयं विपश्चिन्न पश्यति स्वार्थिकाणन्त आपवर्गशब्दस्तावन्नास्ति । न ह्यसतो व्युत्पादनं युज्यते । सूत्रे गवादिरित्याकृतिगणो न । तेन प्रकृते यदपि दुर्लभः ।

**श्रियैश्वर्यप्रजेप्सवः (१, २, २७) ।**

श्रियैश्वर्येत्यादावियङ् दुर्लभः । सुब्लुकि परतोऽजादिप्रत्ययाभावात् । श्रियेति सहार्थे तृतीयेति हठात् पृथक् पदं कल्पयन्तः केचिच्छ्रियः प्रसक्तमप्राधान्यं न पश्यन्ति । द्वन्द्वे तु श्र्यादयः सर्वे समं प्रधानाः । किं च । तथा सति ऐश्वर्य-प्रजाभ्यां समासान्तर्भूताभ्यामीप्साकर्मभूताभ्यां साहचर्यं न सिध्यतीति गण्डस्योपरि पिटका संवर्तते ।

**धान्वन्तरं द्वादशमं त्रयोदशममेव च (१, ३, १७) ।**

**अत्र नान्तादसङ्ख्यादेर्मट् (पा० ५, २, ४९) इति शास्त्रातिक्रमः कामतः** कृतः । द्वादशत्रयोदशादयो ह्याबालं प्रसिद्धाः । कथमस्य महाकवेरप्रसिद्धाः ।

**इति ब्रुवाणं संस्तूय (१, ४, १) ।**

पिति कृति तुकि संस्तुत्येत्येव शब्द इति पाणिनीयाः ।

**युवैषतोत्स्रष्टुमहो सहासुभिः (१, ४, ११) ।**

ऐच्छदिति वक्तव्य ऐषतेत्यपाणिनीयम् । नैतद् एषृ गतावित्यस्य रूपम् । अर्थासङ्गतेः । शिति प्रत्यय इषेरिच्छादेशं न न जानाति । वाचि स्वातन्त्र्यं स्वस्य प्रख्यापयितुं तन्न करोति ।

**वैशम्पायन एवैको निष्णातो यजुषामुत (१, ४, २१) ।**

वैषयिकेऽधिकरणे सप्तमी प्रयोगमर्हति । शैषिकी षष्ठी तु नितान्तमसाम्प्रतम् ।

**स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा (१, ४, २२) ।**

गोचर इति घप्रत्ययान्तो नित्यं पुमान् । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति परवल्लिङ्गतया त्रयीति स्त्रियामपि विशेष्ये श्रुतिगोचर इति पुमानेव साधुः ।

**तथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः (१, ४, ३०) ।**

देहे भवो दैह्यः । रूपं तु न सिध्यति । यत् केन ? शरीरावयवाच्चेति चेन्न । देहः शरीरं भवति न तु शरीरावयवः । यति सति वृद्धिरपि दुर्लभा ।

**ब्रह्मवर्चस्यसत्तमः (१, ४, ३०) ।**

ब्रह्मवर्चसे साधुर्ब्रह्मवर्चस्य इति कश्चित् । तत्र साधुः (४,४,९८) इत्यनेन यदिति च सः । तन्न । तत्र साधुरिति प्रवीणो योग्यो वा गृह्यते । स चार्थो नेह घटते ।

**को वार्थ आप्तोऽभजतां स्वधर्मतः (१, ५, १७) ।**

**न लोकाव्ययनिष्ठाखलर्थतृनाम्** (पा० २, ३, ६९) इति शास्त्रं क्तेन योगे कृद्योगलक्षणां षष्ठीं प्रतिषेधति । अयं तु तां प्रतिप्रसौति नव्य इव शाब्दिकः । इह पुराणे इत्थम्भूता निषिद्धा षष्ठी यत्र तत्र बहुलं दृश्यते । काश्चिदेव तु दिश उदाह्रियन्ते—**स्वायम्भुव कया वृत्त्या वर्तितं ते परं वयः** (१, ६, ३) । त्वयेत्यस्य स्थाने 'ते' इति प्रयुङ्क्ते । निषेधं च न गणयति । **बह्व्यो मेऽक्षौहिणीर्हताः** (१, ८, ४८) । मयेति वक्तव्ये 'मे' इति प्रयुङ्क्ते । **कया वृत्त्या वर्तितं वः** (१, १३, ९) । वो युष्माभिरित्यर्थे । द्वितीयाचतुर्थीषष्ठीनामेव बहुवचने व इत्यादेशो विधीयते । **अहो बतांहो महदद्य ते कृतम्** (१, १८, ४१) । **आसादितस्ते मदनुग्रहो यत्** (३,४,१२) । **क एव भवतां म इहोपहूतः** (४,१,२७) । **वधो यदुपदेवानामारब्धस्तेऽकृतैनसाम्** (४, ११, ८) । **धर्म आचरितः पुंसाम्** (४, १४, १५) । **यन्नः सुतप्तं तप एतदीश** (४, ३०, ४०) । **तद् गृहेषु प्रसक्तानां प्रायशः क्षपितं प्रभो** (४,३१,६) । **यूयं मे प्रत्युदाहृताः** (६, १०, ७) । **एष मे बह्वसाधूक्तो बधोपायाश्च निर्मिताः** (७, ५, ४५) । **यद्युत्तमश्लोक**

भवान्ममेरितं वचः (८, २२, २)। यस्येरिता साङ्ख्यमयी दृढेह नौः (९, ८, १४)। यस्येरिता=येन प्रेरिता । युवयोः सुरलिङ्गिनोः किं व्युत्पादितं हृच्युदरभेदि भयं यतोऽस्य । मादृशो वां वृतः सुतः ( १०, ३, ३८ ) । नागानां प्राङ् निरूपितो (बलिः) (१०, १७, २)। दिष्टया ते निहतो दैत्यः (१०,-३७, १४) । किं ते दृष्टमिवाद्भुतम् (१०, ४१, ३)। शौरेः सप्तदशाहं वै संयुगानि पराजितः (१०, ५४, १३) । शौरिणेति वक्तव्ये। सनाथास्ते वृता वयम् (१०, ५९, ९)। यन्नो दृष्टः कुमेधसाम् (१०, ५८, ११)। तेन वयं जितास्ते (१०, ६०, ५६)। लोकं जिघृक्षद् रुद्धं मे (यादवकुलम्) (११, ६, २९)। पुंसामुपासितास्तात यथाकामं दुहन्ति हि (११, १९, ३५)। वृथात्मा मेऽनुतापितः (११, २३, १४) । एतावता सम्यङ् निर्दशितं भवति बुद्धिपूर्वं कृतोऽयं शास्त्रातिक्रमो न घुणोत्कीर्णाक्षरमिव यादृच्छिकः।

न लभ्यते यद् भ्रमतामुपर्यधः (१, ५, १८)।

अत्रानुक्ते कर्तरि शास्त्रशिष्टां तृतीयामप्रयुज्य षष्ठीं प्रयुङ्क्ते । तत्कस्य हेतोः ।

इत्थं शरत्प्रावृषिकावृतू हरेर्विशृण्वतो मेऽनुसवं
यशोऽमलम् (१, ५, २८)।

प्रावृषिक इत्यत्र स्वार्थे ठप् कृतः। आचार्यस्तु तत्र जात इत्यर्थे प्रावृषष्ठप् (४, ३, २६) इति ठपमनुशास्ति ।

भिक्षुभिर्विप्रवसिते विज्ञानादेष्टृभिस्तव (१, ६, २)।

विप्रवसित इत्यपभ्रंशः। विप्रोषित इति तु संस्कृतम्। भावेत्र क्तः। भिक्षुभिर्विप्रवासे कृते सतीत्यर्थः । भिक्षुषु विप्रोषितेषु विज्ञानादेष्टृभिरित्येवं भावलक्षणया सप्तम्यैषोऽर्थो वक्तव्यः।

मरीचिमिश्रा ऋषयः प्राणेभ्योहं च जज्ञिरे (१, ६, ३१)।

अस्मद्युत्तम इत्युत्तमपुरुष एव न्याय्यः।

अपाण्डवमिदं कर्तुं द्रौणेरस्त्रमबुध्यत (१, ८, ११)।

समानकर्तृकतायां तुमुनमनुशास्ति शास्त्रकारः। अत्र तु भिन्नकर्तृकत्वे तुमुन्नाश्रितः। स दोषः।

अपरे वसुदेवस्य देवक्यां याचितोऽभ्यगात् (१, ८, ३३)।
अजस्त्वमस्य क्षेमाय ... ... ... ... ...



युष्मद्युपपदे प्रथमपुरुषप्रयोगः । अहो साहसम्!

**सर्वधर्मविवित्सया (१, ९, १)।**

विविदिषयेति तु पाणिनीया रूपमिच्छन्ति। विन्दते रूपमिति कल्पनाऽगतिकस्य गतिः।

**शिष्यैरुपेता आजग्मुः कश्यपाङ्गिरसादयः (१, ९, ८)।**

अङ्गिर आदय इति तु वाच्यमवाच्यतायै।

**तस्यानुविहितोऽनाथा नाथ पाहि प्रजाः प्रभो (१, ९, १७)।**

हि गतौ प्राप्तौ च। ततः कर्तरि क्त इत्यन्वितार्थः। हिनोतेरनुविपूर्वस्य प्रयोग एव नास्तीति लक्षणैकचक्षुष्कस्य लक्ष्यदर्शनं नास्ति। दधातेः कर्तरि क्तो दुर्लभ इति टीकाकृतः क्लिष्टा कल्पना।

**तस्मादिदं दैवतन्त्रं व्यवस्य (१, ९, १७)।**

व्यवसायेति तु पाणिनीयाः। व्यवस्येत्यवपूर्वस्य षो अन्तकर्मणि इत्यस्य ल्यपि रूपं कल्पयता प्राथमिकवदाचरितम्।

**अपृच्छद् विविधान्धर्मानृषीणां चानुशृण्वताम् (१, ९, २५)।**

अनादराधिक्येऽसत्यस्थाने भावलक्षणा षष्ठी। सेयमिह पुराणे न विरला। अल्पा उदाहृतयः समुपन्यस्यन्ते स्थालीपुलाकन्यायेन—**मिषतो दशमासस्य तत्रैवान्तर्दधे हरिः (१, १२, ११)। प्रतिजग्मुः सुरेश्वराः … दम्पत्योर्मिषतोस्तयोः (४, १, ३२)। बालस्य पश्यतो धाम स्वमगाद् गरुडध्वजः (४, ९, २६)। शृण्वतामेव चैतेषामाभाष्येदमुवाच ह (१०, ७२, २)। पश्यतां सर्वभूतानामुल्मुकेव भुवि खाच्च्युता (१०, ७४, ४५)। खमुत्पपात राजेन्द्र साश्वध्वज उदीक्षतः (=उदीक्षमाणस्य सारथेः) (११, ३०, ४४)।**

**धृतरश्मनि तच्छ्रियेक्षणीये (१, ९, ३९)।**

धृता रश्मयो येन स धृतरश्मिः। इनिस्तु दुर्लभः। कश्चिदिनेरार्षत्वं कल्पयति। सामान्ये नपुंसकं वोत्प्रेक्षते। एवमुत्प्रेक्षमाणो वस्तुतः सामान्ये नपुंसकस्य विषयं नाञ्जसा वेद।

**प्रकृतिमगन् किल यस्य गोपवध्वः (१, ९, ४०)।**

अगन्नित्यपभ्रष्टम्। अगमन्निति तु संस्कृतम्।

**हत्वा स्वरिक्थस्पृधः (१, १०, १)।**

स्वरिक्थार्थं स्पृत् सङ्ग्रामो येषां ते स्वरिक्थस्पृधः। रूपं तु न सिध्यति। स्पर्धतेः सम्प्रसारणं दुर्लभम्।

**स्वजीवमायां प्रकृतिं सिसृक्षतीम् (१, १०, २२)।**

शपि नित्येन नुमा सिसृक्षन्तीम् इत्येव रूपमिष्टम्।

**निर्जितमातरिश्वनः (१, १०, २३)।**

प्रथमाबहुवचनेऽनिष्टं रूपम्।

**विलज्जतीनां भृगुवर्य वैक्लवात् (१, ११, ३२)।**

विक्लवस्य भावो वैक्लव्यम्। गुणवचनब्राह्मणादिभ्य इति ष्यञि रूपमिष्यते। अणोऽञो वा प्राप्तिरेव नास्ति।

**आत्मौपम्येन मनुजं व्यापृण्वानं यतोऽबुधः (१, ११, ३७)।**

पृङ् व्यायामे तुदादिः, न तु स्वादिः। अतः श्नुविकरणस्याप्रसङ्गः। हठात् साधुत्वं सम्पिपादयिषन् कश्चिदाह—**पृ प्रीतौ स्वादिः**। तङ्ङादेशः शानच्चार्षः। धातूनामनेकार्थत्वाद् व्यायामोऽर्थ इति। बुद्धयः कुब्जगामिन्य इति वा श्रद्धाजाड्यं वा तथा प्रवृत्तौ हेतुः।

**किं ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विजाः (१, १२, ६)।**

सुरैरपि स्पृह्या इत्यर्थः। रूपं तु न सिध्यति। सिध्यतु मा वा सिधत्। तदेवास्य व्यवहार्यं यदस्य मनसः प्रियम्।

**स्फुरत्पुरटमौलिनम् (१, १२, ८)।**

स्फुरतः पुरटस्य (=स्वर्णस्य) मौलिर्मुकुटं यस्येति बहुव्रीहिः। इनिस्तु दुर्लभः।

**शास्ता चोत्पथगामिनाम् (१, १२, २६)।**

शासु अनुशिष्टौ। उदात्तः। तेन तृचि शासितेत्येव संस्कारवद् रूपम्।

**गावल्गणे क्व नस्तातो वृद्धो हीनश्च नेत्रयोः (१, १३, ३१)।**

नेत्राभ्याम् इति तूचितम्। अनुक्ते कर्तरि तृतीया। क्तेन योगे कृद्योगलक्षणायाः षष्ठ्या निषेधात्।

**स संयुनक्ति भूतानि स एव वियुनक्ति च (१, १३, ४०)।**

**प्रोपाभ्यां युजेरयज्ञपात्रेषु (१, ३, ६४)**, स्वराद्यन्तोपसर्गादिति शास्त्राभ्यां संयुनक्तीति साधु, वियुनक्तीति चासाधु।

**अन्तरोऽनन्तरो भाति पश्य तं माययोरुधा (१, १३, ४७)।**

उरुशब्दप्रियोऽयं कविः। प्रियत्वे उरुक्रम इति विष्णोर्विशेषण उरुः पूर्वपदमिति हेतुः। बहुत्वे वैपुल्येऽन्यत्र चोरुशब्दं प्रयुङ्क्ते प्रयोगस्यातृप्यन्। अत्रोरुशब्दाद् धाप्रत्ययः कृतः। न चोरुशब्दः संख्या। संख्याया विधार्थे धा इति संख्याप्रकृतेर्धाविधिः।

**विदुरस्तु तदाश्चर्यं निशाम्य कुरुनन्दन।**
**हर्षशोकयुतस्तस्माद् गन्ता तीर्थनिषेवकः (१, १३, ५८)॥**

तीर्थनिषेवक इत्यत्र भविष्यदर्थे ण्वुल्। अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठ्यां निषिद्धायां षष्ठीसमासः सुतरां निषिद्धस्तिष्ठति।

**कालस्य च गतिं रौद्राम् (१, १४, ३)।**

अणि ङीपा भाव्यम्। रौद्रीम् इत्येव शब्दः।

**ऊर्वक्षबाहवो मह्यं स्फुरन्त्यङ्ग पुनः पुनः (१, १४, ११)।**

प्राण्यवयवाद् द्वन्द्वाद् बहुवचनं दुष्यति। मह्यमित्यस्थाने चतुर्थी।

**न पिबन्ति स्तनं वत्सा न दुह्यन्ति च मातरः (१, १४, १९)।**

कर्मकर्तरि दुहत इत्येव साधु। न दुहस्नुहनमां यक्चिणौ इति यगभावः। मत्या वाचो वैकृतं कुरुते मोदते च। इदमस्य शीलम्।

**क्रीडन्ति परमानन्दं महापौरुषिका इव (१, १४, ३६)।**

महापौरुषिका विष्णुपार्षदाः। रूपं तु न सिध्यति। ठकि उत्तरपदवृद्धिः कथम्? ठनि तु वृद्ध्यभाव एव प्राप्नोति।

**एको रथेन ततरेऽहमतीर्यसत्त्वम् (१, १५, १४)।**

अत्रातीर्यमिति च्युतसंस्कृतिकम्। अतार्यमित्येव संस्कारवच्छब्दरूपम्।

**मां श्रान्तवाहमरयो रथिनो भुविष्ठम् (१, १५, १७)।**

स्थे च भाषायाम् इति सप्तम्या अलुकं निषेधति। षत्वं च न प्राप्नोति। दोषपरिहाराय भूमिष्ठमिति किमिति न प्रयुङ्क्ते? छन्दो भज्यत इति।

**सौत्ये वृतः कुमतिनाऽऽत्मद ईश्वरो मे (१, १५, १७)।**

'मे' इति तृतीयार्थे षष्ठ्याः प्रयोगः, अन्यथा कुमतिना सामानाधिकरण्यं न स्यात्। आचार्यस्तु 'मे' इति अस्मदस्तृतीयैकवचनस्यादेशं न शास्ति।

**संजल्पितानि नरदेव हृदिस्पृशानि (१, १५, १८)।**

हृदिस्पृशम् अदन्तमपाणिनीयम् । **स्पृशोऽनुदके क्विन् (३, २, ५८)** इति क्विनि हृदिस्पृंशीति स्यात् ।

**प्रगीयमानं च यशः (१, १६, १३)।**

कृत्यच इति णत्वं नाकारि । स दोषः ।

**सारथ्यपारषदसेवन- (१, १६, १६)।**

परिषदं समवैति पारिषद्यः। परिषदो ण्यः । **तत्र साधुरित्यर्थेऽपि परिषदो ण्यः (४, ४, १०१)** इति ण्ये पारिषद्यः। योगविभागाण्णोपीष्यत इति पारिषद इत्यपि । प्रकृते रूपं भ्रष्टम् । अर्थोपि यत्नलभ्यः । भावप्रत्ययमन्तरेण भावे प्रयोगमिच्छति ।

**भूतलेऽनुपतन्त्यस्मिन्विना ते प्राणिनां शुचः (१, १७, ८)।**

ते विना प्राणिनां शुचः (अश्रूणि) न पतन्तीत्यन्वयः। विनायोगे षष्ठीं प्रयुञ्जानो महदपराध्यति । षष्ठ्यपवादभूता उपपदविभक्तय इति प्रस्मरति। षष्ठीप्रयोगो वर्तमानं हिन्दीव्यवहारं स्मारयति। विनेति 'ते' इत्यनेन सम्बध्यते न तु शुच इत्यनेन। अन्यथा शुच इत्यावर्तनीयं भवति। शुच इति प्रथमान्तं कर्तृतयाऽनुपतन्तीति क्रिययाऽन्वियात्, द्वितीयान्तं च विनेत्यनेन। वाक्यभेदश्च जायेत। संभवति वाक्यैक्ये वाक्यभेदो नाश्रेयः।

**यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यन्ते साध्वसाधुभिः (१, १७, १०)।**

त्रस्यन्तीति तु युक्तम् । असाधुभिरिति तृतीया **भीत्रार्थानां भयहेतुः (१, ४, २५)** इति शास्त्रमुच्चरते। यत्तु त्रस्यन्ते पीड्यन्ते (असाधुभिः) इत्यर्थं इति श्रीधरः, तन्न। त्रसी उद्वेगे इति धातुरकर्मको णिचमन्तरा सकर्मकतां नार्हति यातुम् । तथा सति त्रास्यन्त इति वक्तव्यं स्याच्छन्दोभङ्गश्च स्यात् । अकर्मकत्वादेव त्रस्नुरिति भीरुरुच्यते न भयंकरः।

**अहो वयं जन्मभृतोऽद्य हास्म (१, १८, १८)।**

आस्मेत्यनद्यतने भूते लङ्। तस्याद्येत्युक्त्या विरोधः। तं महाभागवतोऽयं भक्तिपरवशो न पश्यति। इह पुराणे बहुलोऽस्थाने लकारप्रयोगः। स्थूलोच्चयेन केचिदल्पे प्रदेशा निर्दिश्यन्ते—**सा (निर्वृतिः) ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत् (४, ९, १०)**। मा भूत्=न भवितुमर्हति । अर्हार्थे लिङि न भवेदिति सुप्रयुक्तं

स्यात्। **तृषार्तोऽवगाढो न सस्मार दावम्** (४, ७, ३५)। सस्मारेति लङर्थे लिट्। उत्तरत्र 'न निष्क्रामति ब्रह्मसम्पन्नवन्न:' निष्क्रामतीति लट्प्रयोगात्। **कृतं विहन्तुं तनुभृद् विभूयात्** (५, १, १२)। आशिषि लिङोऽनवकाश:। शकि लिङ् चेति लिङ् स्यात्। **एकादशासन् मनसो हि वृत्तय:** (५, ११, ९)। लट: स्थाने लङ्। **सृजाम सर्वे यदनुग्रहादिदम्** (५, १७, २३)। लडर्थे लोट्। **एतावतीहि राजन्पुंस: प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतय उच्चावचा विसदृशा यथाप्रश्नं व्याचख्ये, किमन्यत्कथयाम:** (५, २५, १५)। व्याचख्ये इत्यत्यन्तमप्रसक्तो लिडुत्तमैकवचनप्रयोग:। अनुपदमेव कथयाम इति लडुत्तमबहुवचनमित्यहेतुक उद्वेजको लकारभेद:। **ज्ञात्वान्याभिनिवेशं पुत्रमेव ददावहम्** (६, १५, २०)। अपारोक्ष्येप्युत्तमपुरुषे लिट्। **यद्यच्छस्त्रं समादद्यात्सर्वं तदच्छिनद् विभु:** (८, १०, ४४)। लङर्थे लिङ्। समादत्तेति तु वाच्यम्। **एष वा उत्तमश्लोको न जिहासति यद्यश:** (८, २०, १३)। वर्तमानसामीप्येऽविवक्षिते वर्तमानवल्लट् प्रयोग: कथम्। **कर्मावदातमेतत्ते गायन्ति स्व: स्त्रियो मुहु:। कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम्** (९, ५, २१)। पूर्वोत्तरयोर्वाक्ययोर्लकारभेद: किंकृत:। **अयं हि रोहिणीपुत्रो रमयन्सुहृदो गुणै:। आख्यास्यते राम इति बलाधिक्याद् बलं विदु:** (१०, ८, १२)। विदुरिति लट् सर्वथाऽस्थाने। कालक्रमेण पराक्रमप्रकर्षेऽवगते सति तं रामं बलनाम्नाऽभिधास्यन्तीति भविष्यति वेदिष्यतीन्ति लृट् सुतरामुपपत्तिमान्स्यात्। **किं नोऽकरिष्यन्कुलवृद्धबान्धवा:** (१०, ३९, २८)। असति हेतुहेतुमद्भावेऽसत्यां क्रियातिपत्तौ लृङ् दुष्यतीति किमु वाच्यम्। **रिपवो जिग्युरधुना काल आत्मानुसारिणि** (१०, ५४, १६)। अधुनेति सति लिट् प्रयोग इत्यब्रह्मण्यमित्युद्घोषणीयं भवति। **राज्यं विसृज्य विविशुर्वनम् ··· ··· सीदन्ति तेऽनुपदवीं त इहास्थिता: किम्** (१०, ६०, ४१)। समानकर्तृके भिन्नकालवृत्ती विविशु: सीदन्तीति क्रिये कथं युज्येते। किमपि महान्संमोह: कवे:। **तस्याद्य ते ददृशिमाङ्घ्रिमघौघमर्षतीर्थास्पदम्** (१०, ८४, २६)। अद्येति समभिव्याहारे परोक्षानद्यतनक्रियावृत्तिर्लिडित्यत्याहितम्। **सूतिगृहे जगाद भगवानजो नौ संजज्ञ इत्यनुयुगं निजधर्मगुप्त्यै** (१०,८५,२०)। जगादेत्यपारोक्ष्ये लिड् दुष्यति। **अद्याहं भगवँल्लक्ष्म्या आसमेकान्तभाजनम्।** अद्येत्यनेन समभिव्याहृतम् आसमिति न युज्यते न्यसितुम्। विरोधात्। पर्याप्त एक: पुलाक: स्थाल्या निदर्शनायेतीहैवावसाय्यतेऽयं विषय:।

**द्वारपानां शुनामिव** (१, १८, ३३)।

एकाजुत्तरपदे ण इति णत्वं दुर्वारम्।

**यन्नष्टनाशस्य वसोर्विलुम्पकात् (१, १८, ४४)।**

विलुम्पकादित्यपभ्रष्टम् । लुपेः शे नुम्विधेः । ण्वुलि त्वस्य कुतः प्रसङ्गः ?

**पापीयसी धीर्द्विजदेवगोभ्यः (१, १९, ३)।**

वैषयिकेऽधिकरणे सप्तमी विहिता । चतुर्थी तु हिन्दीव्यवहारमनुरुन्धे ।

**ततश्च वः पृच्छ्यमिमं विपृच्छे (१, १९, २४)।**

पृच्छ्यं प्रष्टव्यमित्यर्थः । रूपं तु न सिध्यति । प्रच्छेर्ण्यति सम्प्रसारण-दौर्लभ्यात् । अकृतसम्प्रसारणं प्रच्छ्यम् इत्येव शब्दः ।

**विष्णोरिव सुरेतराः (१, १९, ३४)।**

सुरेभ्य इतरे सुरेतरे इति स्यात् । पूर्वपरादिष्वितरशब्दस्याभावाज्जसि सर्वनामता न विभाष्यते । तत्पुरुषेण लभ्येऽर्थे बहुव्रीहिर्नाश्रयणीयः ।

**तद्गोत्रस्यात्त बान्धवः (१, १९, ३५)।**

बन्धुकृत्यं बान्धवम् इति टीकाकृतः । अत्राण् केनेति त एव जानीयुः । बन्धुरेव बान्धव इति स्वार्थेऽण् तु प्रसिध्यति । प्रसिद्धिं चायं पुराणकारो द्वेष्टि ।

**निवृत्ता विधिषेधतः (२, १, ७)।**

षेध इति प्रामादिकम् । मूर्धन्यादेशाप्रसङ्गात् । नेह प्रतिर्वा निर्वा तन्निमित्तमस्ति । उपसर्गात्सुनोति सुवतीत्यादि सूत्रं हि षत्वविधायकम् ।

**महापौरुषिको भवान् (२, १, १०)।**

महापौरुषमस्त्यस्येति महापौरुषिक इति मत्वर्थीये ठनि रूपसिद्धिरिति भ्रमः । न कर्मधारयान्मत्वर्थीयः, बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति बहुव्रीहौ समाश्रिते महापौरुष इति स्यात् । पुरुषेण (हरिणा) चरति इति चरतीत्यनेन सूत्रेण (४, ४, ८) ठक्कि पौरुषिक इति सिध्यतीत्यभिमानः केषांचित् । चरति इति सूत्रे चरतेर्गमनभक्षणे अर्थौ गृह्येते । तेन हस्तिना चरति हास्तिकः, शकटेन चरति शाकटिकः, नावा चरति नाविकः, उडुपेन चरति औडुपिकः, दध्ना चरति भक्षयति दाधिक इत्यादीन्युदाहरणानि वृत्तौ स्थितानि । एतैर्हस्त्यादिशानमारूढस्तैर्हस्त्यादिभिर्गच्छतीति गम्यते ।

**छिन्द्यादसङ्गशस्त्रेण स्पृहां देहेऽनु ये च तम् (२, १, १५)।**

तं देहमनुसृत्य वर्तमाना ये कलत्रापत्यादय इत्यर्थं विवक्षति । लक्षणेत्थम्भूताख्यानेत्यादिना तु नानोरिह कर्मप्रवचनीयसंज्ञाऽर्हति भवितुम् । तेन द्वितीया दुरुपपादा ।

**सत्यञ्जलौ किं पुरुधान्नपात्र्या (२, २, ४)।**

पुरुधेति पाणिनीये न सिध्यति।

**निर्भिद्य मूर्धन् विसृजेत् परंगतः (२, २, २१)।**

मूर्धानम् इति तु पाणिनीयाः।

**बिले बतोरुक्रमविक्रमान्ये न शृण्वतः**

**कर्णपुटे नरस्य ... ... ... ... (२, ३, २०)॥**

शृणुत इति वक्तव्ये शृण्वत इति प्रयुक्तिरन्यमनस्त्वे लिङ्गं न पाणिनीयानभिज्ञतायाम्। श्रवणक्रियायां कर्णपुटे इति कर्तृतयाऽन्वयं याति यथोत्तरार्द्धेऽसती जिह्वोपगानक्रियायाम्। तेन नशृण्वतोऽशृण्वतो नरस्येत्यन्वय इति कल्पना दूरोत्सरिता भवति।

**जिह्वाऽसती दार्दुरिकेव सूत (२, ३, २०)।**

दार्दुरिकेति न सिध्यति। दर्दुरे भवा, इत्यर्थेऽध्यात्मादित्वाट्ठञि स्त्रियां ङीपि दार्दुरिकीति स्यात्। मत्वर्थीयस्य ठनस्तु प्रसङ्ग एव न।

**तमो विशीर्यते मह्यं हरेः कथयतः कथाम् (२, ४, ५)।**

मह्यम्=मम। न च चतुर्थी क्वचित्षष्ठ्यर्थमाचष्टे। मह्यं कथयत इत्यनन्वयश्च।

**पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः (२, ६, १८)।**

स्थितयो लोकाः। तिष्ठन्ति जीवा आसु इति। पादः पद् इति शास्त्रेण पद्भावं चिकीर्षति न चेष्टे कर्तुम्। कृतसमासान्तस्य पाच्छब्दस्य पद्भावः शिष्यते। पाद्भाव एव तावद् दुर्लभः। पादस्य लोपोऽहस्त्यादिभ्य इत्युपमानात्परस्य पादशब्दस्य लोपः समासान्तो विधीयते बहुव्रीहौ। प्रकृते प्रसङ्ग एव नास्ति।

**सत्ये त्रिपृष्ठे उशतीं (कीर्ति) प्रथयंश्चरित्रैः (२, ७, २०)।**

अत्र उशतीत्यत्र वशेः कर्मणि शता। कमनीया एषणीया इत्यर्थात्। अन्यत्राप्युशच्छब्दं कर्मणि प्रयुङ्क्ते विस्रब्धम्। ते केचित्प्रदेशा इह संगृह्यन्ते— **अथ तस्योशतीं देवीमृषिकुल्यां सरस्वतीम् (३, १६, १३)। जुष्टा विष्टचोशतीर्गिरः (३, २२, ७)। अनिच्छन्नप्यदां बालां शूद्रायेवोशतीं गिरम् (४, २, १३)। धुता तनूरुशती मे पुराणी (५, ५, २४)। तस्यां नरेन्द्र करभोरुरुशद्दुकूल- (९, १, १७)। क्षणादनेनेति वकार्युशन्मुखं वीक्ष्य (१०, १२, २४)। नार्थोऽतिरिक्तैरितीहैव विरमामः।**

**आयुश्च वेदमनुशास्त्यवतीर्य लोके (२, ७, २१)।**

आयुर्वेदमिति विवक्षति। आयुर्वेद इति समस्तमेकं पदं सर्वस्य विदितं शास्त्रविशेषस्य संज्ञा। अयं त्विदं चकारप्रक्षेपेण द्वे पदे करोति संज्ञां च विघटयति, अपार्थकत्वं च भावयति। केन प्रयुक्त इत्थमाचरतीति न जानीमः।

**उच्चाटयिष्यदुरगं विहरन्ह्रदिन्याम् (२, ७, २८)।**

उच्चाटयिष्यत् इत्यपभ्रंशः। इकारलोपश्छान्दस इति कश्चित्प्रलपति श्रद्धाजडः।

**स्वपार्षदमुख्यैः परिसेवितं विभुम् (२, ९, १४)।**

परिनिविभ्यः सेवसितसयेत्यादिना मूर्धन्यादेशे परिषेवितमिति शब्दः।

**अमुनी भगवद्रूपे मया ते अनुवर्णिते (२, १०, ३५)।**

अमू इति शब्दः। जानन्नपि वैकृतं करोति अपूर्वतायै।

**अनादिमध्यनिधनं नित्यं वाङ्मनसः परम् (२, १०, ३४)।**

वाङ्मनसाभ्याम् इति तु वक्तव्यम्। न दधिपयआदीनीत्येकवद्भाव-निषेधाद् अचतुरविचतुरसुचतुरेत्यादिना समासान्तविधानाच्च।

**मन्त्रिणो वैदुरिकं वदन्ति (३, १, १०)।**

विदुरेणोक्तम् इत्यस्मिन्नर्थे वैदुरिकं न सिध्यति। विदुरस्येद-मित्यर्थेऽपि न।

**परो गुणानामुत कर्मतन्त्रम् (३, १, ४४)।**

गुणेभ्यः पर इति पञ्चमी स्थाने स्यात्। बुद्धेः परः, प्रकृतिभ्यः परं यच्चेत्यादिषु शतशः प्रयोगेषु पञ्चमीव्यवहारदर्शनात्।

**पुराद् व्यवासीद् यदनन्तवीर्यः (३, २, १६)।**

व्यवात्सीदिति तु पाणिनीयाः।

**समाहुता भीष्मककन्यया ये (३, ३, ३)।**

हल इति शास्त्रमतिक्रामति। समाहूता इत्येव शब्दः। मन्ये छन्दोरिरक्षिषयैनमाचरति।

**कालमाधवशाल्वादीन्···अजीघनत् स्वयं दिव्यं स्वपुंसां**

**तेज आदिशत् (३, ३, १०)।**

अजीघतत् इति तु पाणिनीयाः। हनस्तोऽचिण्णलोरिति शास्त्रेण धातोस्तकारान्तादेशः।

**तथापि नाहं प्रवृणोमि भूमन् (३, ४, १५)।**

वृङ् सम्भक्तौ इत्यस्य प्रयोग इष्यतेऽर्थानुरोधात्। तथा सति प्रवृणे प्रवृण्व इति वा प्रयोक्तव्यम्।

**प्रोवाच कस्मै भगवान् समग्रम् (३, ४, १८)।**

कस्मै = ब्रह्मणे। कायेति तु वक्तव्यम्। संज्ञाया असर्वनामत्वात्।

**समुषित औपगविर्निशां ततोऽगात् (३, ४, २७)।**

उपगोरपत्यम् औपगव इति तु पाणिनीयाः।

**मुनिर्विवक्षुर्भगवद्गुणानाम् (३, ५, १२)।**

न लोकाव्ययेत्यादिना षष्ठ्या निषेधाद् यथाप्राप्तं द्वितीया स्यात्।

**विशोऽवर्तन्त तस्योर्वीर्लोकवृत्तिकरीर्विभो (३, ६, ३१)।**

उर्व्यः, लोकवृत्तिकर्य इति त्विष्यते। प्रायेणेह पुराणे ईकारान्तस्त्रीलिङ्गानां प्रथमाबहुवचनस्थाने द्वितीयाबहुवचनं धृतम्। केन प्रयुक्तोऽयमित्यमाचरति कविः। बहुज्ञोऽयं न त्वज्ञः।

**यतोऽप्राप्य न्यवर्तन्त वाचश्च मनसा सह।**
**अहं चान्य इमे देवाः ··· (३, ६, ३९)॥**

अहमिति सति न्यवर्तन्तेति प्रथमपुरुषो न युज्यते। अस्मद्युत्तम इति विधेः। अयं त्वन्यत्रापि पुरुषव्यत्ययं बहुलं कुरुते न त्वाश्चर्यमिव।

**संछिन्नः संशयो मह्यम् (३, ७, १५)।**

षष्ठ्याः स्थाने चतुर्थीं प्रयुङ्क्ते। तत्कस्मात्?

**स्वर्धुन्युदार्द्रैः (३, ८, ५)।**

अत्रोदकस्योदादेशोऽपाणिनीयः।

**अहीन्द्रतल्पेऽधिशयान एकः (३, ८, १०)।**

अधिशीङ्स्थासां कर्मेति अहीन्द्रतल्पम् इतीष्यते। अधिकरणस्य (तल्पस्य) कर्मसंज्ञाविधानात्। कश्चिदाह—**अधिपरी अनर्थकौ (१, ४, ९३)। इत्यधेः कर्मप्रवचनीयसंज्ञायां यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी (२, ३, ९)** इत्यनेन सप्तमीति। तन्न। अधिपरी इति अध्यागच्छतीत्यादौ गतिसंज्ञाबाधार्थं कर्मप्रवचनीयसंज्ञा क्रियते। गतिर्गताविति निघातो मा भूदिति। **अधिरीश्वरे (१, ४, ९७)** इत्यनेन या कर्मप्रवचनीसंज्ञा क्रियते तया कर्मप्रवचनीयेन युक्ते सप्तमी विधीयते।

**सूष्यंस्तदाऽभिद्यत नाभिदेशात् (३, ८, १३)।**

सोष्यन्निति तु साधु । सिद्ध इड्विकल्पः । गुणः केन वार्यते ।

**कालेन सोऽजः पुरुषायुषा ··· ··· (३, ८, २२)।**

पुरुषायुषेणेत्येव शब्दः । समासान्तो न कृतः । स दोषः ।

**रत्नोदधारौषधिसौमनस्यवनस्रजः (३, ८, २४)।**

सुमनसां समूहाः सौमनस्यानि । समूहे ष्यञ् केन दृष्टः श्रुतो वा ?

**प्रत्यर्हयन्तं सुनसेन सुभ्रुवा (मुखेन) (३, ८, २७)।**

मुखं विशेष्यमिति नपुंसकत्वे सुभ्रुणेति युक्तम् ।

**सूर्येन्दुवाय्वग्न्यगमम् (३, ८, ३१)।**

दुर्गमम् इति खलि वक्तव्यम् । अगम्यम् इति ण्यति वा ।

**ज्ञातोसि मेऽद्य सुचिरान्ननु देहभाजाम् ।**
**न ज्ञायते भगवतो गतिरित्यवद्यम् (३, ९, १)॥**

देहभाजां भगवतो गतिर्न ज्ञायत इति दोषवद् वाक्यम् । कर्तर्यनुक्ते तृतीयया भवितव्यम् ।

**पश्यामि विश्वसृजमेकमविश्वमात्मन् (३, ९, ३)।**

विश्वसृजम् इति प्रथमचरणगतं स्वरूपमिति विशिनष्टि । तेनानेन नपुंसकेन भाव्यम् । नपुंसकत्वे च विश्वसृड् इति स्यात् । स्वमोर्नपुंसकादित्यमो लुकि । कवि भक्तः कश्चित्सुमेधा दुष्प्रयोगमिममित्थं समाधत्ते—**सृजतीति सृजम् ।** इगुपधत्वात् कर्तरि कः । विश्वस्य सृजं विश्वसृजम् इति षष्ठीसमासः । सत्यं सिध्यति रूपम् । प्रयोगस्तु न प्रसिध्यति । व्याकरणं ह्यन्वाख्यानस्मृतिरित्यसकृत्स्मार्या इमे विज्ञा भवन्ति ।

**जठरीकृतलोकमात्रः (३, ९, २०)।**

उदरे प्रविलापितं लोकमात्रं कृत्स्नो लोको येनेत्यर्थः । च्वेस्त्वप्रसङ्गः । न ह्यसावप्रथमान्ताद् विहितः । कृभ्वस्तियोगे सम्पद्य कर्तरि च्विः । तेन सम्पद्यतेः कर्तरि च्विर्विहितः । तस्मात्प्रथमान्तादेव भविष्यति । अधिकरणसप्तम्यन्तात्तु प्रसङ्ग एव न । अयं बहुज्ञोप्यज्ञवदाचरति । अथवाऽज्ञानं नाटयति ।

**मा रीरिषीष्ट निगमस्य गिरां विसर्गः (३, ९, २४)।**

रिषेर्यङ्लुकि लिङि रूपम् । यङ्लुक् न परस्मैपदविषयश्छान्दसः ।

**एकं व्यभाङ्क्षीदुरुधा (३, १०, ८)।**

उरुधेति न सिध्यति ।

**तिरश्चामष्टमः सर्गः सोऽष्टाविंशद्विधो मतः (३, १०, २०)।**

अष्टाविंशद्विध इति दुष्यति । मन्ये छन्दोवशात्तिशब्दं लुम्पति ।

**दृष्ट्वा तत् सौकरं रूपं तर्कयामास चित्रधा (३, १३, २०)।**

चित्रधा नाना बहुप्रकारम् । अविहितं धाप्रत्ययं यस्याः कस्याः प्रकृतेः करोति । तदस्य शीलम् ।

**आर्तोपसर्पणं भूमन्नमोघं हि महीयसि (३, १४, १४)।**

उपसर्पतेः सकर्मकत्वात्कृद्योगे कर्मणि षष्ठ्या महीयस इति स्यात् । आर्तेनोपसर्पणम् इति व्यासोक्तिश्च श्रेयसी स्यात् ।

**यथा मां नातिवोचन्ति मुहूर्त्तं प्रतिपालय (३, १४, २१)।**

नातिवोचन्ति न निन्दन्ति । अहो वाग्भ्रंशः ।

**नैदाघिकं तापमिवोडुराजः (३, १४, ४८)।**

नैदाघिकमित्यपशब्दः । ऋत्वणि नैदाघम् इति शब्दः । कालाट्ठञो बाधः ।

**प्राजापत्यं तु तत्तेजः परतेजोहनं दितिः (३, १५, १)।**

तेजोहनं तेजसो हनम् । पचाद्यच् इति कश्चित् । पचाद्यजन्तं हनम् इति क्व दृष्टं वाङ्मय इति मुग्धः स प्रष्टव्यः ।

**कक्षाः (अतीत्य षट्) समानवचसावथ**
**सप्तमायाम् ... ... ... ... ... (३, १५, २७)।**

सप्तम्यामिति वक्तव्यम् । महाभागवतेनापि समादृत्यं शासनं पाणिनीयम् ।

**सद्यो हरेरनुचरावुरु बिभ्यत-**
**स्तत्पादग्रहावपतताम् ... (३, १५, ३५)।**

बिभेतेः शत्रन्ताद् द्विवचने बिभ्यताविति वक्तव्यम् । बहुवचनं तु प्रमत्तपठितम् ।

**भूयादघोनि भगवद्भिरकारि दण्डः (३, १५, ३६)।**

अघवतीति वक्तव्ये 'अघोनि' इति दुष्प्रयोगो वाग्विक्रियायां निःशङ्कतायाः परमा सीमा ।

**कवर्थीकृत्य मां यद्वो बह्वक्रान्तामतिक्रमम् (३, १६, २)।**

अक्रान्ताम् इति क्रमेर्लुङि भ्रष्टं रूपम्। अक्रमिष्टामिति तु न्याय्यम्। करोतेश्चाकार्ष्टम्।

**यस्त्वेतयोर्धृतो दण्डः ··· ···**
**स एवानुमतोऽस्माभिः ··· (३, १६, ३)॥**

अस्माकम् इति तूचितम्। मतिबुद्धिपूजार्थेभ्यश्चेति वर्तमाने क्तः। क्तस्य च वर्तमाने इति षष्ठ्या भवितव्यम्।

**ऋषिकुल्याम् (३, १६, १३)।**

प्रातिपदिकस्वरूपग्रहणे तदन्तविधिर्न। तेन कुलाद्यत्खौ इति यन्न प्राप्नोति।

**स त्वं द्विजानुपथपुण्यरजः पुनीतः (३, १६, २१)।**

क्ते श्नाप्रत्ययो भुवनत्रयक्षोभायालम्। अष्टमे स्कन्धेपि पुनीत इत्यावर्तयति लोकादभीतः कविः।

**लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाणम् (३, १६, २३)।**

हि यस्माल्लोक ऋषभस्य श्रेष्ठस्य यदाचरितं तत्प्रमाणं गृह्णातीति त्रिकालाबाधितं तथ्यं ब्रूत इति वर्तमाने लडेव युक्तः। लृङस्तु सर्वथाऽनवकाशः।

**प्रत्येष्यतं निकाशं मे (३, १६, ३१)।**

प्रत्येष्यथेति वक्तव्ये प्रत्यागमिष्यथेत्यर्थेऽत्यन्तं भ्रष्टः प्रयोगः।

**ततश्च गदयाराति दक्षिणस्यां भुवि प्रभुः।**
**आजघ्ने ··· ··· ··· ··· (३, १८, १७)॥**

पराङ्गकर्मकत्वे तङ् दुर्लभः।

**तयोः स्पृधोस्तिग्मगदाहताङ्गयोः (३, १८, १९)।**

स्पृदिति स्पर्धितरि प्रयुक्तम्। सम्प्रसारणं दुर्लभमिति न दृष्टम्।

**प्रादुष्कृतानां मायानामासुरीणां विनाशयत्।**
**सुदर्शनास्त्रं भगवान्प्रायुङ्क्त ··· ··· (३, १९, २२)॥**

न लोकाव्ययेति षष्ठीनिषेधे माया आसुरीरिति द्वितीयया वक्तव्यम्।

**आपो गाङ्गाः (३, २०, ५)।**

अण्णन्तात् टाप् कथम् ?

**तं जग्धुमभिदुद्रुवुः (३, २०, २०)।**

तुमुनि जग्ध्यादेशो दुर्लभ इति किंस्विद् वेदनीयोऽयं बहुवित्कविः।

**अहो मे यक्षरक्षांसि प्रजा यूयं बभूविथ (३, २०, २१)।**

बभूविथेति कथमेकवचनान्तं प्रयुक्तम्। अहो प्रमादः।

**अन्योन्यस्य श्लेषयोत्तुङ्गनिरन्तरपयोधराम् (३, २०, ३०)।**

भावे घञि श्लेषः पुमान्। णे कर्तरि स्त्रीत्वविवक्षायां टापि श्लेषेति स्यात्। कर्तरि स प्रत्ययः। अर्थासङ्गतेर्न शक्यः परिग्रहीतुम् इति श्लेषेति प्रमाद एवायम्।

**विस्रम्भातपर्यपृच्छत्कुमेधसः (३, २०, ३३)।**

नञ्दुःसुभ्य एव परस्य मेधाशब्दस्य असिच्समासान्तो विहितः, तेन कुमेधस इति प्रामादिकमेव।

**यत्र मैथुनेनैधिरे प्रजाः (३, २१, १)।**

एधाञ्चक्रिरे इति तु पाणिनीयाः। अयं तु च्छन्दोऽनुकरोति। तत्राम् न।

**भवद्विधेष्वतितरां मयि संगृभितात्मनाम् (३, २१, २४)।**

संगृहीत इति तु पाणिनीयाः। ग्रहेर्हस्य भकारस्तु च्छन्दोनुकारः। ह्रस्व ऐच्छिकः।

**सा त्वां ब्रह्मन्नृपवधूः काममाशु भजिष्यति (३, २१, २८)।**

भज सेवायामनुदात्तोपदेश इति भक्ष्यतीत्येव साधु।

**स भवान् ... श्रोतुमर्हसि ... (३, २२, ८)।**

मध्यमपुरुष आर्ष इति कश्चिल्लालाक्लिन्नमुखो मातृमुखः।

**आसिञ्चदम्ब वत्सेति नेत्रोदैर्दुहितुः शिखाः (३, २२, २५)।**

उद इति स्वतन्त्रा प्रकृतिर्नास्ति। अयन्तु सास्तीत्यभिमन्यते।

**शारीरा मानसा दिव्या वैयासे ... (३, २२, ३७)।**



(हे)वैयासके इति तूचितम्। व्यासवरुडेत्यादिनाऽकङ् अन्तादेशः प्राप्तः, स न कृतः।

**यानि यानि न रोचन्ते स्वजनानाम् (३, २४, ३१)।**

स्वजनेभ्य इति सम्प्रदाने चतुर्थी न्याय्या।

**त्वां सूरिभिस्तत्त्वबुभुत्सयाऽद्धा (३, २४, ३२)।**

सूरिभिस्तत्त्वस्य बुभुत्सयेत्येवं न्यासस्तु न्याय्यः। उभयप्राप्तौ कर्मणि इति कर्मणि षष्ठी। सा च कर्मणि चेति न समस्यत इत्युभयविस्मरणमूलः प्रयोगः प्रकृते।

**आ स्माभिपृच्छे पतिं प्रजानाम् (३, २४, ३४)।**

स्माभी पादपूरणे। आभ्यामाङ् व्यवहित इति तत्कृतमात्मनेपदं न प्राप्नोति। 'व्यवहिताश्च' इत्यस्य च्छन्दोमात्रं विषयः।

**तस्मिन्बिन्दुसरेऽवात्सीत् (३, २५, ५)।**

सर इत्यदन्ता प्रकृतिर्नास्ति। प्राकृत एव सा प्रसिध्यति। इह तन्न्यासः कथम्?

**हृतात्मनो हृतप्राणांश्च भक्ति-**
**रनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते (३, २५, ३६)॥**

द्विकर्मकेषु धातुषु मध्ये प्रयुजेः पाठो न। यत्र गत्यर्थस्तत्र नियमेन णिच्प्रयुज्यते। तेन प्रकृते हृतात्मनो हृतप्राणान् इति द्वितीयाप्रयुक्तिर्दोषाय।

**श्रियं भागवतीं वाऽस्पृहयन्ति भद्राम् (३, २५, ३७)।**

अस्पृहयन्ति=न स्पृहयन्ति। इहैवात्रार्थे प्रयोगः। नञो नलोपस्तिङि क्षेपे इत्यस्याप्यविषयः। क्षेपो न गम्यत इति। अपचसि जाल्मेत्यादौ यथा।

**इमं लोकं तथैवामुमात्मानमुभयायिनम् (३, २५, ३९)।**

उभयलोकगामिनमित्यर्थः। रूपं तु न सिध्यति। उभादुदात्तो नित्यम् इति तयपो नित्यमयचि उभययायिनम् इति स्यात्। मन्ये छन्दोरिरक्षिषया यकारं लुम्पति।

**प्रकृतिं···विलोक्य मुमुहे सद्यः स इह ज्ञानगूहया (३, २६, ५)।**

ज्ञानं गूहत्यावृणोतीति तया। कर्मण्यण्। अणि स्त्रियां टाब्दुर्लभः।

**यच्छ्रीनिकेतमलिभिः परिसेव्यमानम् (३, २८, ३०)।**

परिनिविभ्यः सेवसितसयेत्यादिना विहितं षत्वं दुर्वारम्।

**काल्यमानोपि बलिनो वायोरिव घनावलिः (३, ३०, १)।**

बलिनेत्यनुक्ते कर्तरि तृतीया युक्ता। अकारणं यत्र तत्र विभक्ति-व्यत्ययमाश्रयते।

**को नाम तत् प्रति विनाञ्जलिमस्य कुर्यात्** (३, ३१, १८)।

व्यवहितविप्रकृष्टोपि प्रतिः कुर्यादित्यनेन सम्बध्यते। इदमुपसर्गाः क्रियायोगे, ते प्राग्धातोरिति शासनमुच्चरते।

**भूयो यथा व्यसनमेतदनेकरन्ध्रं**
**मा मे भविष्यत्** ··· (३, ३१, २१)।

भविष्यत् इत्यपभ्रंशः। नेममुल्बणं व्यतिक्रमं पाणिनीयाः सहन्ते। पौराणिकाः सहन्तां नाम।

**दैवोपसादितं मृत्युं मृगयोर्गायनं यथा** (३, ३१, ४२)।

गस्थकन्, ण्युट् चेति शिल्पिनि गाथकगायनौ सिध्यतः। गायतीति गाथकः, गायनश्च। गानं शिल्पमस्येति गम्यते। अयं तु भावे ण्युटमभिमन्यते गायनं गानमिति हिन्दीव्यवहारं चानुकरोति।

**ज्ञानयोगश्च मन्निष्ठो नैर्गुण्यो भक्तिलक्षणः** (३, ३२, ३२)।

नैर्गुण्यो निर्गुणविषय इति टीका। रूपं तु न सिध्यति। निर्गुणस्य भावः कर्म वा नैर्गुण्यम् इति तु नपुंसकं प्रतीतम्।

**शेते स्म मायाशिशुरङ्घ्रिपानः** (३, ३३, ४)।

अङ्घ्रिं पिबतीति विग्रहः। समासस्तु न सिध्यति प्रत्ययश्चापि नेति सर्वथा स्वकपोलकल्पितोऽव्यवहार्यः शब्दः।

**मिथुनं ब्रह्मवर्चस्वी परमेण समाधिना** (४, १, ३)।

ब्रह्मवर्चसीति तु पाणिनीयाः। समासान्तो न कृतः। स दोषः। आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् इति श्रुतावपि कृतसमासान्त एव श्रूयते।

**चित्तीकृतः प्रजननाय** (४, १, २८)।

चित्तमिति सम्पद्यतेः कर्तृ नेति अभूततद्भावे च्विर्न प्राप्नोति।

**··· मधुगन्धेन भूरिणा**
**मथ्ना चोन्मथितात्मानः** (४, २, २५)।

मथन्निति प्रातिपदिकं स्वस्योपज्ञा। मथिन्निति तु पाणिनीयाः पठन्ति। ततस्तृतीयायां मथेति भवति।

**अनागसं दुर्वचसाऽकरोत् तिरः** (४, ३, २४)।



विभाषा कृञि इति गतिसंज्ञाविकल्पे तदभावपक्षेपि लोके तिरसः करोतेः परः प्रयोगो न दृश्यते।

**न यस्य लोकेऽस्त्यतिशायनः (४, ४, ११)।**

ऐश्वर्यादिना उत्कृष्ट इत्यर्थः। रूपं तु न सिध्यति। अतिशायनमिति भावे ल्युटि निपातितम्, न तु कर्तरि। निपातनस्य नियतः स्वो विषयः।

**तद्यौगपदैककर्तरि (४, ४, २०)।**

यौगपदेन एकस्मिन्कर्तरि इत्यर्थः। युगपद्भावो यौगपद्यमिति सर्वस्य प्रसिद्धम्। अयं त्वशिष्टमणं कृत्वाऽप्रसिद्धं रूपं कल्पयति।

**क्षितावुदीचीं निषसाद शान्तवाक् (४, ४, २४)।**

उदीच्यामिति तु वक्तव्यम्। द्वितीयान्तं त्वनन्वितं तिष्ठति। सामानाधिकरण्यलाभाय सप्तम्येव युज्यते प्रयोक्तुम्।

**निमील्य दृग् योगपथं समाविशत् (४, ४, २४)।**

दृगित्यविभक्तिको निर्देशः। अपदं न प्रयुञ्जीतेति शिष्टोक्ति नाद्रियते।

**स प्राद्रवद् घोषणभूषणाङ्घ्रिः (४, ५, ६)।**

घोषणं शब्दनशीलम्। रूपं तु न सिध्यति। चलनशब्दार्थादकर्मकाद्युच् इत्यकर्मकाच्छब्दार्थाद् धातोस्ताच्छील्ये युज्विहितः। घुषिस्तु सकर्मकः।

**नारदाय प्रवोचन्तं पृच्छते शृण्वतां सताम् (४, ६, ३७)।**

प्रवोचन्तमिति वाग्भ्रंशः कर्णौ संज्वरयति।

**न यत्र भागं तव भागिनो ददुः**
**कुयज्विनः ... ... ... (४, ६, ५०)॥**

कुयज्विन इत्यपशब्दः। कुयज्वान इति शब्दः। सुयजोर्ङ्वनिप्।

**विप्रान् ब्रह्मात्मतत्त्वमवितुं प्रथमं त्वमस्राक् (४, ७, १४)।**

असाक्षीरिति वक्तव्येऽस्त्रागित्यपभ्रष्टम्।

**क्षिप्तो दुरुक्तिविशिखैरगणय्य तन्माम् (४, ७, १५)।**

अगणय्येत्यपशब्दः। समासेऽनञ्पूर्वे क्त्वो ल्यप् इति प्रकृते ल्यबादेशस्याप्रसङ्गः। अगणयित्वेत्येव शब्दः।

**क्षमाप्यैवं स मीढ्वांसं ब्रह्मणा चानुमन्त्रितः (४, ७, १६)।**

क्षमयित्वेति तु वक्तव्यम्। प्रकृतप्रयोगः प्राकृतव्यवहारं स्मारयति। कश्चिदाह—क्षमामाप्नोतीति क्षमापः, तं तादृशं कृत्वा। (विनापि पूर्वपदं क्वचिल्ल्यब् भवति) स प्रष्टव्यः क्षमाप इति क्षमी क्षमावान् इत्यर्थे क्व दृष्टः। व्याकरणेन हि सता शब्दा अनुगम्यन्ते नापूर्वा उत्पाद्यन्त इति स्मरणीयम्।

**अयं त्वत्कथामृष्टपीयूषनद्यां**
**तृषार्तोऽवगाढः ··· ··· (४, ७, ३५) ॥**

गाहतिः सकर्मकः केवलोपि । अर्थनिर्देशो हि तथाऽभूत् गाहू अवलोडन इति । अवपूर्वोपि । तथा च प्रयोगाः प्रथन्ते—सलिलमवगाढो मुनिजन इति स्वप्ननाटके । पूर्वापरौ तोयनिधी वगाह्येति च कुमारे ।

**नूनं विमुष्टमतयस्तव मायया ते (४, ९, ९) ।**

विमुषितमित्येवानवद्यं रूपं मुषेर्निष्ठायाम् । इदं च मुष्टं प्रतिग्राहयता स्वमर्थं पात्रीकृतो दस्युरिवासि येन इति कालिदासीयमपप्रयोगं स्मारयति ।

**यो नारदवचस्तथ्यं नाग्राहिषमसत्तमः (४, ९, ३२) ।**

अग्रहीषम् इति तु पाणिनीयाः ।

**तवाभिषिच्यमानाभ्यां (स्तनाभ्याम्) वीर**
**वीरसुवो मुहुः ··· ··· ··· ··· (४, ९, ५०) ।**

वीरसुव इत्यपशब्दः । ओः सुपीति यणा भवितव्यम् ।

**इच्छन्तस्तत्प्रतीकर्तुमयुतानि त्रयोदश (४, १०, १२) ।**

उपसर्गस्य घञ्यमनुष्ये बहुलम् इति शास्त्रेण तुमुनि प्रतेरुपसर्गस्य न शक्यो दीर्घः कर्तुम् । किमिदं बालस्य चापलं वृद्धस्य वा विभ्रमः ?

**न यावन्महतां तेजः कुलं नोऽभिभविष्यति (४, १०, ३४) ।**

यावत्पुरानिपातयोर्लट् इत्याचार्यशासनं न मानयति । मानयेच्चेद-भिभवतीति ब्रूयात् ।

**सर्वात्मन्यच्युते सर्वे तीव्रौघां भक्तिमुद्वहन् (४, १२, ११) ।**

सर्वे सर्वरूप इति श्रीधरः । सर्वनामसंज्ञानिषेधः केन ? कश्चिद् असर्व इति पाठं कल्पयति । अविद्यमानसर्वोपाधिरित्यर्थं इति च मनुते । न बहुव्रीहाविति निषेधश्च चरितार्थो भवतीति तुष्यति ।

**गोप्तर्यसति वै नृणां पश्यन्तः पशुसाम्यताम् (४, १४, १) ।**

पशुसाम्यम् इत्येव शब्दः । उक्तार्थानामप्रयोग इति द्वितीयस्य भाव-प्रत्ययस्य तलोऽवकाशो न । अधिकस्याधिकं फलमिति चेत्तृतीयो भावप्रत्ययस्त्वोऽपि क्रियताम् , साम्यतात्वमित्युच्यताम् ।

**वयं त्वविदिता लोके**
**सूताद्यापि वरीमभिः (४, १५, २६) ।**

वरिमन्निति इमनिच्प्रत्ययान्तं प्रातिपदिकम् । ततस्तृतीयाबहुवचने वरिमभिरिति स्यात् । दीर्घः केन ?

एकदा मुनयस्ते तु सरस्वत्सलिलाप्लुता: (४, १४, ३६)।

सरस्वत्या: सलिलं सरस्वतीसलिलम् इति सुप्रयुक्तं स्यात् । पुंवद्भाव: केन ?

जुगुप्सितं न स्तवयन्ति सभ्या: (४, १५, २३) ।

स्तवयन्तीत्यत्र णिचि वृद्धि: कुतो न ? प्रातिपदिकाद् धात्वर्थे बहुलमिति णिचकल्पना नानुन्मत्तस्य शोभते ।

येनाङ्ग जातस्य च पौरुषाणि ते

वाचस्पतीनामपि बभ्रमुर्धिय: (४, १६, २) ॥

भ्रमयामासुरिति णिच्यामि प्रयोक्तव्यम् । पुरस्तादवस्थितस्य सम्बोध्यमानस्य पौरुषाणि धियो भ्रमयन्तीत्येव निर्दुष्टं वच: स्यात् । अनद्यतनपरोक्षक्रियाया अभावे लिट: क: प्रसङ्ग: ?

अनन्तमाहात्म्यगुणैकधामा (पृथु:) (४, १६, १०) ।

गुणानामेकं धामेति षष्ठीसमास: । परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति गुणैकधाम इति स्यात् । नात्रान्यपदार्थप्रधानो बहुव्रीहि: शक्य: श्रयितुम् । अर्थासङ्गते: ।

सरस्वती प्रादुरभावि यत्र (४, १७, २४)।

आश्चर्यो वाग्भ्रंश: । प्रादुर्भवतेरकर्मकस्य कर्मकर्तरि प्रयोगासम्भवात् च्लेश्चिण् दुर्लभ: ।

संकल्पनं विश्वसृजां पिपीपृहि (४, १९, ३८) ।

द्वौ धातू पृ पालनपूरणयोर्जुहोत्यादि: । पृ प्रीतौ स्वादि: । नैकतरस्मादपि प्रकृतरूपसिद्धि: सुलभा । पिपूर्हि इत्येव लोटि रूपं जुहोत्यादे: । स्वादेस्तु पृणु इति रूपम्, अर्थासङ्गतिश्च ।

क्षमापयत आत्मानम् (४, २०, २) ।

अत्रापुगागम: कृत: । स च न शास्त्रदृष्ट: । प्राकृते प्रसिध्यति प्रयोगो न संस्कृते ।

महाधने दुकूलाग्र्ये परिधायोपवीय च (४, २१, १७) ।

व्ययश्च (पा० ६, १, ४३) इति संप्रसारणनिषेधाद् उपव्यायेत्यव शब्द: ।

यं नित्यदा बिभ्रत आशु पापं
नश्यति … … … …(४, २१, ४३) ॥

सर्वैकान्यकियत्तदः काले दा (पा० ५, ३, १५) इति दाविधायकं सूत्रम्। अत्र नित्यम् इति दाप्रत्ययस्य प्रकृतिर्नोक्ता। लोके तु नित्यशब्द एव केवलः प्रसिध्यति।

यद्गृहा ह्यर्हवर्याम्बुतृणभूमीश्वरावराः (४, २२, १०)।

वार्या इति तु साधु स्यात्। अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु इति स्त्रियां वर्येति निपातितम् अनिरोधे विषये।

न कुर्यात् कर्हिचित्सङ्गं तमस्तीव्रं तितीरिषुः (४, २२, ३४)।

तितीर्षुरित्येव शब्दः। अन्यत्रापीह पुराणे इदंलक्षणो वाग्भ्रंशो लक्ष्यते—षड्वर्गनक्रमसुखेन तितीरिषन्ति (४, २२, ४०) इत्यत्र यथा।

निष्पादितश्च कार्त्स्न्येन भगवद्भिर्घृणालुभिः (४, २२, ४३)।

स्पृहिगृहिपतिदयीत्यादिनाऽऽलुच् न प्राप्नोति, घृणेरसङ्ग्रहात्।

त्रिःकृत्व इदमाकर्ण्य (४, २३, ३१)।

द्वित्रिचतुर्भ्यः सुच्। कृत्वसुचोऽपवादः। इह तु प्रत्ययद्वयं कृतं सुच्च कृत्वसुच्च।

यस्येदं देवयजनमनु यज्ञं वितन्वतः (४, २४, १०)।

अत्रानुः समीप इत्यन्वितार्थः। तत्रार्थेऽनोः कर्मप्रवचनीयता नास्तीति तद्योगे द्वितीया दुर्लभा।

मृदङ्गपणवाद्यनु (४, २४, २३)।

अनुः पश्चादर्थे। तत्रार्थेऽस्य कर्मप्रवचनीयता नेति तद्योगे द्वितीया दुर्लभा।

हिमनिर्झरविप्रुष्मत्कुसुमाकरवायुना (४, २५, १८)।

विप्रुष्मद् इत्यत्र मतुपि पूर्वस्य पदत्वे जश्त्वेन डकारे विप्रुड्मद् इति कुतो न स्यात्?

भृत्यैर्दशभिरायान्तीमेकैकशतनायकैः (४, २५, २०)।

एकैकस्य शतं नायिका येषां तैः। व्यधिकरणो बहुव्रीहिः कथं चित्सह्यः। समासे नायिकायाः पुंवद्भावः (नायकः) कथमिति बुद्धि नोपारोहति। प्रत्येकं शतानामनन्तानां नायकैः स्वामिभिरित्यर्थं इत्युत्प्रेक्षतेऽन्वितार्थप्रकाशिकाकारः।

अस्यार्थस्य लब्धिः कथमिति स प्रष्टव्यः। एकैकशब्दात्का विभक्तिः स्वीक्रियते। व्यक्तं सा षष्ठीतरा नार्हति भवितुम्। तेन शतशब्दो नानन्तपरः। एकैकस्यानन्ता नायकाः स्वामिनः स्युरिति नोपपद्यतेऽर्थः। तेनागत्या नायिकाशब्द एव समास उत्तरपदमभ्युपेयं भवति। निरुक्तदोषश्चावस्थितो भवति।

जक्षत्यां सह जक्षति (४, २५, ५७)।

रुदत्यां रुदति क्वचित् (४, २५, ५८)।

अन्वासते क्वचिदासतीम् (४, २५, ५९)।

अत्र जक्षति रुदति आसतीम् इत्येतेऽपभ्रंशाः। जक्षिति, रोदिति, आसीनाम् इत्येत एवानपभ्रष्टाः शब्दा व्यवहार्याः।

तेषु तद्रिक्थहारेषु (४, २७, १०)।

हरतेरनुद्यमनेऽचि रिक्थहर इत्येव साधु। अणि तु भारहार इतिवद् रिक्थस्य वोढा इत्यर्थः स्यात्।

मयि रुष्टे सुसंत्रस्ता भर्त्सिते यतवाग् भयात् (४, २८, १९)।

भर्त्सिते भर्त्सितवति। कर्तरि क्तो न सिध्यति। नपुंसके भावे क्त इति कश्चित्। भर्त्सने मया कृते सतीत्येतावदध्याहरणीयं भवति विषमश्च वाचां मार्गो जायते। मयि रुष्ट इत्युक्ते ततोऽनन्तरं कर्तरि क्तान्तमिष्यते। भर्त्सयते-र्निष्ठा कर्तरि न संभवतीति क्तवतुः प्रयोक्तव्यः। गत्यन्तरं नास्ति।

दारकीर्वा परायणाः (४, २८, २१)।

लोके दारिकेति प्रसिध्यति। दारकशब्दान्ङीब्ङीष्ङीनामप्राप्तेः स्त्रीत्व-विवक्षायां टाप् स्यात्। नूतनशब्दनिर्मित्साऽपराध्यति नानवबोधः।

बभावुपपतिं शान्ता शिखा शान्तमिवामलम् (४, २८, ४४)।

उपपतिं पतिसमीपे। समीपेऽर्थे उपशब्दस्य कर्मप्रवचनीयता केन ?

येनाग्रे विचचर्थ ह (४, २८, ५२)।

विचेरिथेति तु पाणिनीयाः।

हंसावहं च त्वं चार्य सखायौ मानसायनौ।
अभूताम् ... ... ... ... ... ... ... (४, २८, ५४)।

अस्मद्युत्तम इत्यभूमेति युक्तं स्यात्।

**दीक्षिता ब्रह्मसत्रेण सर्वभूतात्ममेधसा (४, ३१, २)।**

मेध इति स्वतन्त्रा सान्ता प्रकृतिर्नास्ति। मेधेति टाबन्तं धारणावतीं बुद्धिमाह।

**नयननलिनमुकुलयुगलमीषद्**
**विकचय्य (५, २, ६)।**

विकचप्रातिपदिकाद् धात्वर्थे णिचि ल्यपि रूपम्। उपसर्गसमानाकारस्य वेः पृथक्करणाल् ल्यबादेशः। तेन विकचय्येति परिनिष्ठितं रूपम् अदुष्टम्।

**कस्मै युयुङ्क्षसि (बाणौ) विचरन्न विद्मः (५, २, ८)।**

युयुक्षसीत्येव साधु। यदि साधुरूपं न जानीषे रूपसाधुत्वे वा संशेषे मा तादृशं प्रयुक्था मा च स्वयशो मलिनीकृथाः।

**चर्तुं तपोऽर्हसि मया सह (५, २, १५)।**

चर गतिभक्षणयोरुदात्तोपदेशः। तेन चरितुमितीटि रूपं साधु।

**चित्तं यतः प्रतिसरन्तु शिवाः सचिव्यः (५, २, १६)।**

सचिवशब्दान्ङीष्ङीन्ङीनामेकतमोपि न प्राप्नोति। टापि सचिवा इत्येव रूपम्।

**अर्वाक्तनाभिर्नाम रूपाकृतिभिः (५, ३, ४)।**

अर्वाक्छब्दात् टचुर्वा टचुल्वा प्रत्ययः। स्त्रियां ङीपि अर्वाक्तनीभिरित्येव रूपम्।

**नूनं प्रमत्तः कुरुते विकर्म**
**यदिन्द्रियप्रीतये आपृणोति (५, ५, ४)।**

पृङ् व्यायामे प्रायेण व्याङ्पूर्वः। तुदादिरात्मनेभाषः। तेन व्याप्रियत इति प्रयोक्तव्यम्।

**देवासुरेभ्यो मघवत्प्रधानाः (५, ५, २२)।**

देवा असुरेभ्य इत्येवं निर्दुष्टं वचः। सन्धिरार्ष इति कश्चिदृषिनिन्दको जल्पति।

**त्रिपर्वी सावित्रीम् (५, ९, ५)।**

टाबृचि इति टापि त्रिपदेत्येव साधु।

**भ्रातुरनुशासननिर्बन्धान्न्यवृत्सन्त (५, ९, ८)।**

न्यवृतन् इति वा लुङि बहुवचने रूपम्, न्यवर्तिषतेति वा।

**विसर्गरत्यर्थ्यभिजल्पशिल्पाः (५, ११, १०)।**

शिल्पं नित्यं क्लीबम्। शिल्पं कर्म कलादिकम् इत्यमरः।

**परस्परं चालषते निरन्धः (५, १३, ६)।**

निरन्धाः=निरन्नः। अन्ध इति सान्तं क्लीबमन्नवाचि।

**यो दुस्त्यजान् दारसुतान्**
**सुहृद्राज्यं हृदिस्पृशः (५, १४, ४३)।**

हृदिस्पृशो मनोज्ञान्। दुस्त्यजान् इति च द्वे विशेषणे। सुहृद्राज्यमिति नपुंसकेन सहोक्तौ नपुंसकेन शेषेण भवितव्यम्। अयं तु पुमांसं शेषयति। स दोषः।

**यन्निर्मितां कर्ह्यपि कर्मपर्वणीम् (५, १७, २४)।**

कर्माणि पर्वाणि यस्यास्ताम्। अन उपधालोपिनोऽन्यतरस्याम् इति नियमान्ङीब्न प्राप्नोति। अनुपधालोपी च पर्वन्शब्दः।

**तप्यन्त उग्रं तप ऐन्द्रियेधियः (५, १८, २२)।**

ऐन्द्रिय इन्द्रियविषये धीर्येषां ते। अलुक् समासस्तु न प्राप्नोति, अविधेः।

**अहो अमीषां किमकारि शोभनम् (५, १९, २१)।**

अमीभिरिति वक्तव्यम्। अनुक्ते कर्तरि तृतीया युक्ता।

**यतः प्रवृत्ता सरित्प्रवरा हाटकी नाम**
**भवयोर्वीर्येण (५, २४, १७)।**

भवश्च भवानी चेत्येकशेषेण भवाविति न सिध्यति। तल्लक्षणश्चेदेव विशेष इत्युक्तेः। आनुगागमोऽत्र स्त्रीप्रत्ययव्यतिरिक्तो विशेषकृत्।

**अमृजितकषायः को वाऽस्मद्विधः (५, २४, २६)।**

मृजेर्निष्ठायां मृष्टमित्येव। णिचि तु मार्जितम् इति वृद्धौ।

**दशकन्धरो योजनायुतायुतं दिग्विजय उच्चाटितः (५, २४, २७)।**

उच्चाटितः प्रक्षिप्तः। चट भेदने चुरादिः। योजनायुतायुतम् इत्यत्र द्वितीया केन। सप्तमी तु युज्यते।

**एतावतीर्हि राजन्पुंसः प्रवृत्तिलक्षणस्य धर्मस्य विपाकगतय उच्चावचा विसदृशाः (५, २५, १५)।** कञि विसदृशीरिति ङीपि रूपं साधु।

**अधस्ताद् भूमेरुपरिष्टाच्च जलात् (५, २६, ५)।**

षष्ठ्यतसर्थप्रत्ययेनेति षष्ठी युक्ता। भूमेर्जलस्येति वक्तव्यम्।

**कालोऽत्यगान्महान् राजन्नष्टाशीत्यायुषः समाः (६, १, २३)।**

अष्टाशीति अत्र विभक्तेर्लुक् केन ? वाचि स्वतन्त्रोऽयं कविः। यथास्मै रोचते तथा भाषते। कश्चिद् अष्टाशीत्या इति तृतीयान्तं मत्वा उपलक्षिता इत्यध्याहरति, न च पश्यति तथाभूतो व्यवहारो नास्तीति। न हि कश्चित् त्र्यहः कालोऽगादिति वक्तव्ये त्र्यहेण (उपलक्षितः) कालोऽगादिति वक्ति। वस्तुतो ऽष्टाशीतिरिति संख्येये वर्तते तेन समा इति प्रथमान्तेन सह समानाधिकरणेन भवितव्यम्।

**के यूयं प्रतिषेद्धारो धर्मराजस्य शासनम् (६, १, ३२)।**

ताच्छील्यस्यानभिप्रेतत्वात्तृन्न। तेन कृद्योगे कर्मणि द्वितीयाया अप्रसङ्गः।

**क्रीडन्तमनुगायन्तं हसन्तमनयान्तिके (६, १, ६०)।**

अनयाऽन्तिक इत्यत्र तृतीयाऽस्थाने। दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् इति षष्ठीपञ्चम्यौ विहिते।

**स कथं न्यर्पितात्मानं कृतमैत्रमचेतनम्।**
**विस्रम्भणीयो भूतानां सघृणो द्रोग्धुमर्हति (६, २, ६)।**

न्यर्पितात्मने इत्यादि सम्प्रदानचतुर्थ्या वक्तव्यम्।

**एतेनैव ह्यघोनोऽस्य कृतं स्यादघनिष्कृतम् (६, २, ८)।**

अघवत इति पाणिनीयाः। अयं तु मघवन्वद्रूपाणि नयति। अहो विभ्रमः।

**नातः परं कर्मनिबन्धकृन्तनम् (६, २, ४६)।**

कृन्तनमिति दुष्यति। कर्तनमित्येव शब्दः।

**द्रष्टुं च बिभ्यति ततः प्रभृति स्म राजन् (६, ३, ३४)।**

अत्र तुमुन्केन शास्त्रेण ?

**तत्क्षम्यतां स भगवान्पुरुषः पुराणो**
**नारायणः स्वपुरुषैर्यदसत्कृतं नः (६, ३, ३०)।**

क्षमतामिति तूचितम्। क्षम्यताम् इति लोटि प्रथमपुरुषैकवचने क्षमेर्वा क्षाम्यतेर्वा न सिध्यति। भ्वादिः क्षमिः सकर्मकः, दिवादिश्चाकर्मक इति निर्णयोऽस्मत्कृतो वाग्व्यवहारादर्शे कृतः। स तत्रैव दृश्यः।

**अस्तौषीद्धंसगुह्येन भगवन्तमधोक्षजम् (६, ४, २२)।**



अस्तावीदित्येवेति पाणिनीयाः।

**क्षौरपव्यम् (६, ५, ८)।**

क्षुरैः पविभिश्च निर्मितं क्षौरपव्यम् इति टीकाकृतः । क्षौरमिति शैषिकेणाणा सिध्यति नाम । पव्यम् इति यता न सिध्यति, अविधेः ।

**तद्गतीरबुधस्येह (६, ५, १५)।**

कृद्योगे षष्ठ्या तद्गतीनाम् इति वक्तव्यम् ।

**ऋते त्वां सौहृदघ्नं वै वैरंकरमवैरिणम् (६, ५, ३९)।**

वैरकार इत्येव तु पाणिनीयाः ।

**चक्रं युगान्तानलतिग्मनेमि**
**भ्रमत्समन्ताद्भगवत्प्रयुक्तम्**
**दन्दग्धि दन्दग्ध्यरिसैन्यमाशु (६, ८, २३)।**

अत्र दन्दग्धिपदस्याम्रेडनादिदं क्रियासमभिहारे यङ्लुगन्तस्य लोण्मध्यमैकवचनस्य रूपमिति भाति । तथा सति चक्रं सविशेषणं सम्बुद्धिः स्यात् । न च सम्बुद्धावित्थम्भूतं रूपं संभवति । अनन्तरेषु पद्येषु गदे दरेन्द्रचर्मन् इत्यादिनि सम्बोधनपदानि प्रयुक्तानि तत्साम्यादिहापि चक्रमिति सम्बोधनमिष्यते । आमन्त्रितमनङ्गीकृत्य न शक्या कवेरुक्तिः सङ्गमयितुम् ।

**द्विषामघोनां हर पापचक्षुषाम् (६, ८, २६)।**

अघवताम् इत्येव संस्कारवाञ्छब्दः । अन्यत्रापि मघवन्-शब्देन वर्णसाम्यमादायाऽज्ञवत् सम्प्रसारयति वकारम् ।

**स्वलाङ्गुलेनातितितर्त्ति सिन्धुम् (६, ९, २२)।**

अतितितर्त्ति इत्यपभ्रंशः । अतितितीर्षति इत्यस्यार्थे प्रयोगः । अन्यत्रापीह पुराणेऽपप्रयोग एष स्थित इति नापूर्वः ।

**नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति (६, ९, ३२)।**

अन्यारादितरर्ते—इत्यादिना विसर्गशब्दात्पञ्चम्येव युक्ता ।

**स शोच्यः स्थावरैरपि (६, १०, ८)।**

स्थावरेभ्य इति पञ्चमी स्थाने स्यात् । यथास्थितेऽनुक्ते कर्तरि तृतीययाऽनिष्टार्थगतिः स्यात् ।

**कालानुकूलैस्त्रिदशैः (६, ११, २)।**

कालोऽनुकूलो येषाम् । अनुकूलकालैरिति तु निर्दोषो न्यासः स्यात् । सप्तमीविशेषणे बहुव्रीहाविति विशेषणेन पूर्वं निपतितव्यम् ।

**नालं (नाडं) वनं यूथपतिर्यथोन्मदः (६, ११, ८)।**

नडानां समूहो नाडम्। अण्। पाशादिभ्यो य इति ये प्रत्यये 'नड्या' इति तु पाणिनीया इच्छन्ति।

**भवानतार्षीन्मायां वै**
**वैष्णवीं जनमोहिनीम् (६, १२, २०)।**

अतारीदिति तु पाणिनीयाः।

**बभौ रक्तस्रवोऽसुरः (६, १२, २६)।**

रक्तं स्रवति रक्तस्राव इति स्यात्। कर्मण्यण्।

**न नन्वयन्त्यप्रजं माम् (६, १४, २५)।**

समासान्ते कृते अप्रजसम् इत्येव परिनिष्ठितं रूपम्।

**ब्रह्मण्यो भगवद्भक्तो नावसीदितुमर्हति (६, १५, १९)।**

अवसत्तुमित्येव शब्दः। अनुदात्तोपदेशः सदिः।

**यां धारयन् सप्तरात्राद् द्रष्टा संकर्षणं प्रभुम् (६, १५, २७)।**

द्रष्टासीति लुटि रूपम्। द्रष्टा इति तु तृजन्तम्।

**गुणदोषविकल्पश्च भिदेव स्रजिवत्कृतः (६, १७, ३०)।**

स्रजिवत् इत्यार्षमिति श्रीधरः। वतिप्रत्यये सप्तम्याः श्रवणं केनाङ्गीक्रियते विना भागवतकारं कविमुत्तमम्।

**नाहं विरिञ्चो न कुमारनारदौ**
**न ब्रह्मपुत्रा मुनयः सुरेशाः।**
**विदाम ... ... ... ... ... (६, १७, ३२)।**

विद्म इति लटि साधुरूपम्। तत्रापि बहुवचनं न युक्तम्। विदिक्रियया‌त्र नञः सम्बन्धः। कर्तृभेदान्निषिद्धक्रियाया आवृत्तौ वाक्यभेदः। अहं न वेद, विरिञ्चो न वेदेत्येवमादीनि वाक्यान्युपप्लवन्ते। अस्मद्युत्तम इत्युत्तमः पुरुषः। आश्रये तु तिङः स्मृता इति कर्त्रैक्ये मिवेव, न तु मः।

**तेऽपि चैकैकशो वृषणाः सप्तधा नापि मम्रिरे (६, १८, ७२)।**

मम्रुरिति पाणिनीयाः। छन्दोऽनुकारि एष कविः पश्य देवस्य काव्यं यो न ममार न जीर्यति इति श्रुतौ श्रूयमाणं ममारेति पदं कथं व्यस्मार्षीत्।

**अलं ते निरपेक्षाय पूर्णकाम नमोस्तु ते (६, १९, ४)।**

ते तुभ्यं पर्याप्तं नान्यैः किञ्चित्कार्यमस्ति। तेऽलंभावः पर्याप्तिरस्ति, ते प्राकाम्यमस्ति। यद्येषोऽर्थश्चतुर्थी केन ? नमःस्वस्ति-स्वाहेत्यादिना तु सा दुर्लभा। तत्र सामर्थ्यं तुल्यबलतार्थं इति स्थितम्। अलं मल्लो मल्लायेति मूर्धाभिषिक्तमुदाहरणम्।

**नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि (७, १, २)।**

असुरेष्विति वाच्यम्। सम्प्रदानता तादर्थ्यं वा नास्ति येन चतुर्थी स्थाने स्यात्। अगुणादितीष्यते, उद्वेगस्त्रासो भवति यतः।

**रजस्तमस्कान् प्रमिणोत्युरुश्रवाः (७, १, ११)।**

मिञ् प्रक्षेपे इति धातुः। श्नुविकरणः। णत्वं केन ?

**तुष्टः प्राह तमाभाष्य शृण्वत्यास्तत्सदः कथाः (७, १, २१)।**

सदस इति तु पाणिनीयाः। सदः सान्तं स्त्री च नपुंसकं च। कश्चित्समाधित्सायां सरभस एवमाह—**सीदन्ति निषीदन्ति अस्यामिति सत् सभा, तस्याः।** स प्रष्टव्य क्वेवान्यत्रात्रार्थे सदिति शब्दो व्यवहृत उपलब्धः, केन वाभिधानिकेन परिषत्पर्यायेषु समनुक्रान्तः।

**मातृष्वस्रेयो वश्चैद्यः (७, १, ३२)।**

ढकि अन्त्यलोपे मातृष्वसेय इत्येव रूपमिष्टं पाणिनीयानाम्।

**उन्नेष्यति व्रजम्··· नेत्रे पिधाय स बलोऽधिगम्यवीर्यः (७, २, २९)।**

नेत्रे पिधायेति भिन्नकर्तृकत्वे क्त्वा न युज्यत इति पश्यन् पुराणकारपरीप्सया प्रवृत्तः कश्चित् पिधाय्येति पाठं कल्पयति। न च प्रणिभालयति णिचि पिधाप्येति रूपं भवति न पिधाय्येति।

**स्वयं सधर्मा अपि शोचन्त्यपार्थम् (७, २, ३७)।**

सधर्माण इत्यनिचि समासान्ते परिनिष्ठितं रूपम्। समासान्तानामनित्यत्वेप्यकृतसमासान्तो धर्मान्तो बहुव्रीहिर्न क्वचिच्छ्रूयते।

**यत्रागतस्तत्र गतं मनुष्यम् (७, २, ३७)।**

पञ्चम्यन्तात् तसिर्विहितः, तेन यत इति वक्तव्यम्।

**नान्यथा शक्यते कर्तुं शोचतामिति (७, २, ४९)।**

अनुक्ते कर्तरि तृतीयया शोचद्भिरिति वक्तव्यम्।

**नियच्छ मन्युं कदद्वाः स्म मा नः (७, ५, २८)।**

कदिति स्वतन्त्रा प्रकृतिर्नास्ति। आचार्यस्तु को कत् तत्पुरुषेऽचि इति तत्पुरुषे समासेऽजाद्युत्तरपदे कोः कदादेशमनुशास्ति। इह तु अदा इति लुङि रूपमजादि। तेनात्र कदादेशस्याप्रसङ्गः।

**न चेद् गुरुमुखीयं ते कुतोऽभद्राऽसती मतिः (७, ५, २९)।**

गुरुर्मुखमुद्भवहेतुर्यस्या इति विग्रहे ङीष् दुर्लभः। स्वाङ्गात्तस्य प्राप्तेः।

**सौहृदं दुस्त्यजं पित्रोरहाद्यः पञ्चहायनः (७, ५, ३६)।**

लुङि अहासीदिति पाणिनीयाः।

**संभोजशयनासनैः (७, ५, ३८)।**

संभोज इति भावे घञि न सिध्यति। चजोः कुरिति कुत्वं दुर्वारम्। कर्तर्यच्यपि न सिध्यति, कर्त्रर्थो न घटते यतः।

**त्यजेत कोशस्कृदिवेहमानः (७, ६, १३)।**

कोशः कृमिकोशः। कोशं करोतीति कोशकृत् स्यात्। सुट् केन। आर्ष इति कश्चिच्छब्दाजडः।

**औपस्थ्यजैह्व्यं बहुमन्यमानः (७, ६, १३)।**

शरीरावयवाद्यति उपस्थ्यजिह्व्ये रूपे सिध्यतः। ताभ्यां यदन्ताभ्यां स्वार्थेऽणं करोति। तद्धितप्रियता परोक्षप्रियता चैत्र सममपराध्यतो न प्रज्ञा।

**सारंजुषां चरणयोरुपगायतां नः (७, ६, २५)।**

क्विपि पूर्वपदस्य मुम् दुर्लभः।

**दस्यून्पुरा षण्ण विजित्य लुम्पतो**
**मन्यन्त एके स्वजिता दिशो दश (७, ८, ११)।**

षण्ण इत्यपाणिनीयः सन्धिः। न पदान्ताट्टोरनाम् इति शासनातिक्रमः।

**द्वार्यूर आपत्य ददार लीलया (७, ८, २९)।**

द्वारि ऊरौ इत्यावादेशे सति लोपः शाकल्यस्येति वकारलोपे द्वार्यूरा इति स्यात्।

**अञ्जस्तितर्म्यनुगृणन् गुणविप्रमुक्तः (७, ९, १८)।**

तातर्मीति तु पाणिनीया इच्छन्ति।

**दृष्टा मया ··· आयुः श्रियो विभव**
**इच्छति याञ्जनोऽयम् (७, ९, २३)।**

आयुर्नपुंसकम्। श्रीः स्त्री। विभवः पुमान्। एकशेषे दृष्टानि (दृष्टं वा) यानि (यद्वा) इति नपुंसकशेष इष्यते। अयं तु विपरीतं पुमांसं शेषयति।

**°व्याख्यारहो जप समाधय आपवर्ग्याः (७, ९, ४६)।**

अपवर्गो मोक्षः, तत्साधनभूता आपवर्ग्याः। सिद्धिस्तु शास्त्रेण दुर्लभा।

**कीर्तिं विशुद्धां सुरलोकगीतां**
**विताय मामेष्यसि मुक्तबन्धः (७, १०, १३)।**

विपूर्वात्तनोतेर्ल्यपि वितत्येत्येव शब्दः। यक्ति प्रत्यय आत्वविकल्पः, न ल्यपि।

**कीटः पेशस्कृतो यथा (७, १०, ३९)।**

पेशस्कृदित्यत्र सुड् दुर्लभः।

**तद्विज्ञाय महायोगी रसपालानिवं जगौ (७, १०, ६३)।**

गायतिः शब्दकर्मा। न लोके न च वेदेऽयं द्विकर्मको दृष्टः।

**प्राणार्थवद् अयम् (७, १३, ३२)।**

प्राणाश्चार्थाश्च तेऽस्य सन्तीति प्राणार्थी इति शब्दः। द्वन्द्वोपताप-गर्ह्यात्प्राणिस्थादिनिरिति इनिः। मतुपोऽपवादः।

**सत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु।**
**विमुच्येत् ··· ··· ··· ··· (७, १४, ४)।**

विमुञ्चेदिति कर्तरि लिङि निर्दिष्टं स्यात्। विमुच्येत् इत्यप्रसक्तः कर्मणि लिङि प्रयोगः। सोऽपि भ्रष्टः।

**उपासत उपास्तापि नार्थदा पुरुषद्विषाम् (७, १४, ४०)।**

उपासितेत्येव शब्दः। छन्दोनुरोधाद् इडागमो न कृत इति भाति।

**सदसस्पतयोप्येके असन्तोषात्पतन्त्यधः (७, १५, २१)।**

सोऽपदादौ (८, ३, ३८) इत्यनेन निषेधाद् विसर्जनीयस्य सकारो न प्राप्नोति।

**एकैकश्येनानुपूर्वं भूत्वा भूत्वेह जायते (७, १५, ५१)।**

एकैकश इत्यत्र एकशब्दो वीप्सायां द्विरुक्तः। एक एक एकैकः। उक्तायामपि वीप्सायां पुनः शः क्रियते शिष्टप्रयोगेषु तथा दर्शनात्। एकैकश इति सकारान्तमव्ययम्। ततो भावे ष्यञ्। सिध्यति रूपं प्रयोगस्तु न प्रसिध्यति।

**उपहूता विश्वसृग्भिर्हरिगाथोपगायने (७, १५, ७१)।**

विश्वसृड्भिरिति तु पाणिनीयाः। उपगाने इति च।

**... अमर्षया। अभिगर्जन्ति हरयः**
**श्लाघिनः परशङ्कया (८, २, १६)।**

अमर्षेति टाबन्तं निर्घात इवाहन्ति श्रवसी। घञन्ताः पुंसि प्रसिद्धाः। ततष्टाबित्यप्रतर्क्यम्।

**जजाप परमं जाप्यम् (८, ३, १)।**

व्यधजपोरनुपसर्गे इत्यपि जप्यमित्येव साधु।

**न नामरूपे गुणदोष एव वा (८, ३, ८)।**

गुणदोषमिति वा वाच्यं गुणदोषाविति वा। पुंस्येकवद्भावो न दृष्टः। स नपुंसकम् इति समाहारद्वन्द्वो नपुंकं भवति।

**संपश्यतां हरिरमूमुचदुच्छ्रियाणाम् (८, ३, ३३)।**

उत्कृष्टा श्रीर्येषां (देवानां) त उच्छ्रियः। षष्ठ्यां बहुवचन उच्छ्रियामिति वा स्यान्नदीत्वाभाव इयङि। नदीत्वे तु उच्छ्रीणामित्यामो नुटि। इयङि नुडागमस्य प्रसङ्ग एव न।

**अगायत यशोधाम कीर्तन्यगुणसत्कथाम् (८, ४, ४)।**

कीर्तन्यमित्यपशब्दः। इहैव पुराणेऽयं प्रयुक्त इति कवेरुपज्ञा। सतोऽन्वाख्यानमिष्यते नासत इति कीर्तनमर्हतीति कीर्तन्य इति दण्डादिभ्यो यति व्युत्पत्त्या साधुत्वप्रसाधनप्रयासोऽपार्थः।

**अभिनन्द्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे (८, ५, १४)।**

अभ्याख्यातुमिति तु पाणिनीयाः। चक्षिङः ख्याञादेश आर्धधातुके।

**गतासवो निपतिता नोत्तिष्ठेरन् स्म भूयशः (८, ५, १५)।**



भूयश इत्यपभ्रंशः। अपभ्रंशानां खन्यामस्यामेव कृत्यां विलोक्यते नेतरत्र।

**विपश्चितं प्राणमनोधियात्मनाम् (८, ५, २७)।**

०धियात्मनाम् इत्यत्र इयङ् न प्राप्नोति अजादिप्रत्यये परे तद्विधेः।

**न यस्य कश्चातितर्त्ति मायाम् (८, ५, ३०)।**

अतितार्त्ति इत्येवेति पाणिनीयाः। अन्यत्रापीह पुराण एष दुष्प्रयोगः स्थितः।

**द्रव्यं वयः कर्म गुणान् विशेषं**
**यद्योगमायाविहितान् वदन्ति (८, ५, ४३)।**

योगमायाविहितान् इत्यत्र नपुंसकैकशेषो युक्तः। विहितं विहितानीति वा वक्तव्यम्।

**त्रिलोकान्पश्यास्यमुष्मिन्नु ह विश्वमूर्त्तौ (८, ६, ९)।**

दिक्संख्ये संज्ञायामिति नियमात्समानाधिकरणस्तत्पुरुषो नानुज्ञायते सप्तर्षय इत्यत्र यथा।

**ते नूनमूतिमविदंस्तव हातलज्जाः (८, ७, ३३)।**

अविदन् इत्यपाणिनीयम्। अविदुरित्येव तु पाणिनीयम्। हातलज्जा इत्यत्र हातमित्यप्यपाणिनीयम्। ओहाको निष्ठायां हीनमिति भवति। ओहाङश्चेन्निष्ठायां रूपमिष्यते, न दोषाय।

**आभिषेचनिका भूमिराहरत् सकलौषधीः (८, ८, ११)।**

अभिषेचनं प्रयोजनं यासामोषधीनां ता आभिषेचनिक्यः। प्रयोजने ठकि स्त्रियां ङीप् स्यात्। टापस्तु प्रसङ्ग एव न।

**त्रैविष्टपेयादिषु नान्वविन्दत (८, ८, १९)।**

त्रैविष्टपेया देवाः। ढगार्ष इति कस्य चिच्छ्रद्धाजडस्य प्रलापः।

**आयुर्वेददृग् इज्यभाक् (८, ८, ३५)।**

व्रजयजोर्भाव इति भावे स्त्रियां क्यपि सम्प्रसारणे टापि इज्या इति रूपम्। तस्य ह्रस्वः केन? ङ्यापोः संज्ञाछन्दसोर्बहुलमित्यनेनेति चेत्। न। तेन संज्ञायां वर्तमानस्य ह्रस्वो विधीयते। न चेज्या संज्ञा। ण्यति सम्प्रसारणाप्रसङ्गात्पुंसि इज्य इति न सिध्यति, ण्विन्प्रत्ययान्ते भावशब्दे तस्य पूर्वपदस्यायोगाच्च।

**तस्यासन् सर्वतो यानैर्यूथानां पतयोऽसुराः (८, १०, १९)।**

षष्ठ्यपवादः तमिति द्वितीयोपपदविभक्तिर्युक्ता। तस्यासन् सर्वतो देवा नानावाहा ध्वजायुधाः (८, १०, २६) इत्यत्रापि पूर्ववदस्थाने षष्ठी।

**वणिक्पथा भिन्ननवो यथार्णवे (८, ११, २५) ।**

**उरः प्रभृतिभ्यः कप्** (पा० ५. ४. १५१) । अत्र गणे पुमान् अनड्वान् पयो नौर्लक्ष्मीरिति विभक्त्यन्ताः पठ्यन्ते न प्रातिपदिकानि । तत्रेदं प्रयोजनम् एकवचनान्तानामेव ग्रहणं विज्ञायेत द्विवचनबहुवचनान्तानां मा भूदिति । तत्र शेषाद्विभाषेति विकल्प एवेति वृत्तिः । तेनैकत्वविवक्षायां नित्यं कपि भिन्ननौका इति स्यात् । बहुत्वविवक्षायां तु शेषाद्विभाषेति कबभावपक्षे भिन्ननाव इत्येव । ह्रस्वत्वस्य तु संभवो नेति प्रकृते भिन्ननव इत्यपशब्द एव । गोस्त्रियोरुपसर्जन-स्येत्यस्याप्रवृत्तेः । न हि नौशब्दः स्त्रीप्रत्ययान्तः ।

**सभाजितो भगवता सादरं सोमया भवः (८, १२, ३) ।**

अत्र सोमया (=उमया सह) इत्यत्र वोपसर्जनस्येति सहस्य सभावो दुर्लभ इति पश्यन्तो व्याकुलस्वान्ताः केचिदित्थमाकुलयन्ति ग्रन्थम्—**स उमयेति विवक्षिते सोऽचि लोपे चेत्पादपूरणम् इत्यनेन सुलोपः** । स इति भवं निर्दिशति । उमया सहितः स भवः सभाजित इत्यन्वयं चाचक्षते । सर्वनाम्ना निर्देशस्या-पार्थकतां च नेक्षन्ते । सह देव्या ययौ द्रष्टुमित्यनन्तरपूर्वमुक्तम् । सहैवोमया सादरं सभाजित इत्यनाविलमपि ग्रन्थमाविलयन्ति पाणिनीयानुसारितामन्वेषमाणा वाचि स्वतन्त्रतां चास्य कवेः प्रस्मरन्ति ।

**दिष्टया त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः (८, १२, ३८) ।**

निष्ठायां (प्रकृतौ) स्थित इति सप्तम्या निर्देशोऽनपभ्रष्टं रूपम् ।

**मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् (८, १३, २४) ।**

एकादश इत्येव साधु । तस्य पूरणे डट् । विंशत्यादिभ्यस् तमडागम उक्तो न तु दशान्तानाम् । अयं त्वस्थाने करोति विकरोति च ।

**सर्वे पुरुषशासनाः (८, १४, २) ।**

पुरुषः परमात्मा शासनः शासिता येषां ते । कर्तरि ल्युः । न च नन्द्यादिषु शासन इति पठ्यते ।

**नैनं कश्चित् कुतो वापि प्रतिव्योढुमधीश्वरः (८, १५, २६) ।**

प्रतिव्योढुम् प्रतिरोद्धुम् । प्रतिवोढुमिति तु पाणिनीया इच्छन्ति । यकाराधिक्यमार्षमिति विवेकविश्रान्तं वचः ।

**अन्नाद्येनाश्वपाकांश्च प्रीणयेत् समुपागतान् (८, १६, ५५) ।**



आङ् अभिविधौ । आङ् मर्यादावचन इत्यव्ययीभावे आ-श्वपाकम् इति स्यात् ।

**उल्लसच्छ्रीवदनाम्बुजः पुमान् (८, १८, २)।**

उल्लसन्ती श्रीः शोभा यस्य (वदनाम्बुजस्य) तद् उल्लसच्छ्रि। ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वः कुतो न ?

**तथा पुनीतास्तनुभिः पदैस्तव (८, १८, ३१)।**

अद्यत्वे हिन्द्यां पूतेर्थे पुनीतशब्दः प्रसरति प्रायेण। इह तु तस्य प्रयोगः परं कौतूहलं जनयति। अर्वाक्कालोऽयं कविः स्यात्। क्त आर्धधातुके कर्मणि प्रत्यये श्नाविकरणस्य कोऽवकाशः ?

**हत्वा मैनां हरेर्युद्धे शयीत निहतो मया (८, २०, १३)।**

एनाम् इति पृथिव्याः प्रतिनिर्देशः। अस्मिन्पद्येऽनन्तरपूर्वे च पृथिवी-शब्दो न श्रूयते यमेतदा सन्निकृष्टपरामर्शिना निर्दिशेत्। काममेकादशे क्षिति-मीप्सितामिति पठ्यते। दूरव्यवहितानां परामर्शं तु नालं सर्वनामानि कर्तुम्।

**कलशं हैममवनेजन्यपां भृतम् (८, २०, १७)।**

अवनेजन्यम् इत्यपशब्दः। अवनेजनमर्हन्तीत्यवनेजन्याः (आपः)। अर्थासङ्गती रूपासिद्धिश्च। आपो निर्णेजिका भवन्ति न तु निर्णेज्याः। दीर्घत्वा-भावाय च शकन्ध्वादित्वं कल्पनीयं भवति।

**गृह्यमाणेऽसुरवतौ विष्णुना प्रभविष्णुना (८, २१, २७)।**

भुवश्चेति च्छन्दस्येव इष्णुज्विधिः।

**पदैकेन मयाऽऽक्रान्तो**
**भूलोकः खं दिशस्तनोः (८, २१, ३१)।**

तनोरिति तृतीयार्थे षष्ठी।

**प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलम्भते (८, २१, ३३)।**

मन्ये वृत्तपरिरिरक्षिषया संयोगेन गुरुत्वलाभाय नुमं करोति।

**त्वं नूनमसुराणां नः पारोक्ष्यः परमो गुरुः।**
**योऽनेकमदान्धानां विभ्रंशं चक्षुरादिशत् (८, २२, ५)।**

यस्त्वमिति सम्बन्धः। युष्मद्युपपदे स्थानिन्यपि मध्यम इति मध्यम-पुरुषस्तूचितः।

**मानस्तम्भनिमित्तानां जन्मादीनां समन्ततः**
**सर्वश्रेयःप्रतीपानां हन्त मुह्येन्न मत्परः (८, २२, २७)।**

**तृतीयार्थे षष्ठी कस्मात् ? प्रकृतेः करणे तृतीया तु न्याय्या।**

**एष ईशकृतो वीर सम्बन्धो नौ न पौरुषः (९, १८, २१)।**

पुरुषेण कृत इत्यर्थे पुरुषाद् वधविकारसमूहतेन कृतेषु इति वाच्यम् इति ढञि पौरुषेय इति स्यात्। अणन्तं पौरुषं समुद्योगं विक्रान्तं पुरुषकर्म वाह।

**त्वां ममार्यास्तताभाङ्क्षुः (९, ४, २)।**

अभाक्षुरिति पाणिनीया रूपमिच्छन्ति। मन्येऽयं वैकृतं रोचयते। भञ्जेस्त्वर्थासङ्गत्या प्रयोगो नायम्।

**ईजेऽश्वमेधैः ... ... ...**
**... ... ... ...**
**धन्वन्यभिस्रोतमसौ सरस्वतीम् (९, ४, २२)।**

सरस्वत्याः स्रोतसोऽभिमुखमिति विवक्षति। अभिस्रोतं सरस्वतीम् इत्यनन्विते पदे। स्रोत इत्यदन्तं दुर्लभम्। अभिस्रोत इत्याभिमुख्येऽव्ययीभावो वा, कर्मप्रवचनीयेनाभिना योगे द्वितीया वा। सरस्वतीम् इति द्वितीयान्तं तु सर्वथाऽनन्वितं तिष्ठति।

**नमः सुनाभाखिलधर्मसेतवे**
**... ... ... ... ...**
**मनोजवायाद्भुतकर्मणे गृणे (९, ५, ६)।**

नमो गृणे नमो वच्मि, नमस्करोमीत्यर्थः। उपपदविभक्तेः कारकविभक्तिर्बलीयसीति धर्मसेत्वादिभ्यो द्वितीया कर्मविभक्तिर्युक्ता भवति।

**सान्नाहिको यदा राजन् राजन्योऽथ पशुः शुचिः (९, ७, १४)।**

ठकि व्युत्पन्नः सान्नाहिकशब्दः कवचहरं (कवचहरणयोग्यवयसम्) कुमारं नाह। तमर्थं च विवक्षति। ऐतरेये ब्राह्मणे (शुनःशेपाख्याने) सान्नाहुक इति स्थितम्। तत्र सन्नह्यतेस्ताच्छील्य उकञ् द्रष्टव्यः। युक्तः स निर्देशः। तमिमं निर्देशमनुकरोति अनुकुर्वंश्च विकरोति।

**मुक्तोदरोऽयजद् देवान्वरुणादीन् महत्कथः (९, ७, २२)।**

महती कथाऽस्येति बहुव्रीहौ महाकथ इत्यवदातं रूपम्। तत्किं न न्यस्यति।

**शुनःशेपस्य माहात्म्यमुपरिष्टात्प्रचक्ष्यते (९, ७, २४)।**

प्रख्यास्यत इति तु पाणिनीयाः।

**हन्यतां हन्यतां पाप इति षष्टिसहस्रिण: (९, ८, ११)।**

अस्थाने मत्वर्थीय इनि:। षष्टि: सहस्राणि सन्त्येषाम् इति विग्रहे के ते सन्तीत्याकाङ्क्षोतिष्ठन्ती न शाम्यति। अनिष्टार्थप्रसङ्गश्च भवति। ते सगरपुत्रा: षष्टि: सहस्राणि सन्ति न तु षष्टि: सहस्राणि केप्यज्ञातरूपा: पदार्थास्तेषां सन्तीति चिकथयिषति कवि:। एषोऽस्य स्वभावोऽन्यथा विवक्षति, अन्यथा च वक्ति।

**दृष्ट्वा विसिस्मिरे राजन् (९, ८, १९)।**

विसिष्मियिर इत्येवानवद्यं रूपमिच्छन्ति पाणिनीया:। नानेन सुगृहीतं व्याकरणम्। गृहीती वा तत्र सन्मतया विकरोति वाचम्।

**वैरूप्याच्छूर्पणख्या: (९, १०, ४)।**

नखमुखात्संज्ञायामिति ङीष्-निषेध:। णत्वमपि पूर्वपदात्संज्ञायामग इति संज्ञायामेव। तेन शूर्पणखाया इति प्रकृते युज्यते।

**प्रियविरहरुषा (९, १०, ४)।**

प्रियया विरह इति प्रियाविरह इति वक्तव्यम्। ह्रस्व: केन? कश्चित्कलत्रशब्दं समानाधिकरणमध्याहरति। अध्याहारो हि दोषतादवस्थ्यस्य स्वीकारो नाम, न समाधि:।

**त्रिशतोपनीतम् (धनु:) (९, १०, ६)।**

त्रिशतं त्र्यधिकं शतं भवति, न तु शतत्रयम्। सोऽर्थस्तु व्यासेनैव शक्यो वक्तुम्। त्रिभि: शतैरुपनीतम् इति शोभनं वच: स्यात्।

**इत्ययं तदलङ्कारवासोभ्यामवशेषित: (९, ११, ४)।**

शिष असर्वोपयोग इति धातु:। तृतीया केन।

**स्त्रीपुंप्रसङ्ग एतादृक् सर्वत्र त्रासमावह: (९, ११, १७)।**

त्रासम् इति द्वितीया नोचिता। कृद्योगलक्षणा षष्ठ्येव तूचिता। स्त्रीपुंप्रसङ्ग इत्यपि दुष्यति। समासान्ते स्त्रीपुंसप्रसङ्ग इत्येव साधु। वृत्तभङ्ग-भयात्समासान्तो न कृत इति जाने।

**बाहून् दशशतं लेभे (९, १५, १८)।**

दश शतानीति व्यासेन वाच्यम्। यथास्थिते तु दशाधिकं शतमित्यर्थ: प्रतीयेत।

**वैरं सिसाधयिषवो लब्धच्छिद्रा उपासत** (९, १६, १०)।

सिषाधयिषव इत्येव शब्दोऽभ्यासादुत्तरस्य षत्वे।

**एकदाऽऽश्रमतो रामे सभ्रातरि वनं गते** (९, १६, १०)।

नद्यृतश्चेति कपः प्रसङ्गः। स न कृत इति दोषः। न च वन्दिते भ्रातुरिति कब्निषेधः शक्यः कर्तुम्। तस्य प्रशस्तभ्राता सुभ्राता इत्यादिष्वेव सत्त्वात्। तत्र वन्दितत्वस्य प्रशस्तादिभिः शब्दैरुक्तत्वात्।

**धन्वन्तरि दैर्घतम आयुर्वेदप्रवर्तकः** (९, १७, ४)।

दैर्घतमस इति तु पाणिनीयाः।

**इतीमे काशयो भूपाः क्षत्रवृद्धान्वयायिनः** (९, १७, १०)।

क्षत्रवृद्धान्वयिन इति विवक्षति। रूपं तु सहेलं सिध्यति। कश्चिदाह—**क्षत्रवृद्धस्यान्वयम् अयितुं शीलं येषां त इति विग्रह इति**। कामं सिध्यति, अर्थस्तु न प्रसिध्यति। ताच्छील्ये णिनिः, न चात्र ताच्छील्यमस्ति।

**रुषा श्वसन्त्युरङ्गीव** (९, १८, १५)।

उरसो लोपश्चेति सकारलोप उरगीत्येव साधु।

**सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम्।**
**कुर्वन्निडविडाकारं नाशक्नोत् पथि सन्धितुम्** (९, १९, ९)॥

प्रसादितुम्, सन्धितुम् इत्युभे अपभ्रष्टे रूपे। णिलोपाप्रसङ्गात्। अनिटि स शिष्टः, इह तु इडादौ तुमुनि कृत इति न शास्त्रमनुविधत्ते कविः।

**यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।**
**न दुह्यन्ति मनः प्रीतिं पुंसः कामहतस्य ते** (९, १९, १३)।

एकशेषे ते इति दुष्टम्। नपुंसकैकशेषस्तु न्याय्यः। दुह्यन्तीति चापशब्दः।

**बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम्** (९, २२, ४९)।

भाव्याः साध्या इत्यनर्थान्तरम्। भाव्या भाविन इति तु विवक्षति।

**अमरञ्जयैर्देवव्रताद्यतिरथैः** (१०, १, ५)।

अमरञ्जयैरिति स्वकपोलकल्पितम्। मुमागमस्याविधेः।

**भ्रातरं चावधीत्कंसं मातुरद्धाऽतदर्हणम्** (१०, १, १०)।

तच्छब्दे कर्मण्युपपदेऽर्हतेः कर्तरि ल्युर्वा ल्युड् वा दुर्लभः। अर्हः (३, २, १२) इत्यनेनाच्-प्रत्ययः विधीयते। तेनातदर्हम् इत्येव शब्दः।

**न नामरूपे गुणजन्मकर्मभि-**
**र्निरूपितव्ये तव तस्य साक्षिणः (१०, २, ३६)।**

निरूपयितव्ये इत्येव शब्दः। अनित्यण्यन्ताश्चुरादय इति चेत्। आचष्टां भवान् किं क्वचिन्निरूपयतीत्यर्थे निरूपतीति प्रयोगो नयनयोरयनं यातः।

**मन्दं मन्दं जलधरा जगर्जुरनुसागरम् (१०, ३, ७)।**

अनुसागरम्=सागरेण सह। सागरोपि जगर्जेतिभावः। अत्र चोद्यते। सहार्थेऽनुरप्रसिद्धः। अनुसागरम् इति समस्तं चेदनुना सहार्थेन समासः केन? व्यस्तं चेत् सहार्थेऽनोः कर्मप्रवचनीयता केन? तदभावे च सागरम् इत्यत्र द्वितीया कथम्। अनुकृतः सागरः समुद्रो यत्र कर्मणि (गर्जनकर्मणि) तद्यथा स्यात्तथेति क्रियाविशेषणम्। एवमपि दोषान्निर्मोक्षो न। जलधराः समुद्रवज्जगर्जुरित्यर्थात्। गम्भीरघोषो हि समुद्रो मन्दध्वानाश्च मेघा इति सादृश्यविघटको विरोध आपद्यते। स दुष्परिहरः।

**निर्व्यूह्यमाना निहनिष्यसे चमूः (१०, ३, २१)।**

निर्व्युह्यमाणा इति तु पाणिनीया रूपमिच्छन्ति। निर्विभ्यामुपसृष्टस्य वहेः कर्मणि शानचि रूपम्। कृत्यच इति नित्यं णत्वमिष्यते। सम्प्रसारण-दीर्घस्याप्राप्तेर्ह्रस्वोकारमध्यः पाठ एव निरवद्यः।

**मा शोचतं महाभागौ स्वात्मजान् स्वकृतं भुजः (१०, ४, १८)।**

स्वकृतमिति द्वितीया नोपपद्यते। कृद्योगलक्षणा षष्ठ्येवोपपद्यते।

**हरिद्राचूर्णतैलाद्भिः (१०, ५, १२)।**

समासान्तं कृत्वा हरिद्राचूर्णतैलापैरिति वक्तव्यम्।

**नन्दः कंसस्य वार्षिक्यं करं दातुं कुरूद्वह (१०, ५, १९)।**

वर्षान्ते देयः करो वार्षिकः। उक्तेऽर्थे प्रत्ययान्तरस्य कः प्रसङ्गः। वार्षिके साधुर्वार्षिक्य इति कल्पनाऽवज्ञा प्रज्ञायाः।

**कच्चित्पशव्यं निरुजं भूर्यम्बुतृणवीरुधम् (वनम्) (१०, ५, २६)।**

निरुजमित्यपभ्रंशः, °वीरुधमिति च। पूर्वत्र दीर्घाभावो दुष्यति, उत्तरत्र समासान्तोऽकारः। कश्चिदाह—वीरुधेति हलन्तात्टापि रूपम्, ततः समास इति। स प्रष्टव्यो वीरुधेति शिष्टप्रयोगेषु क्व दृष्टम्?

**योषित्वा माययात्मानम् (१०, ६, ४) ।**

योषित्वा=योषितं कृत्वा । तत्करोति तदाचष्टे इति योषित्प्रातिपदिकाण्णिचि क्त्व इटि णिलोपो दुर्लभः । अनिटि तद्विधेः । णाविष्ठवद्भावेन टिलोपः । तेन 'योषि' इति ण्यन्तो धातुः । ततः क्त्व इटि गुणेऽयादेशे योषयित्वेति व्यवहार्यं रूपं सिध्यति । आचारे क्विपं कृत्वा सिध्यति रूपम् इति चेन्न । क्विबन्तात् क्त्व इटि सति योषिदित्वेति रूपं निष्पन्नं भवति । अर्थासङ्गतिश्च । आचारक्विबन्तानां धातूनामकर्मकत्वदर्शनात् ।

**तावङ्घ्रियुग्ममनुकृष्य सरीसृपन्तौ (१०, ८, २२) ।**

यङ्लुक्यभ्यस्तत्वाच्छतरि नुम् दुर्लभः । सरीसृपतावित्येव निर्दुष्टं रूपम् । अर्थासङ्गतिश्च । नित्यं कौटिल्ये गताविति कौटिल्ये गम्यमाने यङ् । तेन कुटिलं सर्पन्तावित्यर्थः स्यात् । स च नेष्टः ।

**मर्कान्मोक्ष्यन् विभजति (१०, ८, २९) ।**

न हि मर्का (मर्कटाः) विभज्यन्ते किन्तर्हि दधिपयसी विभज्येते । तेभ्यस्तु विभज्य दीयेते इति तेषां सम्प्रदानता सिद्धा । सिद्धायां सम्प्रदानतायां कर्मता कथं कल्प्यतेऽन्तर्वाणिना कविना ।

**जघास हैयङ्गवमन्तरं गतः (१०, ९, ६) ।**

हैयङ्गवीनं संज्ञायाम् इति निपातितम् । हैयङ्गवमिति स्वकपोलकल्पितम् ।

**हस्ते गृहीत्वा भिषयन्त्यवागुरत् (१०, ९, ११) ।**

भीषयमाणा इत्येवेति पाणिनीयाः ।

**इयेष किल तं बद्धुम् (१०, ९, १२) ।**

अनुनासिकलोपः केन ? प्रभवन्त्या कवेरिच्छया ।

**इत्यन्तरेणार्जुनयोः कृष्णस्तु यमयोर्ययौ (१०, १०, २६) ।**

अन्तरेणार्जुनाविति वाच्यम् । अन्तरान्तरेण युक्ते इति द्वितीयाशासनात् ।

**परमविक्रमितातिवेपस्कन्धप्रवालविटपौ (अर्जुनौ) (१०, १०, २७) ।**

विक्रान्तमित्येव शब्दः ।

**निलायनैः सेतुबन्धैः (१०, ११, ५९) ।**



उपसर्गस्यायतौ इत्यनेन निरो रेफस्य लत्वं दुर्लभम् । आङा व्यवधानात् ।

तस्मिन्निति निर्दिष्टे पूर्वस्येत्यव्यवहितपूर्वस्योपसर्गस्य यो रेफस्तस्य लत्वं विधीयते। कश्चिदाह—नेदं निःपूर्वस्यायते रूपं किन्तर्हि निपूर्वस्य णिजन्तस्य लीङः। तन्न। णिचि सति विभाषा लीयतेरित्यात्वे पुग्दुर्वार इति नेक्षते।

**ध्मान्तः शृङ्गाणि केचन (१०, १२, ७)।**

धमन्त इत्येव युज्यते वक्तुम्। शपि धमादेशस्य दुर्वारत्वात्।

**विच्छायाभिः प्रधावन्तः (१०, १२, ८)।**

वीनां वयसां छाया इति विच्छायम् इति स्यात्। छाया बाहुल्ये इति च्छायान्तस्तत्पुरुषो नपुंसकं स्यात्।

**सरित्प्रस्रवसम्प्लुताः (१०, १२, १०)।**

प्रे द्रुस्तुस्रुव इति घञि प्रस्राव इत्येव शब्दः।

**स्वानां निरोद्धुम् (१०, १२, २५)।**

अव्ययेन योगे षष्ठी नेति पाणिनीयं शासनम्।

**मुहुर्लिहन्त्यः स्रवदौधसं पयः (१०, १३, २४)।**

शरीरावयवाद्यति ऊधस्यम् इत्येव शब्दः।

**अगाद्धुङ्कृतैरास्रुपया जवेन (१०, १३, ३०)।**

क्विपि तुङ् न कृतः, स दोषः। आस्रुत्पया इत्येव निर्दुष्टं रूपम्।

**चतुर्विंशतिभिस्तत्त्वैः (१०, १३, ५२)।**

विंशतिप्रभृतय आ नवनवतेः संख्याः संख्येये वर्तमाना एकत्वे स्त्रियां नियताः। तेन चतुर्विंशत्या तत्त्वैरित्येवं वक्तव्यम्।

**नेशे महि त्ववसितुम् (१०, १४, २)।**

नेष्ट इति तु पाणिनीयाः। अवसातुमिति च।

**उद्धर्मशार्वरहर (१०, १४, ४०)।**

शार्वरिकमिति तु पाणिनीयाः। शार्वरम् इति तु प्रमादः। कविकुलपतिना कालिदासेनाप्यत्र विषये प्रमत्तम्, यत्कुमारे शार्वरस्य तमसो निषिद्धये इति न्यासि। तेनात्र प्रमादेऽयमात्मना द्वितीयो न।

**गोपीदृगुत्सवदृशिः (१०, १४, ४७)।**

दृशिर्दर्शनम्। इक् तु धातुनिर्देशे विहितः। दर्शनेऽर्थं इगन्तो दृशिरसाधुरेव।

**ध्वजोपपन्नानि पदानि विश्पतेः (१०, १६, १८)।**

विश्पतेरित्यत्र व्रश्चभ्रस्जेत्यादिना षत्वं दुष्परिहरम्।

**स्थित्वा मुहूर्त्तमुदतिष्ठदुरङ्गबन्धात् (१०, १६, २३)।**

उरग इत्येवेति पाणिनीयाः।

**तं नर्त्तुमुद्यतमवेक्ष्य (१०, १६, २७)।**

नर्तितुम् इत्येव शब्दः।

**त्वं ह्यस्य जन्मस्थितिसंयमान्**
**प्रभो गुणैरहीनोऽकृत ··· ··· (१०, १६, ४९)।**

अकृतेति प्रथमपुरुष आर्ष इति श्रीधरस्योत्प्रेक्षा। अपरोऽकृतकालशक्तिधृक् इति समस्तमेकं पदं पठति। जन्मस्थितिसंयमान् इति च ईहतेः कर्मेत्यभिमन्यते न चेक्षते ईहतिश्चेष्टायां वर्तते न साधनायाम्। ईहसे प्रवृत्तिमान्भवसीत्यर्थः।

**दवायुधः (१०, १७, ६)।**

दतो दन्ता एवायुधं यस्य सः। दत् इति स्वतन्त्रा प्रकृतिर्नास्ति। पद्दन्नोमास् इत्यादिना दन्तस्य दद्भावः शिष्यते।

**द्रवत्पुरीष्याः (१०, १८, ६)।**

अत्र द्रवद् आर्द्रं पुरीषं पङ्को यस्याः सा, तस्याः। ङीषोऽसम्भवाद् द्रवत्-पुरीषाया इति टापि साधु।

**क्वचिच्च वर्वुरप्लावैः (१०, १८, १५)।**

अपि प्रत्यये प्लव इत्येव शब्दः। आङि सति घञि आप्लाव इति भवति।

**यथायुरन्वहं क्षय्यं नरा मूढाः कुटुम्बिनः (न विदुः) (१०, २०, ३७)।**

क्षय्यं क्षीयमाणमित्यर्थः। पाणिनीये तु नायमस्यार्थः। क्षय्यजय्यौ शक्यार्थे इति पाणिनीयमनुशासनम्। क्षेतुं शक्यं क्षय्यम्।

**रङ्गे यथा नटवरौ क्व च गायमानौ (१०, २१, ८)।**

गायन्तावित्येव शब्दः। गाये गाने मानो गर्वो ययोस्ताविति कश्चिच्छ्रद्धाजडः। नहि गायः क्वचिद् गानमाह।

**अवद्यमृण्यतः (१०, २२, २०)।**

व्रश्चभ्रस्जसृजमृजेत्यादिना पदान्ते जकारस्य षकारे जश्त्वेन डः। अवद्यमृड् इत्येवानवद्यं रूपम्।

**(कृष्णेन) त्रपया च हापिताः (दारिकाः) (१०, २२, २२) ।**

कृष्णेन दारिकाभिस्त्रपा हापिता इत्येवं पाणिनीयाः प्रयुयुक्षन्ते । दारिकास्त्रपां जहतीत्यण्यन्तावस्थायां दारिकाणां कर्तृत्वं त्रपायाश्च कर्मत्वम् । ण्यन्ते कृष्णस्ताभिः (दारिकाभिः) त्रपां हापयतीत्यनुक्ते कर्तरि तृतीया । कर्मणि लकारे तु कृष्णे प्रयोजकेऽनुक्ते कर्तरि तृतीया, प्रयोज्यकर्त्रीषु दारिकास्वपि तृतीया । शुद्धे कर्मणि त्रपायां तूक्तत्वात्प्रथमा । तेन पुराणस्थो दुष्टो न्यासः । सोऽस्मन्निर्दिष्टदिशा शोध्यः ।

**अहैतुक्यव्यवहितां भक्तिम् (१०, २३, २६) ।**

अहैतुकी फलाभिसन्धिरहिता । अहेतुर् (अहेतुका) इति बहुव्रीहिणोक्तेर्थे तद्धितेन नार्थः । हेतुः प्रयोजनं प्रयोजको यस्यास्ताम् इति ठकि सत्यपि व्यतिरिक्तोऽर्थो न लभ्यते, शब्दडम्बर एव भवति हासाय वोद्वेगाय वा ।

**अमित्रोदास्तविद्विषाम् (१०, २४, ५) ।**

उदास्त इत्यपभ्रष्टम् । उदासीन इति वोच्येत शानचि, उदासित इति वा निष्ठायाम् ।

तं तात वयमन्ये च वार्मुचां पतिमीश्वरम् ।
द्रव्यैस्तद्रेतसा सिद्धैर्यजन्ते क्रतुभिर्नराः (१०, २४, ९) ।

अस्मद्युत्तम इति यजामह इत्येव युज्यते वक्तुम् । बहुलोऽत्र पुराणे पुरुषव्यत्ययो न विरल इत्युद्वेगाय भवति ।

**कृष्णेनाध्मायितात्मनाम् (१०, २५, ६) ।**

पुङ् न कृत इति दोषः ।

**क्वचिद् हैयङ्गवस्तैन्ये (१०, २६, ७) ।**

हैयङ्गवमपभ्रष्टमिति निर्दर्शितमधस्तात् । स्तेनाद्यन्नलोपश्चेति स्तेयमेव शब्दः, स्तैन्यं त्वपशब्द इति प्रामाणिकाः ।

**एष वः श्रेय आधास्यत् (१०, २६, १९) ।**

आधास्यतीति वक्तव्ये तिप इकारं लुम्पति छन्दश्च रक्षति । अन्यत्रापीत्थमाचरति -- अपि नः स्वगतिं सूक्ष्मामुपाधास्यदधीश्वरः (१०, २८, ११) इति । नात्र लृङ् प्रयुक्त इति शङ्क्यम्, तस्येहाप्रसङ्गात् ।

**सीदत्पालपशुस्त्रि (शैलम्) (१०, २६, २५) ।**

अभ्यर्हितं पूर्वं निपततीति नाद्रियते । स्त्रियः पशुभ्योऽपि जघन्या इत्यस्य दर्शनं भाति ।

**गिरयोऽबिभ्रदुन्मणीन् (१०, २७, २६)।**

अबिभरुरित्येव शब्दः । अबिभ्रद् इत्यपशब्दः । **पुलकान्यबिभ्रन्** (१०, २९, ४०)। इत्यपि प्रामादिकम् ।

**किं ते कृतं क्षिति तपः (१०, ३०, १०)।**

सम्बुद्धौ क्षिते इति स्यात् । क्तिन्नन्तान्ङीषोऽप्राप्तेः, अम्बार्थनद्योर्ह्रस्व इत्यस्याप्राप्तेश्च ।

**तानि (प्रसूनानि) चूडयता कान्ताम् (१०, ३०, ३३)।**

चूडयता चूडां कुर्वता । कान्ताम् इत्यत्र द्वितीया केन ? प्रसूनानि चूडयतेत्यपि प्रयोगो नास्पृष्टो दोषेण । न हि प्रसूनानि चूडा क्रियन्ते चूडारूपतामुपनीयन्ते किन्तर्हि चूडायां गुम्फ्यन्ते । तेनार्थासङ्गतिः स्फुटा ।

**तं काचिन्नेत्ररन्ध्रेण हृदि कृत्य निमील्य च (१०, ३२, ८)।**

हृदि कृत्य इत्यत्र ल्यब्दुर्लभः ।

**सर्पं विव्यधुरुल्मुकैः (१०, ३४, ७)।**

विविधुरिति तु पाणिनीयाः । कृतसम्प्रसारणस्य द्वित्वम् ।

**नामुञ्चत्तमुरङ्गमः (१०, ३४, ८)।**

उरङ्गम इति कवेरुपज्ञा । इहैव प्रयोगोऽपूर्वतायै ।

**निर्विशन्ति घना यत्र ककुद्यचलशङ्कया (१०, ३६, ४)।**

यथा भगवतः पाणिनेर्दर्शनं तथा ककुच्छब्दः स्वतन्त्रा प्रकृतिर्नास्ति। यदि हि स्यात्तर्ह्यवस्थायां किम् । श्वेतककुद इति प्रत्युदाहरणं नोपपद्येत। अवस्थायामनवस्थायां च ककुच्छब्दस्य सत्त्वात् । कामं यवादिगणे ककुच्छब्दस्य पाठः स्थितः, ककुद्मतीत्यादिषु लक्ष्यते च । पाणिनेरर्वाक् ककुदिति स्वतन्त्रा प्रकृतिः स्वीकृताऽभूत्, यवादिगणे च संनिवेशमलब्धेति शक्यं कल्पयितुम्। अनवस्थितो गणपाठ इति परीक्षकाः । वस्तुतो वार्तिककारसमये व्यवस्थान्तरमगादिति कण्वात्तु शकलः पूर्वः कतादुत्तर इष्यत इति श्लोकवार्तिकादसन्देहं प्रतीयते ।

**कटाक्षिप्याद्रवत् तूर्णम् (१०, ३६, १०)।**

कटः=कटाक्षः । तेनाक्षिप्य तिर्यङ् निरीक्ष्य । 'इन' प्रत्ययस्य लोप आर्ष इति कश्चिद्दूषिद्वेषी ।

**एवं ककुद्मिनं हत्वा (१०, ३६, १५)।**

ककुद्मिन् इति मिनिर् मत्वर्थीयः केन ?

**एतज्ज्ञात्वानय क्षिप्रं रामकृष्णाविहार्भकौ ।**
**द्रष्टुं यदुपुरश्रियम् ··· ··· ··· ··· ··· (१०, ३६, ३७)।**

भिन्नकर्तृत्वे तुमुन् दुर्लभः। यदुपुरश्रियो दर्शनायेति वक्तव्यम्।

**दन्ताः ··· ··· तप्तमयः स्पृशः (१०, ३७, ६)।**

तप्तम् अय इति द्वितीयान्ते पृथक् पदे। कृद्योगलक्षणा षष्ठी तु युक्ता। तदर्हम् इति सामान्यापेक्षं ज्ञापकं न। तथा सति संकीर्येरन् वाचो न व्यवतिष्ठेरन् ।

**चतुः पञ्चावशेषिताः (१०, ३७, २९)।**

चतुष्पञ्चा इत्येव तु पाणिनीयाः। **इदुदुपधस्य चाप्रत्ययस्य**। इति नित्यं षत्वम् ।

**रथादवस्कन्द्य स (तेष्वचेष्टत) (१०, ३८, २६)।**

अवस्कन्द्येति दुष्टम्। अनिदितां हल उपधायाः क्ङिति (६, ४, २४) इत्यनेनोपधानकारस्य लोपोऽवश्यम्भावी।

**देहंभृतामियानर्थः (१०, ३८, २७)।**

क्विपि पूर्वपदस्य मुम् केन ? नूनं नूत्नाच्छब्दान्निर्मात्यनर्गलः।

**अंसद्-दुकूल-वलय-केशग्रन्थ्यश्च (१०, ३९, १४)।**

ग्रन्थय इत्येव निर्दुष्टं रूपम् ।

**तांश्चाकृतार्थान् वियुनङ्क्षि (१०, ३९, १९)।**

वियुङ्क्षे इत्येव साधु। श्नमोऽल्लोपे नकारस्यानुस्वारे परसवर्णे स्वराद्यन्तोपसर्गादिति वक्तव्यात्तङि वियुङ्क्ष इति निरवद्यं रूपम्।

**सान्त्वयामास सप्रेमैरायास्य इति दौत्यकैः (१०, ३९, ३५)।**

अव्ययीभावादेव टज्विधेः सप्रेमैरित्यपभ्रष्टम्। अनश्च, नपुंसकादन्यतरस्यामिति सूत्रद्वयस्याप्रसङ्गात् ।

**पितृदेवर्षयो मह्यं तुष्टाः (१०, ४१, ४५)।**

अभ्यर्हितं पूर्वं निपततीति न गणयति। पितॄणां देवानां चार्हत्तमा ऋषय इत्यृषिपदेन पूर्वं निवेष्टव्यम्।

**अम्बष्ठाम्बष्ठ मार्गं नौ देह्यपक्रम (१०, ४३, ४)।**

अपक्रामेति लोण्मध्यमैकवचने रूपम् ।

**मञ्चस्थिता नागर-राष्ट्रका नृप (१०, ४३, २०)।**

घप्रत्यये राष्ट्रिया इत्येव पाणिनीयशासनानुसारि रूपम् ।

**अन्योन्यं प्रत्यरुन्धताम् (१०, ४४, ४)।**

प्रत्यरुन्धतामिति न लङि न वा लुङि सेद्धुमर्हति । लुङि इरित्वादङि प्रत्यरुधताम् इति (पक्षे सिचि परस्मैपदे प्रत्यरौद्धाम् इति)। लङि परस्मैपदे प्रत्यरुन्द्धाम् इति ।

**तं प्रेत्य स्वमांसं खादयन्ति हि (१०, ४५, ६)।**

यमदूता इति शेषः। आदिखाद्योर्नेति प्रयोज्यकर्मताया निषेधात् तेन स्वमांसम् इत्यादि वक्तव्यम् । बटुनान्नं खादयतीति बालग्राह्यायां व्याकरण-प्रवेशिकायामुदाहरणं स्थितम् ।

**वयममृतमिव .....ददृशुः सकृदेतत् (१०, ४७, १९) ।**

अस्मद्युत्तम इति ददृशिमेत्येव न्याय्यम् ।

**वरय किमनुरुन्धे माननीयोऽसि मेऽङ्ग (१०, ४७, २०)।**

मध्यमपुरुषस्तु प्रसक्तः। तेन अनुरुन्त्से इति पठनीयम् ।

**कृष्णं संस्मारयन्रेमे हरिदासो व्रजौकसाम् (१०, ४७, ५६)।**

व्रजौकसः (द्वितीयान्तम्) इति साधु स्यात्, यदि स्मरतिर्बुद्ध्यर्थको गृह्यते यथा य एव दुःस्मरः कालस्तमेव स्मारिता वयम् इत्यत्र। यदि च दीक्षितादिमतेन स्मरतिर्ज्ञानविशेषवाचको बुद्ध्यर्थकत्वेन न गृह्यते तदा व्रजौकोभिरित्यनुक्ते कर्तरि तृतीया साध्वी स्यात् ।

**पादावनेजनीरापो धारयञ्छिरसा नृप (१०, ४८, १५)।**

अप इति द्वितीयान्तं रूपं सुप्रयुक्तं स्यात् ।

**भ्रात्रेयो भगवान् कृष्णः (१०, ४९, ९)।**

भ्रातृव्य इति तु पाणिनीया इच्छन्ति । अन्यत्राप्यभ्यावर्तयति भ्रष्टमिदं रूपम् यदाह—पृथा विलोक्य भ्रात्रेयं कृष्णम् (१०, ७१, ३९) इति ।

**पैतृष्वस्रेयान् स्मरति (१०, ४९, ९)।**

पितृष्वसुश्छण् (४, १, १३२), ढकि लोपः (४, १, १३३) इति सूत्राभ्यां पैतृष्वस्रीयः पैतृष्वसेय इति द्वे शुद्धे रूपे । पुराणधृतं त्वपभ्रष्टम् ।

**तथापि सूनृता सोम्य हृदि न स्थीयते चले (१०, ४९, २७)।**

तिष्ठतीति प्रयोक्तव्ये स्थीयत इति भावे लकारः प्रमत्तगीतः। अज्ञोपि नैवं प्रयुञ्जीत किमङ्ग बहुज्ञः कविर्भागवतकारप्रकारः।

**अयादवीं महीं कर्तुं चक्रे परममुद्यमम् (१०, ५०, ३)।**

अनुपसर्जनादित्यधिकारान्ङीब्दुर्लभः। यदूनामियं यादवी यदुसम्बन्धिनी। सा न भवतीत्ययादवीत्येवं समाधातुमीहते कश्चित्, न चेक्षतेर्थम्। यादवरहितां कर्तुमिति विवक्षितोऽर्थः, न तु यादवसम्बन्धरहिताम्। यादवानां मह्या सम्बन्धः शासकशासनीयभाव एव भवितुमर्हति। शासितृत्वाभावेपि जीवानां तेषां समष्टिर्न वार्यते।

**प्रजाश्च तुल्यकालीया नाधुना सन्ति कालिताः १०, ५१, १८)।**

तुल्यकालीया इत्यत्र छो दुर्लभः। इहैव प्रयोगो नान्यत्र।

**यवने भस्मसान्नीते (१०, ५१, २३)।**

अहो शास्त्रावमानिता। भ्वस्तियोगे सम्पदा च योगे सातिविधिः शास्त्रे। अयं तु वाचि स्वतन्त्रो नयतिना योगेपि सातिमिच्छति।

**पुनश्च भूयेयमहं स्वराडिति (१०, ५१, ५३)।**

भूयासम् इति तु पाणिनीयाः। जानन्वा वाचं विभ्रंशयत्यजस्रमजानानो वेति न विद्मः।

**तां वै प्रवयसो बालां विधिज्ञा विप्रयोषितः।**
**भवानीं वन्दयाञ्चक्रुः (१०, ५३, ४५)।**

वन्देर्गत्याद्यर्थत्वाभावात्ताम् इत्यणि कर्तुः कर्मत्वं दुर्लभम्। अनुक्ते कर्तरि तृतीया स्यात्। 'भवान्या' इति च वक्तव्यम्।

**विप्रस्त्रियः पतिमतीः (१०, ५३, ४८)।**

अन्तर्वत्पतिवतोर्नुक् इति पतिवत्नीरिति पाणिनीयाः।

**मा स्म भैर्वामलोचने (१०, ५४, ५)।**

मा स्म भैषीरिति तु पाणिनीयाः।

**मैवास्मान्साध्वसूयेथाः (१०, ५४, ३८)**

अस्मानिति द्वितीया दुष्यति। माङ्योगे लिङ्प्रयोगश्च प्रदुष्यति।

**पारिबर्हमुपाजह्रुर्वरयोः (१०, ५४, ५५)।**

वरश्च वधूश्चेति वरवध्वौ। तयोर्वरवध्वोरित्येव निर्दुष्टं रूपम्। वरयोरित्येकशेषस्तु न कथमपि घटते।

**बभौ प्रतिद्वार्युपक्लृप्तमङ्गलैः (१०, ५४, ५६)।**

प्रतिद्वारि इति वीप्सायामव्ययीभावे रूपं न सिध्यति। सप्तम्या लुक् कुतो न। द्वार् इति रकारान्तं प्रातिपदिकं स्त्रियां नियतम्। तस्य सप्तम्यामेकवचने 'द्वारि' इति रूपम्। अव्ययादाप्सुप इति सुपो ङेर्लुका भवितव्यम्।

**द्वास्सु परामृष्टरम्भापूगोपशोभिताम् (१०, ५४, ५७)।**

द्वार्षु इत्येव शब्दः। द्वास्सु इति त्वपशब्दः। रोः सुपि इति नियमाद् रोरेव सुपि विसर्जनीयः, न तु रेफमात्रस्य।

**स च शम्बरमभ्येत्य संयुगाय समाह्वयत् (१०, ५५, १७)।**

स्पर्धायामाङ इत्यात्मनेपदेन भाव्यम्।

**को विरुध्येत विद्वान् ईश्वरयोर्बलम् (१०, ५७, १४)।**

विरुन्धीत विरुन्ध्यादिति वा वक्तव्यम्। दिवादे रुधेस्तु प्रयोगो न भवितुमर्हति, तस्यानुपूर्वत्वनियमात्, अनो रुध कामे इति पाठात्।

**ततः स कारयामास क्रियाः ... ...**
**या याः स्युः साम्परायिकाः (१०, ५७, २८)।**

साम्परायिक्य इति तु वक्तव्यम्। स्त्रियां ङीपा भवितव्यम्।

**शतधनोर्वधम् (१०, ५७, २९)।**

वा संज्ञायाम् इत्यनङ् विकल्पेपि षष्ठ्यां शतधनुषः, शतधन्वन इति द्वे रूपे। शतधनोरिति त्वत्यन्तमपभ्रष्टम्।

**भौमप्रयुक्ता निरगन्धृतायुधाः (१०, ५९, १२)।**

निरगमन्नित्यर्थे स्वकपोलकल्पितः शब्दः। मकारलोप ऐच्छिकः।

**यन्नर्मैर्नीयते यामः प्रियया भीरु भामिनि (१०, ६०, ३१)।**

नर्मन्निति नान्तं नपुंसकम्। अदन्तं प्रातिपदिकं त्वयमेव वेद।

**कृतानुवृत्तिर्भवमोचनी खलैः**
**सुदुष्कराऽसौ सुतरां दुराशिषो**
**ह्यसुम्भराया निकृतिञ्जुषः स्त्रियाः (१०, ६०, ५४)।**

खल्प्रत्ययान्तेन कर्तृषष्ठ्या निषेधात् खलैरित्यनुक्ते तृतीया साध्वी। असुम्भरायाः निकृतिञ्जुष इत्यत्रापि सैव युक्ता, खला योगस्य तादवस्थ्यात्। सा कस्मान्न कृता।

**बद्धं निशम्याश्रुकलाक्ष्यरौदिषीत् (१०, ६२, ३५)।**

अरोदीत्, अरुदत्, अरोदत् इति साधु रूपवितयम्। चतुर्थं संस्कारहीनं कुतोऽग्राहि। अपरोऽनुभूतिस्वरूपाचार्यः।

**युयुधे रामकृष्णयोः (१०, ६३, ६)।**

षष्ठीसप्तम्यावप्राप्ते। तृतीया तु युक्ता।

**कस्यचिद् द्विजमुख्यस्य भ्रष्टा गौर्मम गोधने।**
**सम्पृक्ता ... ... (१०, ६४, १६)।**

गोधनेन सम्पृक्तेति वाच्यमवाच्यतायै। सप्तमी त्वधुनातनीं वाक्सरणिमनुसरति।

**राजानो राजकुल्याश्च (१०, ६४, ३८)।**

अपूर्वपदादन्यतरस्यां यड्ढकञौ (पा० ४, १, १४०) इति सपूर्वपदात्कुलाद्यन्न प्राप्नोति। तेन राजकुल्य इत्यपशब्दः।

**यद् गृध्वाऽल्पायुषो नराः (१०, ६४, ४०)।**

गृधिरकर्मक इति प्रसाधितं वाग्व्यवहारादर्शे।

**विप्रं कृतागसमपि नैव द्रुह्यत मामकाः (१०, ६४, ४१)।**

विप्रायेति सम्प्रदाने चतुर्थी वैधी।

**यन्नायासि मयाऽऽहुता (१०, ६५, २४)।**

'आहूता' इत्येव शब्दः। सम्प्रसारणंह्रस्वं न द्राघयति छन्दोभङ्गमाशङ्कमानः।

**पौण्ड्रकं ससखं हारः (१०, ६६, २३)।**

ससखं सख्या सह वर्तमानम्। बहुव्रीहिः। तत्र समासान्तष्टज् दुर्लभः।

**अथ निष्कौरवीं पृथिवीं करिष्यामीत्यमर्षितः (१०, ६८, ४०)।**

उपसर्जनान्ङीब्दुर्लभ इति टापि निष्कौरवाम् इति वक्तव्यम्।

**विवेशैकतमं शौरेः पत्नीनां भवनं महत् (१०, ६९, ८)।**

एकतमद् भवनमित्येव युक्तम्। अद्ड्डतरादिभ्यः पञ्चभ्य इत्यमोऽद्ड् आदेशो न कृतः, स दोषः।

**पुत्र मा खिदः (१०, ६९, ४०)।**

खिद दैन्ये दिवादिरात्मनेपदी। लुङ्यङोऽप्राप्तेः (मा) खित्था इत्येव सिचि रूपम्।

**ब्रह्मण्यं समयाचेरन् राजन्या ब्रह्मलिङ्गिनः (१०, ७२, १७)।**

समयाचन्तेत्यस्य स्थानेऽपभ्रंशः। झस्य रन्, एत्वं चार्षे इति कश्चि-दृषिकृतिरियम् इति भ्रान्तः।

**अंसकटिपाबकरोरुजत्रून् (१०, ७२, ३७)।**

प्राण्यङ्गत्वादेकवद्भाव इष्यते पाणिनीयैः। जत्रु नपुंसकम् इति पुंसि प्रयोगो दुष्यति।

**प्रीणय्य सूनृतैर्वाक्यैः (१०, ७३, २८)।**

प्रीञो नुक्। पूर्वपदाभावात् क्त्वो ल्यब्न। णिचि क्त्व इटि गुणेऽयादेशे प्रीणयित्वेत्येव रूपम्।

**इभेन्द्रस्यन्दनार्वभिः (१०, ७५, ११)।**

अर्वणस्त्रसावनञ इति शास्त्रेण अर्वद्भिरित्येव त्रन्तादेशे।

**स्वलङ्कृता नरा नार्यः ... ...**
**विलिम्पन्त्योऽभिषिञ्चन्त्यः (१०, ७५, १४)।**

पुमान् स्त्रिया इति पुंशेषो युक्तः।

**ते देवरानुत सखीन् सिषिचुर्दृतीभिः (१०, ७५, १७)।**

दृतिरिति दृ विदारण इत्यस्मात्तिः प्रत्यय औणादिकः कित्। दृतिरिति प्रायेण पुमान्। क्वचित् स्त्री। ङीषोऽप्राप्तेर्दृतीति भ्रष्टं रूपम्।

**पेतुः समुद्रे सौभेयाः (१०, ७७, ४)।**

सौभेयाः सौभनाम्नि विमाने स्थिताः। ढक् केन? स्वेच्छया।

**गृहीतहस्ताः परिबभ्रिमातुराः (१०, ८०, ३८)।**

पारोक्ष्येऽसत्यपि लिट्। तत्रापि परिबभ्रिमेति संस्कारवन्न। क्रादि-नियमादिटोऽप्रसङ्गः। तेन परिबभृमेत्येव युक्तम्।

**द्वितीयां जग्धुमाददे (१०, ८१, १०)।**



जग्धुमित्यपशब्दः। अन्यत्रापीह पुराणेऽपशब्दोऽयमसकृत्प्रयुक्तः। अत्तुमिति शब्दः। अबालोपि बालवदाचरति।

**सुहृत्कृतं फल्ग्वपि भूरिकारी (१०, ८१, ३५)।**

सुहृत्कृतं फल्गु तुच्छमपि बहुमन्यत इति विवक्षितोऽर्थः। दर्शनीयमानी अयमस्या इत्यत्रेव फल्गुनोऽपि सुहृत्कार्यस्येति षष्ठी प्रयोक्तव्या। भूरिकारीत्युपपदसमासः। उपपदस्यैव कृत्प्रत्ययेन योगः, न तु वाक्ये पदान्तरस्य। तेन णिन्यन्तस्य करोतेः सुहृत्कृतमिति नालं कर्म भवितुम्, येनानुक्ते कर्मणि द्वितीयोपपन्ना स्यात्।

**दृग्भिर्हृदीकृतमलं परिरभ्य सर्वाः (१०, ८२, ४०)।**

हृदीकृतम् इत्यसह्योऽपभ्रंशः। सप्तम्यन्तं चेत्प्रयुयुक्षितं दीर्घः केन? छन्दोऽनुरोधेन। अथ च्विः, तस्य सप्तम्यन्तादप्रसङ्गः। दीर्घत्वस्य च सुतराम्।

**स्नेहो भवतीनां मदापनः (१०, ८२, ४५)।**

मदापन इत्यपूर्वम्। अपूर्वं चेह बहुलम्। नन्द्यादेराकृतिगणता नास्तीति कर्तरि ल्युर्दुर्लभः।

**व्यरोचन्त महातेजाः पथि काञ्चनमालिनः (१०, ८२, ८)।**

महातेजस इति तु युक्तम्। तेज इत्यदन्तं प्रातिपदिकं नास्ति।

**गेहंजुषामपि मनसि (१०, ८२, ४९)।**

समासेनैकपद्ये द्वितीयाया अलुक् केन। प्रभवन्त्या स्वेच्छयेति विद्धि। पृथक्पदत्वं चेदिष्टं कृद्योगलक्षणा षष्ठ्येव स्थाने स्यात्।

**नूत्ने निवीय परिधाय च कौशिकाग्र्ये (१०, ८३, २८)।**

कोशोड्ढजि कौशेयमिति शब्दः, कौशिकस्त्वपशब्दः। अर्थान्तरे वायसारातौ विश्वामित्रे च कौशिकोपि शब्दः।

**रविच्छदध्वजपटचित्रतोरणाम् (१०, ८३, ३६)।**

रविं छादयन्तीति रविच्छादाः। कर्मण्यण्।

**गावश्चारयतो गोपाः (१०, ८३, ४३)।**

द्वितीयाबहुवचने गा इति रूपम्। गाव इति प्रथमान्तम्। कीदृशो व्यामोहः।

**कर्मणा कर्मनिर्हारो यथा स्यान्नस्तदुच्यताम् (१०, ८४, २९)।**

कर्मनिर्हारः (मोक्षप्रतिबन्धक)-कर्मपरिहारः। अयमत्रार्थेऽशक्तः। प्रयोगादर्शनात्। प्रेतस्य ग्रामादेर्बहिर्नयने क्षतविक्षतानां योधानां रणाजिरादपनयने वा निर्हरती रूढः।

**तत्र वै वार्षिकान्मासानवात्सीत्स्वार्थसाधकः (१०, ८६, ४)।**

स्वार्थं साधयिष्यामीत्यवात्सीत्। भविष्यदर्थे ण्वुल्। अकेनोर्भविष्यदाधमर्ण्ययोः (पा० २, ३, ७०) इति कृद्योगलक्षणायाः षष्ठ्याः प्रतिषेधः। प्रतिषिद्धायां षष्ठ्यां षष्ठीसमासः कुतः। तेन स्वार्थं साधक इत्येवं व्यासेन वक्तव्यम्।

**दिनानि कतिचिद्भूमन् गृहान्नो निवस द्विजैः (१०, ८६, ३६)।**

उपान्वध्याङ्वस इत्युपादिपूर्वस्य वसेराधारस्य कर्मसंज्ञा विहिता न तु केवलस्य। तेन गृहानिति द्वितीयाऽस्थाने।

**न प्रद्युम्नो नानिरुद्धो न रामो न च केशवः।**
**यस्य शेकुः परित्रातुम् ... ... (१०, ८९, ४१)।**

प्रतिनञ् वाक्यभेदात्प्रतिवाक्यं च कर्त्रैक्यादेकवचनान्तैव क्रिया युज्यते।

**माऽवज्ञात्मानमात्मना (१०, ८९, ४६)।**

अवजानीहीति पाणिनीये प्राथमकल्पिकानामपि न न विदितः शब्दः।

**सर्वैकनिष्ठा स्त्रियाम् (१०, ९०, २४)।**

स्त्रीणाम् इति षष्ठीबहुवचने रूपमिच्छन्ति पाणिनीयाः।

**कर्माणि पुण्यनिवहानि (११, १, ११)।**

पुण्यानि निवहन्तीति विग्रहे कर्मण्यणि रूपं न सिध्यति।

**संसारेऽस्मिन्क्षणार्धोऽपि सत्सङ्गः शेवधिर्नृणाम् (११, २, ३०)।**

क्षणार्ध इति प्रथमा दुष्प्रयुक्ता। अत्यन्तसंयोगे द्वितीया सुप्रयुक्ता स्यात्।

**पश्येत् पाकविपर्यासं मिथुनीचारिणां नृणाम् (११, ३, १८)।**

मिथुनीचारिणाम् इत्यपभ्रंशः। च्वेर्दौर्लभ्यात्। कृभ्वस्तियोगे तद्विधेः।

**सन्ने यदिन्द्रियगणेऽहमि च प्रसुप्ते (११, ३, ३९)।**

अहमित्यहङ्कारार्थेऽव्ययम्। तदिह कथं व्ययमापादितं पुराणकारेण?

**नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः (११, ३, ४६)।**

नैष्कर्म्याम् इति भावे ष्यञन्तम्। तद्धि नपुंसकं प्रसिद्धम्। तेन स्त्रियां टापोऽप्रसङ्गः।

**पर्युष्टया तव विभो वनमालयेयम् (११, ६, १२)।**

'पर्युषितया' इत्येव शब्दः। वसिः प्रसारणी। इड् विशेषविहितः।



**एकतराय साधुषु खलेष्वितराय भूमन् (११, ६, १३)।**

इतरस्मै इति तु पाणिनीयाः।

**संस्पर्धिनी भगवती प्रतिपत्तिवच्छ्रीः (११, ६, १२)।**

प्रतिपत्तिरित्यपशब्दः । ह्रस्वत्वस्याप्राप्तेः । सपत्न्यर्थे स्वकपोल-कल्पितश्च ।

**पादावनेजसरितः (११, ६, १९)।**

पादावनेज इत्यपशब्दः । घञि चजोःकुरिति कुत्वस्य दुर्वारत्वात् ।

**शरच्छतं व्यतीयाय पञ्चविंशाधिकं प्रभो (११, ६, २५)।**

पञ्चविंशत्यधिकम् इति तु पाणिणीयाः ।

**ब्रह्मा भवो लोकपालाः स्वर्वासं मे भिकाङ्क्षिणः (११, ७, १)।**

यद्यत्र सुब्ग्रहणेनोपसर्गोपि गृह्यते तर्हि स्वर्वासस्येति कृयोगलक्षणा षष्ठी प्रयोक्तव्या। तद्धित इनिश्चेत् स्वर्वासे इति सप्तमी साध्वी। स्वर्वासे विषयेऽभिकाङ्क्षिणोऽभिकाङ्क्षावन्त इत्यर्थः ।

**न विषज्जेत वायुवत् (११, ७, ४०)।**

विषज्जेतेत्यत्र षत्वं दुर्लभम् । उपसर्गात्सञ्जे षत्वं विधीयते न तु षस्जेः ।

**विद्याविद्ये मम तनू ··· मोक्षबन्धकरी (११, ११, ३)।**

मोक्षबन्धकर्याविति वक्तव्यम् । करोतेष्टे ङीपि मोक्षबन्धकरीति शब्दरूपम् ।

**तत्र तत्राबध्यन् गुणान् (११, ११, १२)।**

गुणा इन्द्रियाणि । आदिखाद्योर्नेत्यणौ कर्तुर्णौ कर्मत्वं नेति गुणैरिति वक्तव्यम् ।

**स्वतः संहत्य चोद्यमः (११, ११, ३८)।**

संहत्य=सम्भूय । यथा हनिः सकर्मकस्तथा संहनिरपि । तेनेष्टार्थ-लाभो न ।

**आशु नश्यति तन्मूलो ह्यधर्म उभये हते (११, १३, ३)।**

उभयशब्दः पूर्वादिषु नवसु न पठितः । तेन स्मिन्नभावः पाक्षिको न प्राप्नोति । उभयस्मिन्नित्येव शब्दः ।

**एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः (११, १५, ५)।**

औत्पत्तिक्य इति ङीपि साधु स्यात् ।

**यमः संयमतां चाहम् (११, १६, १८)।**

संयच्छताम् इति तु वक्तव्यम् । शे यमश्छः।

**यतासुस्त्रिपर्वीं जपेत्** (११, १७, २५)।

टावृचि इति टापि त्रिपदामिति शुद्धं शब्दरूपम् ।

**ग्रीष्मे तप्येत पञ्चाग्नीन्** (११, १८, ४)।

तपस्तपः कर्मकस्यैवेति नियमान्नात्र कर्मवद्भाव उपपद्यते। तपस्तप्यत इत्यस्य तपोऽर्जयत इत्यर्थः । न हि पञ्चाग्नयोऽर्ज्यन्ते।

**अहोरात्रैश्छिद्यमानं बुद्ध्वायुर्भयवेपथुः** (११, २०, १६)।

अहोरात्रमित्यत्यन्तसंयोगे द्वितीया साधीयसी स्यात् । यद्यहानि रात्रयश्चायुषश्छेदने कर्तॄण्यभिमतानि तदा यथास्थितमपि निर्दुष्टम् ।

**कामा हृदय्या नश्यन्ति** (११, २०, २९)।

हृदये भवा हृदय्या इति न सिध्यति। हृदयस्य हृल्लेखयदण्लासेषु इति यति हृद्भावो दुर्वारः ।

**देशकालादिभावानां वस्तूनां मम सत्तम ।**
**गुणदोषौ विधीयेते** ··· ··· ··· (११, २१, ७)।

भगवतः कृष्णस्योद्धवं प्रत्युक्तिरियम् । ममेति षष्ठी मयेति तृतीयार्थे। बालेप्यसंभाव्योऽयं विभक्तिव्यत्ययः। असकृच्चायमिह पुराणे लक्ष्यते । स किंकृत इति नावेमः ।

**अकृष्णसारो देशानामब्रह्मण्योऽशुचिर्भवेत् ।**
**कृष्णसारोप्यसौवीरकीकटासंस्कृतेरिणम्** (११, २१, ८)।

कृष्णसारोऽस्यास्तीति कृष्णसारः। अर्श आदित्वादच् । प्रयोगस्तु दुर्लभः । प्रयोगदौर्लभ्यादेव कश्चिदन्यथा कल्पयते – **कृष्णेन मृगेण सारः श्रेष्ठ इति।** कृष्णसारस्य (कृष्णमृगस्य) सन्निधिमात्रं विवक्षितं न तु तत्कृता श्रेष्ठता। सा तु शुचिरूपता पृथगुक्ता ।

**मां विधत्तेऽभिधत्ते मां**
**विकल्प्यापोह्यते त्वहम्** (११, २१, ४३)।

अपोह्य इत्युत्तमपुरुषस्तु युज्यते।

**न भवाप्ययवस्तूनामभिज्ञो ह्यलक्षणः** (११, २२, ४८)।

भवाप्ययवद् वस्तूनाम् इति विवक्षति। मतुपं किं न करोति ?

**निष्ठितो मूत्रितो वाऽज्ञैः** (११, २२, ५८)।

निष्ठितो नि[illegible] इत्यर्थः । निष्ठित इति बालचापलम् । प्राकृतान्निष्ठीव्यतेर्निष्ठायां निष्ठ्यूतमिति रूपम् , ण्यन्तात्तस्मान्निष्ठेवितम् ।

निष्ठित इति तु निपूर्वात् तिष्ठतेनिष्ठायां रूपं प्रसिद्धम् । तदर्थश्च नेह संगच्छते । मूत्रणसमभिव्याहारात्तिष्ठवु निरसने इत्यस्यैव रूपमभिप्रैति कविः ।

**देवर्षिपितृभूतानि ज्ञातीन्बन्धूंश्च भागिनः ।**
**असंविभज्य चात्मानं यक्षवित्तः पतत्यधः (११, २३, २४) ॥**

देवर्षि पितृभूतेभ्य इति सम्प्रदाने चतुर्थीष्यते ।

**यथाहमः संसृतिरूपिणः स्यात्**
**एवं प्रबुद्धो न बिभेति भूतैः (११, २३, ५७) ।**

अहमित्यहङ्कारे सुबन्तप्रतिरूपकमव्ययम् । ततः पञ्चमी कथं श्रूयेत । भूतैरित्यपाकृत्य भूतेभ्य इत्यपादाने पञ्चमी प्रयोज्या ।

**त्रैगुण्यः सर्व एव हि (११, २५, ३०) ।**

त्रैगुण्यः=त्रिगुणमयः । त्रयो गुणास्त्रैगुण्यं स्वार्थे ष्यञ् चातुर्वर्ण्यवत् । स्वार्थे ष्यञन्तं च नपुंसकं प्रसिद्धम् । अर्श आदित्वकल्पनामन्तरा पुंस्त्वं न सिध्यति । अन्यत्र प्रयोगादर्शनात्सा न शक्या समर्थयितुम् । त्रिगुणः, त्रैगुण्यम्, निस्त्रैगुण्य इत्यादयः प्रयोगा गीतासु बहुलं लक्ष्यन्ते, पुंसि त्रैगुण्य इति तु नैकत्राप्यक्षिलक्षी भवति ।

**तस्याहं ब्रह्मदायस्य ददास्म्यात्मानमात्मना (११, २९, २६) ।**

ब्रह्म ददातीति ब्रह्मदः । आतोऽनुपसर्गे कः । अणोऽपवादः ।

**नैतत्त्वया दाम्भिकाय नास्तिकाय शठाय च ।**
**अशुश्रूषोरभक्ताय दुर्विनीताय दीयताम् (११, २९, ३०) ।**

दाम्भिकायेत्यादिषु सम्प्रदाने चतुर्थीं प्रयुञ्जानः किमिति अशुश्रूषोरित्यत्र षष्ठीमशिष्टां प्रयुङ्क्ते । मन्ये वृत्तिरिरक्षिषयैवमाचरति न त्वसंविदान इति ।

**पञ्च प्रद्योतना इमे (१२, १, ४) ।**

प्रद्योतनाः प्रद्योतप्रभृतयः, प्रद्योतवंशजाः । रूपं तु न सिध्यति । कश्चिदाह—द्युतेस्ताच्छील्ये युचि सिध्यति इति । तन्न । नायं क्रियाशब्दः । संज्ञैषा प्रद्योतवंशजानाम् ।

**शिशुनागा दशैवैते षष्ट्युत्तरशतत्रयम् ।**
**समां भोक्ष्यन्ति पृथिवीम् ... ... ... (१२, १, ७-८) ॥**

इदमत्र पुराणकारं चोदयामः—शतानां त्रयं शतत्रयम् । षष्ट्युत्तरं च तत् । इदं च संख्यामाह न तु संख्येयम् । तेन समाम् इत्यनेन दुर्घटोऽन्वयः । इमां दुर्घटतां कथं नेक्षसे ?

**अनुगङ्गमाप्रयागम्** (१२, १, ३७)।

अनुगङ्गमित्यव्ययीभावे स्यात्। केन समासः। अव्ययं विभक्ति-समीपेत्यादीना सामीप्ये। अर्थस्तु न सङ्गच्छते। गङ्गामारभ्येत्यर्थस्त्वभि-धित्सितः। स च पूर्वपदमाङमन्तरा दुर्लभः। नह्यनुर्मर्यादावचने प्रसिध्यति। तस्मादपप्रयोग एवायम्।

**त्रिंशद्विंशति वर्षाणि परमायुः कलौ नृणाम्** (१२, २, ११)।

अल्पीयस्याः संख्यायाः पूर्वनिपात इष्यत इति शास्त्रम्। व्यवहारश्च तादृशः। सर्वमाकुलं करोति।

**पणयिष्यन्ति वै क्षुद्राः किराटाः कूटकारिणः** (१२, ३, ३५)।

पणिष्यन्त इत्येव रूपम्। स्वार्थे णिच्यपि नेष्टरूपसिद्धिः।

**बाष्कलिः प्रतिशाखाभ्यो**
**बालखिल्याख्यसंहिताम्** (१२, ६, ५९)।

प्रतिशाखाभ्य इति समासो वा स्याद् व्यासो वा। दोषादनिर्मोक्षः। वीप्सायामव्ययीभावे प्रतिशाखमिति स्यात्। व्यासे प्रतेः कर्मप्रवचनीयतायां कथंचिदुपेतायां प्रति शाखा इति स्यात्।

**साक्षात्तप एव रूपिणौ** (१२, ८, ३४)।

तप एव रूपं मूर्त्तिरनयोस्तौ तपोरूपिणौ तपोमूर्त्ती। एवेन व्यवहितेपि समासः। अहो निरङ्कुशता कवेः। अहो लोकशास्त्रयोर्धृष्टमुत्सारणम्। व्यासोक्तिरियं न समासोक्तिरिति चेत्, नैतावता निर्दुष्टता भवति। अर्था-सङ्गतिश्चोत्कटा भवति। तौ रूपिणौ रूपवन्तौ सविग्रहौ सुन्दरौ वा। तप एव रूपिणावित्यनन्वयम्।

**अभिज्ञमात्रम्** (१२, ८, ४४)।

अभिज्ञोऽभिज्ञानम्। अकर्तरि च कारके कः प्रत्ययो न प्राप्नोति।

**अध्ययावतिसंक्लिष्टः परिष्वक्तुमधोक्षजम्** (१२, ९, ३२)।

परिष्वङ्क्तुमित्येव शब्दः। अनुनासिकलोपस्याप्रसङ्गात्।

**तमाह भगवाञ्छर्वः शर्वयाऽभिनन्दितः** (१२, १०, ३५)।

शर्वस्य स्त्री शर्वाणी, तया शर्वाण्या। पुंयोगे ङीषि स्त्रीप्रत्यये आनुकि चागमे रूपम्। शर्वेति टाप्यशुद्धममङ्गलम्।

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्यामपाणिनीयप्रयोगनिरूपणो नाम सप्तमोऽध्यायः॥

## अष्टमोऽध्यायः

# अस्थान उपसर्गयोगः

यद्यप्युपसर्गा द्योतकास्तथापि न सर्वं उपसर्गाः सर्वमर्थं द्योतयन्ति किन्तर्हि कञ्चिदेव कश्चित् । तत्रापि न निर्विशेषं यं कमपि धातुमुपादाय, किन्तर्हि धातुविशेषम् । अयमर्थः—धातुविषय उपसर्गप्रतिनियमोऽस्ति, उपसर्गविषये च धातुप्रतिनियमः । यदाह—इङ् अध्ययने प्रायेणाधिपूर्वः । आङः शासु इच्छायाम् आङः शसि इच्छायाम् । एतयोराङ्पूर्वता नियता । नैतावाङं व्यभिचरतः । सम्पूर्वस्य ख्या प्रकथने इत्यस्य संख्यानेर्थे तिङि प्रयोगो नास्ति । न हि संख्याति इति गणयतीत्यर्थे क्वचित्प्रयुज्यते, तत्रार्थे सम्पूर्वस्य चक्षिङ एव प्रयोगदर्शनात् । एवमाङ् शृणोतिना युक्तस्तिष्ठतिना वा प्रतिज्ञानं द्योतयेन्न धात्वन्तरेण । उपेन सह चरितो जानातिरेवाद्य ज्ञानमाचक्षीत न विदिः । अयमत्र सारः—न हि यः कश्चिदुपसर्गो येन केनापि धातुना शक्यो योक्तुम् । किं च=उपसर्गाणां द्योतकत्वेपि क्वचित्तं तमुपसर्गमन्तरेण न स सोर्थो द्योतितो भवति । विपूर्वो हरतिरास्यविहरणे यमर्थमाह न तं केवलो हरतिः । आङ्पूर्वो ददातिर्यं परिग्रहरूपमर्थमाचष्टे न तं केवलो ददातिः । आदिशति उपदिशति इति यावर्थावाहतुर्न तावनुपसृष्टो दिशतिः । तस्माद्यथाऽस्थान उपसर्गयोगो दोषाय, तथा स्थाने प्रसक्तस्य परीहारोपि । तेन शब्दशक्तिस्त्वाभाव्यं सम्यग् विभाव्य प्रयोगविषयतां च निपुणं निरूप्य प्रवर्तनीयं सन्दर्भशुद्धिमभीप्सता सुमेधसा । कवयस्त्वत्र बहुव्यत्यासमाचरन्ति, अयं च बहुतमम् इति सङ्ग्रहेण तमिह दर्शयामः—

> यत्पादसंश्रयाः सूत मुनयः प्रशमायनाः ।
> सद्यः पुनन्त्युपस्पृष्टाः स्वर्धुन्यापोऽनुसेवया ।। (१, १, १५)

उपस्पृष्टा इति पूर्वार्द्धगतेन मुनय इत्यनेनाप्यन्वयि । उपस्पर्शः स्नानं भवत्याचमनं वा । क्वचित्स्पर्शनमपि । मुनय उपस्पृष्टाः सन्निधिमात्रेण सेविता इत्यर्थो विवक्षितः । तेनायमस्थान उपपूर्वः स्पृशिः । अनुसेवयेत्यत्रानुरप्यस्थाने । आङ् तु प्रयोज्यः । आसेवा पुनः-पुनः सेवा भवतीति न तिरोहितं सताम् ।

**पुत्रेति तन्मयतया तरवो ऽभिनेदुः (१, २, २) ।**

प्रतिश्रुदर्थे प्रतिपूर्व एव ध्वनत्यादिर्धातुः प्रसिध्यति । प्रतिध्वनिः सदृशो ध्वनिः । प्रतिः सादृश्ये । यथा प्रतिरूपप्रतिमादिषु शब्देषु । अभिस्त्वाभिमुख्ये वर्तते सामीप्ये वा । तेनाभिरिहास्थाने ।

**यदनुध्याऽसिना युक्ताः कर्मग्रन्थिनिबन्धनम् ।**
**छिन्दन्ति ... ... ... (१, २, १५) ।**

अनुध्याऽनुध्यानं नितरां ध्यानं वा न भवति । अनुरत्रानुकूल्ये वर्तते । अनुध्यानमानुकूल्येनानुग्रहबुद्ध्याऽनुजिघृक्षया ध्यानं भवति । यथा पितृचरणानुध्यातः पुत्र इति ।

**स्वनिर्मितेषु निर्विष्टो भुङ्क्ते भूतेषु तद्-गुणान् (१, २, ३६) ।**

अत्र निर्विष्ट इति प्रविष्टेऽर्थे प्रयोगः । सोऽयमन्यत्र दुरापः ।

**पदत्रयं याचमानः प्रत्यादित्सुस्त्रिविष्टपम् (१, ३, १९) ।**

प्रत्यादानं दत्तस्यादानं भवति । न ह्यत्र बलयेऽसुरराजाय नाकः केनाप्यदायि य इदानीं पुनरादीयेत । आच्छेदनं बलादपहरणं वाऽभिप्रेतम् । तमर्थं प्रत्याङ्पूर्वो ददातिर्नाह ।

**यथाऽविदासिनः कुल्याः सरसः स्युः सहस्रशः (१, ३, २६) ।**

दसु उपक्षय इत्युपपूर्वः प्रसिध्यति । यथा—उतो रयिः पृणतो नोपदस्यति (ऋ० ) इत्यत्र । धात्वर्थनिर्देशेऽप्युपपूर्वः क्षयतिः प्रयुक्त उपेन धातोः साहचर्यस्याभिव्यञ्जनाय ।

**समाधिनाऽनुस्मर तद्विचेष्टितम् (१, ५, १३) ।**

विपूर्वश्चेष्टतिर्विरुद्धाचरणे वर्तते । तेन विरिह विरुद्धमतिक्रदिति हेयः । नानार्थे विरिति चेत् , विचेष्टितानीति बहुत्वे प्रयोज्यम् ।

**महानुभावाभ्युदयोऽधिगण्यताम् (१, ५, २१) ।**

अधिकं गणनमधिगणनम् । अधिपूर्वस्य गणयतेः प्रयोग इहैव नान्यत्र ।

**निरूपितो बालक एव योगिनाम् (१, ५, २३) ।**

निरूपितो नियुक्त इति विवक्षति । न च तत्रायं शक्तः । अयं त्वस्मिन्नर्थे बहुलं प्रयुङ्क्ते । निरूपणं लक्षणं भवति, रूपाद् दर्शन इति णिचो विधेः ।

**शुश्रूषणे प्रावृषि निर्विविक्षताम् (योगिनाम्) (१, ५, २३) ।**



निर्वेश एकत्र वासः, तमिच्छताम् इत्यर्थः प्रकरणवशाल्लभ्यो नाम ।

परं निःपूर्वो विशिर्नात्रार्थे प्रयुक्तपूर्वः क्वचिद् दृष्टः। स तु भृतिं वाह भोगं वा। निर्वेशो भृतिभोगयोरिति ह्यमरः पठति।

**विज्ञानादेष्टृभिस्तव (१, ६, २)।**

उपदेष्टृभिरिति तूचितम्। अस्ति नामादेशस्य चोपदेशस्य चान्तरम्। तत्कथमयं तौ संकिरति सुमेधाः।

**तस्मिन्निर्मनुजेऽरण्ये पिप्पलोपस्य आस्थितः (१, ६, १६)।**

आङ्पूर्वस्तिष्ठतिर्नियतं सकर्मकः। अत आङ् अस्थाने। पिप्पलोपस्थ इत्यत्र सप्तम्याः श्रवणात्।

**कृष्णासुतानां स्वपतां शिरांसि। उपाहरत् (१, ७, १४)।**

उपाहरत्=अच्छिदत्। अप एव स्थाने स्यान्नोपः। उपशब्दस्तु सामीप्यमाह, अपश्च विश्लेषं विप्रकर्षं वा। केवलो हरतिर्वा प्रयुज्यताम्। गाण्डीवमुक्तैर्विशिखैरुपाहर (१, ७, १६) इत्यत्राप्यपवर्जनेऽर्थे उपहरतेः प्रयोगः।

**स्वलक्षणविलक्षितैः (१, ८, ३९)।**

विशब्दोऽनर्थकः। विरुद्धमतिकृद्वा सुत्यजः। स्वशब्द एवासाधारण्यमाह।

**रतिमुद्वहताबद्धा (१, ८, ४२)।**

रतिं वर्धमानां करोत्वित्यर्थ इति टीकाकृतः। उत्पूर्वस्य वहतेस्तु नात्रार्थे प्रसिद्धिः। उद्वहनं वहनं विवहनमुच्चैर्वहनं प्रापणं वा भवति।

**ऋषीणां चानुश्रृण्वताम् (१, ९, २५)।**

अत्रानुना नार्थः। अनुश्रृणोतिर्हि परम्परया श्रवणे वर्तते यथाऽऽम्नायेऽर्थेऽनुश्रव इत्यत्र। यथा वाऽनुश्रूयते शकारिरित्याख्यातो विक्रमो नाम भूपो बभूवेति। न हि श्रृणोत्यनुश्रृणोत्योरैकार्थ्यमस्ति।

... **मत्प्रतिज्ञामृतमधिकर्तुम् (१, ९, ३७)।**

अनर्थकोऽधिः। अधिकर्तुमधिकां कर्तुमित्याह कश्चित्समाधाने प्रत्यभिनिविष्टः। ऋतम् इति समभिव्याहारेण ऋता सत्या सा प्रतिज्ञा चिकीर्ष्यते न तु तत्र किञ्चिदुपजन्यते प्रकर्षो वाऽऽध्रीयते। ऋतमिति क्रियाविशेषणमित्यपि जल्पोऽविषह्यः। न हि प्रकारादिविशेषः कश्चिदभिधित्सितः।

**अधिजह्रुर्मुदं राज्ञः (१, १२, ६) ।**

आजह्रुरित्यर्थः। अधिपूर्वस्य हरतेरिहैव पुराणे नवः प्रयोगो नान्यत्र ।

**अग्निर्निसृष्टो दत्तश्च गरः (१, १३, २३) ।**

निसृष्टो ज्वालितो दीपितः। अत्रैवात्रार्थे प्रयोगः ।

**परैत्यनिच्छतो जीर्णः (देहः) (१, १३, २४) ।**

परैति क्षीयते नश्यति इत्यर्थं विवक्षति। प्रैतिपरैती समानार्थावितो लोकात्प्रस्थाने वर्तेते । परैतिः क्वचित्प्राप्तावपि दृश्यते । क्षयार्थस्तु न क्वापि विलोक्यते ।

**आशंसमानः शमलं गङ्गायां दुःखितोऽपतत् (१, १३, ३२) ।**

आशंसमानः=आशङ्कमानः। तमिममर्थम् आङः शसि इच्छायाम् इति धातुपाठ एव साक्षाद् विरुन्धे ।

**अवेक्षते महाभागस्तीर्थीकुर्वंस्तदाश्रमम् ।**

**तावद्यूयमवेक्षध्वं भवेद्यावद् इहेश्वरः (१, १३, ४९) ॥**

इह अवपूर्व ईक्षतिः प्रतीक्षणे प्रयुक्तः। उदुपसर्गः प्रतिर्वेममर्थं द्योतयतीति प्रतीतम्, न त्ववः ।

**अधिक्रमन्त्यङ्घ्रिभिराहृतां बलात् सभां सुधर्माम् (१, १४, ३८) ।**

अधिक्रमन्ति=आक्रामन्ति। तत्र पदानि न्यस्यन्तीत्यर्थः। अन्यत्राधिपूर्वस्य क्रमेः प्रयोगो दुर्लभः ।

**एवं कृष्णसखः कृष्णो भ्रात्रा राज्ञा विकल्पितः (१, १५, १) ।**

विकल्पेन एवंभूतो वात्वमेवंभूतो वेत्यात्मकेन पृष्ट इत्यन्वितार्थप्रकाशिका । शब्दमर्यादया तु नायमर्थः सुलभः । नानाविकल्पसंभवे कस्यचिदेकस्य पृच्छा विकल्प इति कल्पितो नूत्नोऽर्थः । विपूर्वस्य कल्पयतेः प्रश्नोऽर्थ इति बलात् स्वीकारयति नः ।

**परोक्षेण समुन्नद्धप्रणयौत्कण्ठ्यकारः (१, १५, ३) ।**

समुन्नद्धो वृद्धः । उन्नह्यतिरन्यत्रोर्ध्वं बन्धने वर्तते यथा समुन्नद्धजटाजूट इत्यत्र । परोक्षेण कृष्णस्यासंनिधाने सति ।

**प्रत्याहृतं बहुधनं मया परेषाम् (१, १५, १४) ।**

नार्थः प्रतिना । दत्तस्य पुनर्हरणं पुनरादानं प्रत्याहरणं भवति । यथार्थेषु प्रजुष्टानामिन्द्रियाणां प्रत्याहारः क्रियते ।

**अवेक्षमाणो निरगादश्रृण्वन्बधिरो यथा (१, १५, ४४)।**

अनवेक्षमाणोऽनुजभार्यादिप्रतीक्षामकुर्वन् । अवेक्षा प्रतिजागर इति त्वमरः। अन्यत्रापीह पुराणेऽवेक्षतेरस्मिन्नर्थे प्रयोग इत्यधस्तान्निरदिक्षाम ।

**कर्माणि निर्वाणविलम्बितानि (१, १६, २३)।**

निर्वाणं विलम्बितं येषु तानि हरेः कर्माणि । अवलम्बनमाश्रयणं भवति न विलम्बनम् । प्रतिनियतविषयौ विश्चावश्चोपसर्गौ न साङ्कर्यमर्हतः ।

**विसृज्य पुत्रं पप्रच्छ वत्स कस्माद्धि रोदिषि ।**
**केन वा ते प्रतिकृतम् ··· ··· (१, १८, ४०)।**

अपराद्धमपकृतम् इत्यर्थे प्रतिकृतमिति प्रयुङ्क्ते । प्रतिकारो वैरनिर्यातनं भवति चिकित्सनं वा कृते प्रतिकुर्वीत, प्रतीकारो व्याधेरित्यादिषु तथा दर्शनात् । न हि स्वाच्छन्द्येन शब्दशक्तिः शक्याऽन्यथयितुम् ।

**इति व्यवच्छिद्य स पाण्डवेयः (१, १९, ७)।**

व्यवच्छिद्य = निश्चित्य । अवच्छेदो व्यवच्छेदश्चेति समानार्थौ विशेषणे वर्तेते । यथा—**व्यवच्छिन्ना पदावलीति काव्यादर्शे ।**

**उपस्थितोऽग्रेऽभिगृहीतपाणिः (१, १९, १२)।**

प्रणतौ करसम्पुटीकरणेऽञ्जलिबन्धने प्रग्रहिः प्रसिध्यति नाभिग्रहिः । न हि धातोरुपसर्गासङ्गे प्रयोक्तुः कामचारः ।

**द्विजोपसृष्टः कुहकस्तक्षको वा (१, १९, १५)।**

उपसृष्टः प्रेरितः । विसृष्ट इति तु व्यवहारानुसारि स्यात् । अन्यत्रापीह बहुत्रास्मिन्नर्थे निष्ठायामुपसृजिं प्रयुङ्क्ते । तदस्य शीलम् ।

**आश्रुत्य तदृषिगणवचः परीक्षित् (१, १९, २२)।**

श्रुत्वेत्यर्थो विवक्षितः । आङ्पूर्वः शृणोतिस्तु प्रतिज्ञानमाह । कर्तर्यचि आश्रव इत्यत्रापि प्रतिजानीते कर्तुमित्यर्थसमाश्रयेण वचने स्थित उच्यते । आचार्योऽपि **प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता** (१, ४, ४०) इति सूत्रे तमेवार्थमभ्युपैतीति नातः प्रमाणतरा स्मृतिरपेक्ष्यते ।

**शुद्धं च तत्रामृशताभियुक्ताः (१, १९, २४)।**

आमृशत विमृशत चिन्तयत विचारयत । अन्यत्राङ्पूर्वो मृशिः स्पर्शने स्पर्शनपूर्वक आच्छेदने वा वर्तते । मृश आमर्शने इति धातुपाठः । आमर्शनं स्पर्श इति दीक्षितः । आच्छेदनेऽपि—**आमृष्टं नः परैः पदम् इति कुमारे यथा ।**

**श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः** (२, ३, १९)।

संस्तुतः समः प्रोक्तः। संस्तवः स्यात् परिचय इति कोषात् संस्तुतः परिचित इत्यर्थमाचक्षीत।

**यो ह्यात्ममायाविभवं स्म पर्यगात्** (२, ६, ३५)।

पर्यगात्=नागात्। परिर्निषेधे इत्यभिमानः। सत्यं परिर्वर्जने दृष्टः। परं स तदर्थः कर्मप्रवचीयो भवति। अपपरी वर्जने। निषेधवचनः परिरुपसर्गस्तु न क्वचिद् दृष्टचरः।

**··· दारहतुर्विस्फूर्जितैर्धनुष उच्चरतोऽधिसैन्ये** (२, ७, २५)।

उच्चरत उत्कर्षेण विचरत इति टीकाकृतः। उत्पूर्वस्य चरतेः सकर्मकत्वाकर्मकत्वे दृष्टे, ऊर्ध्वगमनातिक्रमणोत्सर्जनादयोऽर्थाश्च दृष्टाः। टीकाकृत्परिगृहीतोऽर्थस्तु नैकत्रापि विलोकितः।

**यस्मिन्कर्मसमावायो यथा येनोपगृह्यते** (२, ८, १४)।

समवपूर्वस्येणः प्रयोगस्तु प्रथते, समाङ्वपूर्वस्य त्विहैव स्थितः। अपार्थश्चेहाङ्। उपगृह्यते=अनुष्ठीयते। अयमप्यपूर्वोऽर्थः।

**प्रेङ्खं श्रिता या कुसुमाकरानुगै-**
**र्विगीयमाना प्रियकर्म गायती** (२, ९, १३)।

कुसुमाकरानुगा मधुकराः। विगीयमाना स्तूयमाना कीर्त्यमाना। विगानं तु विरोधे शब्दाभिहिते वर्तते।

**पश्यतस्तस्य तद्रूपमात्मनो न्यरुणद्धरिः** (२, ९, ३७)।

रूपं तिरोधत्तेति विवक्षति। निपूर्वो रुधिस्तु न तमर्थमाह।

**निरोधोऽस्यानुशयनमात्मनः सह शक्तिभिः** (२, १०, ६)।

आत्मनो जीवस्य। अनुशयनं लयः। अन्यत्र त्वयमर्थो न लक्ष्यते। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इत्यत्र श्रुतावनुशेतिरासङ्गे वर्तते।

**रेमात उद्दाय मृधे स्वरिक्थम्** (३, १, ३९)।

उद्दाय आच्छिद्य। शब्दार्थावुभावपि कवेरुपज्ञा। नह्युत्पूर्वो ददातिः क्वचिच्छ्रूयते। अर्थश्चाप्यपूर्वः।

**दिव्यं स्वपुंसां तेज आदिशत्** (३, ३, १०)।

आङस्थाने। अतिसर्जने दानेऽर्थे नायमुपसर्गो दिशिना युज्यते। तत्रार्थे प्रशब्दः प्रयुज्यतां यदि सोपसर्गः प्रयोग इष्यते।

समुषित औपगविर्निशां ततोऽगात् (३, ४, २७)।

सम्यगुषित इति विवक्षति। सम्पूर्वो वसिस्तु सहवासे रूढः।

पराहुतमन्तर्मनसः परेश (३, ५, ४४)।

पराहुतं दूरं हृतम्। अतैव परापूर्वस्य हरतेः प्रयोगः।

कः श्रद्दध्यादुपाकर्तुं योगमायाबलोदयम् (३, ६, ३४)।

उपाकर्तुं लक्षयितुं निरूपयितुं वर्णयितुम्। कोषस्तु संस्कारपूर्वं ग्रहणं स्यादुपाकरणं श्रुतेरित्युपाङ्पूर्वस्य करोतेर्वेदारम्भविधिविशेषोऽर्थं इत्याह।

श्रुतेश्च विद्वद्भिरुपाकृतायां
कथासुधायामुपसंप्रयोगः (३, ६, ३६)।

उपाकृतायां प्रकृतायाम्, प्रक्रान्तायाम्। न ह्युपाङ्करोतिः प्रारम्भसामान्ये वर्तते। उपसम्प्रयोगम् इत्यत्नोपेन नार्थः। शब्दोपजनः, नार्थोपजनः।

स इत्यनापृच्छ्यपुराणकल्पः (३, ७, ४२)।

अाऽस्थाने। आङामन्त्रणे वर्तते। आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम् (मेघ०) इत्यादिषु सहस्रशः प्रयोगेषु तदर्थस्य दर्शनात्।

तावन्ममेत्यसदवग्रह आर्तिमूलम् (३, ९, ६)।

अवग्रह आग्रहः। प्रसिद्धिस्त्वन्यत्न। अवग्रहो वर्षप्रतिबन्धे वर्तते (अवग्राहश्च), प्रातिशाख्यप्रसिद्धे पृथग्भावे प्रतिरोधे च। तेन प्रकृतेऽत्रोऽस्थाने।

अह्न्यापृतार्तकरणा निशि निःशयानाः (३, ९, १०)।

व्यापृतार्तकरणा इति नूच्यति। व्याङ्पूर्व एव पृङ् व्यायामे इति धातुः प्रयोगमवतरन्दृष्टः। निःशयाना इत्यत्र चास्थाने निः। निशीथः, निशा इत्यादिषु निपूर्वता दृष्टा न तु निःपूर्वता। अर्थमपेक्ष्यापि निशयाना इत्येव सुप्रयुक्तं स्यात्। निःशयाना इति निद्रायाः निःशेषतां ब्रूयात्।

यद्यद् धिया त उरुगाय विभावयन्ति
तत्तद्वपुः प्रणयसे सदनुग्रहाय (३, ९, ११)।

विभावयन्ति ध्यायन्ति। विभावनमवलोकनं भवति।

यन्मनो मयि निर्बद्धं प्रजाः संसृजतोपि ते (३, ९, ३५)।

निर्बन्धस्त्वाग्रहो हठोऽभिनिवेशो भवति। सम्पूर्वः सृजिः संसर्गे सम्पर्चने रूढः। केवलः सृजिरिष्यते। भिन्नार्थौ सर्गसंसर्गौ। सङ्करस्तु न युक्तः।

**तुष्टस्य मय्यवहितैर्निजकर्मपाकैः (३, १६, ८)।**

अवहितैः समर्पितैः। अवपूर्वो धाञल्नार्थेऽशक्तः।

**यां जीवधानीं स्वयमभ्यधत्त (३, १३, ३०)।**

स्वस्मिन्नात्मनि धृतवानित्यर्थं विवक्षति। अभिदधातिस्तु बन्धने वर्तते कथने वा। स्वयमिति स्वेनात्मनेत्यर्थमाह न तु स्वस्मिन्निति।

**रसां गताया भुव उद्विवर्हणम् (३, १३, ४३)।**

उद्विवर्हणमुद्धरणम्। यद्येवं नार्थो विना। अथ विशेष आधित्स्यते व्युद्वर्हणमिति वक्तव्यम्।

**स्वपुरुषेच्छानुगृहीतरूपम् (३, १४, ४९)।**

अस्थानेऽनुः। अनुग्रहः परत्र कृपा भवति। अत्र त्वानुकूल्येन ग्रहोऽनुग्रह इत्यलौकिकोर्थः समाश्रितः। एवमप्यन्वर्थो ग्रहणं विशिनष्टि नेच्छाम्। नह्यनुरिच्छया समस्यते। तेनेष्टसिद्धिर्दूरे।

**यदनुग्रहणेऽन्ययत्नः (३, १५, २१)।**

अस्थानेऽनुः। प्रसिद्धार्थपरित्यागो दोषः। अन्यत्राप्ययमनर्थकमनुं प्रयुङ्क्ते। प्रतिष्ठितमर्थं न जानाति जानन्वा 'जानन्नपि मेधावी जडवल्लोक आचरेत्' इति जडवदाचरति।

**व्युत्पादितमुदरभेदि भयं यतोऽस्य (३, १५, ३३)।**

व्युत्पादनमुत्पादनमात्रं न भवति किन्तर्हि प्रकृतिप्रत्ययादियोगेन विशिष्टोत्पत्तिः शब्दानाम्।

**दोर्दण्डविवरे हरता परार्ध्यहारेण (३, १५, ४१)।**

हरता विहरता। नानार्थत्वेपि धातूनां केवलो हरतिर्विहरणेर्थे न दृष्टः। नहि सायम्प्रातिको विहारो नित्यं सेव्य इति वक्तव्ये सायम्प्रातिको हार इति कश्चिद् ब्रूते ज्ञः।

**अत्रोपसृष्टमिति चोत्स्मितमिन्दिरायाः (३, १५, ४२)।**

उत्स्मिर्विस्मेरर्थे प्रयुक्तः। उत्स्मयो गर्वः। संस्कृते वाङ्मये नात्मना व्यस्मयत सः, तपः क्षरति विस्मयादित्यादिषु सहस्रशेषु प्रयोगेषु विपूर्वताया एव दर्शनादुत्पूर्वताऽत्यन्तं विरला।

**अङ्घ्रिद्वन्द्वं नखारुणमणिश्रयणं निदध्युः (१, १५, ४४)।**

निदध्युः=ध्यायेयुः। निपूर्वस्तु ध्यायतिरवलोकने रूढः, न चिन्तायाम्।

**लब्धाशिषः पुनरवेक्ष्य तदीयमङ्घ्रिद्वन्द्वम् (३, १५, ४४)।**

अवेक्ष्य=ईक्षित्वा । नास्यात्रार्थे रूढिः । अवेक्षा प्रतिजागर इति कोषविरोधश्च ।

**अहमुपाहृतस्तैः (३, १६, ११)।**

वशे कृत इत्यर्थं विवक्षति। अत्रार्थे उपाङ्पूर्वो हरतिर्न दृष्टपूर्वः। नवः शब्दो नवश्चार्थः ।

**उद्धसत्तडिदम्भोदघटया (३, १७, ६)।**

प्रहासो विहासः परिहास उपहासश्च श्रुताः। उद्धास इह श्रूयतां श्रोतव्यनिःशेषतायै ।

**व्योम्नि प्रविष्टतमसा न स्म व्यादृश्यते पदम् (३, १७, ६)।**

नार्थो व्याङ्भ्यामुपसर्गाभ्याम् । सन्तमसस्यान्धतमसस्य वा द्योतनायै तदुपसर्गद्वयस्य परीहार एव युक्तः। पदम् (पदमपि) न दृश्यत इत्येतावतैव तस्य द्योतितत्वात् ।

**यः स्वां प्रतिज्ञां नातिपिपर्त्यसभ्यः (३, १८, १२)।**

नार्थोऽतिना। न च सम्यक् पूरयतीत्यर्थ इति वाच्यम्। क्रियायुक्तोऽतिरविक्रमणमाह न पूजाम्। शब्दस्वाभाव्यात् ।

**यां विलोक्य प्रजास्त्रस्ता मेनिरेऽस्योपसंयमम् (३, १९, १७)।**

संहारेऽर्थे संयम इतीह पुराणे प्रसिद्धः। तत्रोपेन किमर्थान्तरमुपजन्यत इति पुराणकारः प्रष्टव्यः।

**करालदंष्ट्रश्चक्षुर्भ्यां संचक्षाणो दहन्निव (३, १९, ८)।**

सम्पूर्वश्चक्षिङ् संख्याने रूढः। संचष्टे गणयतीत्यर्थः। अयं तुच्छन्दोवत्करोतीति चक्षिङं दर्शने प्रयुङ्क्ते। एवं सत्यपि समानार्थः। दहने सम्यग्दर्शनस्यानुपयोगात् ।

**तथा स चाहं परिवोढुकामः**
**समानशीलां गृहमेधधेनुम् (३, २१, १५)।**

परिणयने केवलो वहतिरुत्पूर्वो विपूर्वो वा प्रसिध्यति, परिपूर्वस्त्वस्यैव वागधिपस्य कवेः।

**उत्सुनोषीक्षमाणानां कन्दुकक्रीडया मनः (३, २०, ३५)।**

आङ्पूर्वोऽभिपूर्वो वा सुनः प्रयोगो उत्सुनोषि विमथ्नासीति टीकाकृतः।

दृश्यते न तूत्पूर्वः। आसवः, आसुतिः, अभिषव इत्यादयः प्रयोगाः प्रथन्ते। न हि यः कश्चिदुपसर्गो येन केनापि धातुना शक्यो योक्तुम्।

**दम्पत्योः पर्यदात्प्रीत्या भूषावासः परिच्छदान्** (३, २२, २३)।

रक्षणार्थं दानं परिदानम् इति सायणप्रभृतयः। समर्थितं चेदमस्माभिरुपसर्गार्थचन्द्रिकायाम्। क्वचिदेव परम्परीणार्थविस्मृतिमूलो दानमात्रमर्थः, यथोत्तरे रामचरिते छद्मना परिददामि मृत्यव इत्यत्र। परिच्छदान् गृहोपकरणानि पात्रादीनि।

**आसिञ्चदम्ब वत्सेति**
**नेत्रोदैर्दुहितुः शिखाः** (३, २२, २५)।

अभ्यषिञ्चदिति तु व्यवहारानुगं स्यात्। आसेचनं नेत्रवाराम्। अभिषेचनं च नेत्रवार्भिरिति प्रतिष्ठितो व्यवहारः।

**ततस्त ऋषयः क्षत्तः कृतदारा निमन्त्र्य तम्** (३, २४, २५)।

निमन्त्र्य=आमन्त्र्य=गमनानुज्ञामधिगम्य, आपृच्छ्य। प्रकृते निरित्यस्थाने। निमपाकृत्याङ् प्रयोक्तव्यः, व्यवहारश्च रक्षितव्यः।

**स एव भगवानद्य हेलनं न गणय्य नः** (३, २४, २९)।

हेडृ अनादर इत्यत्रवोपसर्गं न व्यभिचरति। जानता जनेन व्यवहारो गोपायितव्यो न तु हापनीयः।

**एवं समुषितस्तेन कपिलेन प्रजापतिः** (३, २४, ४१)।

सम् इह इणं प्रति बुद्धि गमयति, इष्टार्थं च व्यवदधाति, तेन वर्ज्यीयम्।

**दक्षिणीकृत्य तं प्रीतो वनमेव जगाम ह** (३, २४, ४१)।

अन्यत्र वाङ्मयेऽत्रार्थे प्रदक्षिणशब्द एव प्रयोगमवतरन्दृष्टः। प्रदक्षिणशब्दोऽव्ययं चानव्ययं च। तेन प्रदक्षिणंकृत्वा, प्रदक्षिणीकृत्येति रूपद्वयं साधु।

**यथा पदं ते निर्वाणमञ्जसाऽन्वाश्नवा अहम्** (३, २५, २८)।

आङा नार्थः। अनुरेव व्याप्तिं वक्ष्यति। उभयोरन्वाङोः सहप्रयोगोप्यन्यत्र दुर्लभः।

**... निवृत्तं भयमुल्बणम्। अनिवृत्तनिमित्तत्वात् पुनः**
**प्रत्यवतिष्ठते** (३, २७, २०)।

पुनरवस्थितं भवतीति विवक्षति। पुनरुद्भवतीति श्रीधरः। प्रत्यवपूर्वस्तिष्ठतिर्विरोधे वर्तते। तत्र प्रत्यवतिष्ठामह इत्यसकृच्छाङ्करे ब्रह्मसूत्रभाष्ये तत्रार्थे श्रवणात्।

**चालनं व्यूहनं प्राप्तिर्वायोः कर्माभिलक्षणम्** (३, २६, ३७)।

व्यूहनं समूहनमिति विपरीतमाह।

**त्वक् स्पर्शस्य च सङ्ग्रहः** (३, २६, ३५)।

स्पर्शस्य सङ्ग्रहः सम्यग्ग्रहणं यया भवति सा त्वक्। सम्पूर्वो ग्रहिस्तु संक्षेपण एकीकरणे बन्धने वा प्रसिध्यति।

**कालकर्मगुणोपेतो जगदादिरुपाविशत्** (३, २६, ५०)।

प्रः प्रयोक्तव्यः। उपविशिस्तु नात्रार्थे प्रसिध्यति।

**यथा जलस्थ आभासः स्थलस्थे नावदृश्यते** (३, २७, १२)।

विरलोऽवपूर्वो दृशिः।

**ध्यातुर्मनः शमलशैलनिसृष्टवज्रम्** (**चरणारविन्दम्**) (३, २८, २२)।

निसृष्टमित्यत्र 'नि' अस्थाने। 'वि' प्रयोज्यम्।

... **सरित्प्रवरोदकेन तीर्थेन मूर्ध्न्यधिकृतेन**

अधिकृतेनेत्यत्राधिरधिकः। **शिवः शिवोऽभूत्** (३, २८, २२)।

**स्वे स्वे कालेऽभिगृह्णन्ति पुष्पाणि च फलन्ति च** (३, २९, ४१)।

नार्थोऽभिना। नैष शिष्टव्यवहारे दृश्यते ग्रहिणा युक्तः। केवलो ग्रहिः प्रयुज्यते।

**आस्तेऽवमत्योपन्यस्तं गृहपाल इवाहरन्** (३, ३०, १५)।

गृहपालः श्वा। आङ्पूर्वो हरतिर्णिचमन्तरा भुजिक्रियां नाह, आनयनमात्रमाचष्टे। शब्दस्वाभाव्यात्।

**यद्यसद्भिः पथि पुनः शिश्नोदरकृतोद्यमैः।**
**आस्थितो रमते जन्तुस्तमो विशति पूर्ववत्॥** (३, ३१, ३२)

आस्थितोऽधिष्ठितः (असद्भिः सह स्थितः) इति वाऽर्थोभिप्रेयते। आस्थितस्त्वाश्रितो भवति।

**नूनं दैवेन विहता ये चाच्युतकथासुधाम्।**
**हित्वा शृण्वन्त्यसद्गाथाः** ... ... (३, ३२, १९)।

विहता हताः। विपूर्वो हन्तिस्त्वन्तरायकरणे प्रतिबन्धने वर्तते।

**यदास्य चित्तमर्थेषु समेष्विन्द्रियवृत्तिभिः।**
**न विगृह्णाति वैषम्यं प्रियमप्रियमित्युत॥** (३, ३२, २४)

नार्थो विना। विपूर्वो ग्रहिस्तु पृथक्करणे विरोधे सम्प्रहारे च वर्तते।

**यं पूर्वे चानुसंतस्थुः (४, ३, ३१)।**

व्यवधायकः सम्शब्दो विवक्षितमाचरणार्थमपाकरोति। सम्पूर्वस्तिष्ठतिः समाप्तौ वर्तते। पश्चादनुना योगो व्यापन्नमाचरणार्थं न पुनरुज्जीवयितुमर्हति।

**इत्यध्वरे दक्षमनूद्य शत्रुहन् (४, ४, २४)।**

अनूद्य उदित्वा उक्त्वा। अस्थानेऽनुः। इहानुवादार्थः कश्चिन्नास्ति। उदितार्थस्य प्रयोजनवान्पुनरुपन्यासोऽनुवाद इतीर्यते।

**(रुद्रानुचरैः) पर्यद्रवद्भिर्विदुर (४, ५, १३)।**

परिराङोऽर्थे प्रसिद्धः। तेनैतयोर्युगपत्प्रयोगो न घटते।

**कुर्वन्ति तत्र ... न साधवो दैवबलात् कृते क्रमम् (४, ६, ४८)।**

क्रमः पराक्रमः। यद्यपि केवलस्य क्रमेस्तिङि उत्साहोऽर्थ इत्युपेयते व्याकरणाध्ययनाय क्रमते। उत्सहत इत्यर्थः। कृति तूपसर्गमन्तरा न सोर्थः प्रसिध्यति।

**येन मखो निनीयते (४, ६, ५०)।**

निनीयते पूर्यते, फलेन संयोज्यत इत्यर्थं विवक्षति। निपूर्वो नयतिस्त्वन्यत्रार्थेषु प्रसिध्यति। तेऽस्मत्कृतायामुपसर्गार्थचन्द्रिकायां द्रष्टव्याः।

**इति दक्षः कविर्यज्ञं ... ...**
**संनिन्ये यज्ञभावने (४, ७, ४८)।**

संनिन्ये पुनः प्रवर्तयामासेत्यर्थः। अन्यत्र सन्नयतिः संयोजने संमिश्रणे वा वर्तते।

**इति दक्षः कविर्यज्ञं भद्र रुद्रावमर्शितम् (४, ७, ४९)।**

रुद्रेण ध्वंसितमित्यभिप्रैति। अवपूर्वो मृशिर्विरलप्रयोगतमः। ध्वंसनमर्थस्तु न क्वचिद् दृष्टः।

**तमेव दयितं भूय आवृङ्क्ते पतिमम्बिका (४, ७, ५९)।**

आवृङ्क्त इत्यत्र धातुश्चोपसर्गश्चेत्युभयमप्यस्थाने। वृणुते वृणीत इति वा केवलो वृङ् सम्भक्ताविति धातुः प्रयोक्तव्यः।

**भक्तिं मुहुः प्रवहतां त्वयि मे प्रसङ्गः।**
**भूयादनन्ते महताममलाशयानाम्॥ (४, ९, ११)**

केवलो वहतिः प्रयोज्यः। प्रशब्दोऽस्थाने। प्रवहतिः प्रस्रवणे स्यन्दने वर्तते प्रवहणपूर्वकेऽपाकरणे वा। इदम् आपः प्रवहत यत्किं च दुरितं मयि (ऋ० १, २३, २२) इत्यत्र यथा।

**इत्यर्चितः स भगवानतिदिश्यात्मनः पदम् (४, ९, २६)।**

दिशिरतिसर्जने केवलो वा प्रयुज्यते प्रपूर्वो वा। अतिदेशो नामैकत्र सिद्धस्य धर्मादिर्वैकरणेनान्यत्र प्रापणं भवति। स्थानिवदादेशोऽनल्विधौ (पा० १, १, ५६) इतीदमतिदेशसूत्रम्। अराज्ञि राजवद् व्यवहारः। अयमतिदेशः।

**यत् (विष्णुपदम्) सूरयोऽप्राप्य**
**विचक्षते परम् (४, १२, २५)।**

अप्राप्य=अनासाद्य। दूरत एव परं केवलं पश्यन्तीति विवक्षति। तत्र विशेषणे विशब्दोऽस्थाने। विशेषेण साधु पश्यन्तीत्यर्थप्रसङ्गात्। तद्धि विवक्षितविपरीतम्।

**मुनीन् प्रणम्याशिषमभ्यवादयत् (४, १२, १८)।**

अवादयत् अवाचयदित्येव वा वाच्यम्। अभिपूर्वो वदिस्तु नमस्कारे वर्तते।

**गुणायनं शीलधनं कृतज्ञं वृद्धाश्रयम्।**
**संवृणतेऽनु सम्पदः ··· ··· (४, २१, ४४)॥**

संवृणते सम्यग्भजन्तीत्यर्थः। सम्पूर्वो वृञ् गोपन आच्छादने वा वर्तते। वृङ् सम्भक्तौ इति तु विना क्षमं प्रयोगमवतरन्दृष्टः। 'यमेवैष वृणुते तेन लभ्यः' इत्यादिषु शतशः श्रुतिस्मृतिवाक्येषु तथा दर्शनात्।

**भृग्वादीनामात्मजानां**
**सिसृक्षुः संसिसृक्षताम् (४, २४, ७२)।**

सम्शब्दो विरुद्धमतिकृत्। संसर्जनं मिश्रणं भवति सम्पर्चनं वा।

**तत्र समुद्य समयं मिथः (४, २५, ४३)।**

संवादः परस्परोक्तिर्भवति। परस्परत्वं च मिथः शब्देनैवोक्तम्। तेनास्थाने सम्शब्दः।

**संरम्भभीममविमृष्टमपेतरागम् (४, २६, २५)।**

अविमृष्टमनुज्ज्वलम्, अनवदातम्। विशब्दोऽस्थाने। अत्र सन्नयं मृश आमर्शने इत्यस्य निष्ठायां रूपम् इति बुद्धिं जनयति। वक्तुस्तु मृजू शुद्धावित्यस्य निष्ठायां रूपमभिसंहितम्।

**सैनिका भयनाम्नो ये बर्हिष्मन् दिष्टकारिणः (४, २८, १)।**

अनुपसृष्टो दिशिराज्ञापनं नाह। न हि देशः क्वचिदादेशमाचष्टे।

**पुर्यां प्रज्वारसंसृष्टः पुरपालोऽन्वतप्यत (४, २८, १३) ॥**

अन्वतप्यत=उपापीड्यत । अनुतापस्तु पश्चात्तापो भवति । कश्चिद् आह—अन्वतप्यत अनुक्षणमतप्यतेत्यर्थः । स उपसर्गकृतविशेषं न जानीते ।

**कौटुम्बिकः कुटुम्बिन्या उपातप्यत सान्वयः (४, २८, १२) ।**

उपातप्यत पीडितोभवत् । उपतापस्तु रोगे रूढः । द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः (५, २, १२८) इति सूत्रे उपतापो रोग इति वृत्तिकारः ।

**... ... दुहितरं तवा**

**उज्जह्रुस्ते प्रचेतोभ्य उपदिष्टाः स्वयम्भुवा (४, ३०, ४७) ।**

उज्जह्रुः समर्पयामासुः । उपः प्रयोक्तव्यः । उत्पूर्वो हरतिरुद्धार उन्नयन उन्मूलने वा दृश्यते ।

**किं सम्भृतं रुचिरयोर्द्विजभृङ्गयोस्ते (५, २, ११) ।**

सम्यग्भृतं पूर्णमिति विवक्षति । संभृतं समाहृतं भवति क्रियया निर्वृत्तं वा । असम्भृतं मण्डनमङ्गयष्टेरित्यत्र कुमारे संभृतं क्रियया निर्वृत्तं कृत्रिममित्युक्तम् । असंभृतं तत्प्रतिषेधः । निसर्गजं नैसर्गिकम् । यज्ञसंभाराः संभृताः । समाहृता इत्यर्थः ।

**तवा जनः संपरिवर्ततेऽस्मात् (५, ५, ९) ।**

परावर्तत इति तु युज्यते वक्तुम् । पराङ्मुखीभवनं ह्यर्थोभिप्रेतः ।

**स्वगर्भजातं मिथुनं सपत्न्या उपन्यस्य (५, ९, ७) ।**

उपन्यस्य=समर्प्य । अपूर्वोऽर्थः ।

**सत्त्वेन वा तमसा वानुरुद्धम् (५, ११, ४) ।**

उपरुद्धमिति तूचितम् । अनुरानुकूल्यमाह ।

**दुःखं सुखं व्यतिरिक्तं च तीव्रं**
**कालोपपन्नं फलमाव्यनक्ति (५, ११, ६) ।**

अभिजराङ्विपूर्वं इहैव । मन्ये छन्दःपूर्त्यर्थमाङासक्तः ।

**परस्परं चालषते निरन्धः (५, १३, ६) ।**


लषतिनाडो योगोपीहैव । अपूर्वतामिच्छति, व्यवहारानुरोधं नेच्छति ।
तदस्य शीलम् ।

**अवमानादीनि जनादभिलभते (५, १४, ३६)।**

अभिना युक्तो लभिरिहैव । उप-प्र-विप्राङास्तु लभिना युक्ता दृश्यन्ते नाम ।

**तस्य सुवर्चलायां प्रतीह उपजातः (५, १५, ३) ।**

उपजातः=जातः । उपेन नार्थः। वेद य उपजायते इत्यादिष्वृक्षु अधिको जायत इत्यर्थस्य दर्शनात् । तस्येहाविवक्षणादुपो वर्जनीयः ।

**भक्तेष्वलं भावितभूतभावनम् (५, १७, १८) ।**

भावितमिति प्रकाशितमित्यर्थे प्रयोगः। तेन विभावितम् इति वक्तुं युज्यते । विरित्युक्त इति दोषः ।

**यस्त्विह वा उग्रः पशून् पक्षिणो वा प्राणत उपरन्धयति (५, २६, १३)।**

नार्थ उपेन । शिष्टप्रयोगेष्वदर्शनात् । छन्दस्यपि केवलो रन्धिः प्रयुज्यते । विजानीह्यार्यान् ये च दस्यवो बर्हिष्मते रन्धया शासदव्रतान् (ऋ० १, ५१, ८)। अनुव्रताय रन्धयन्नपव्रतान् (ऋ० १, ५१, ९) इत्यत्र यथा ।

**यस्त्विह वा अगम्यां स्त्रियमगम्यं वा पुरुषं योषिदभिगच्छति (५, २६, २०)। यस्त्विह सर्वाभिगमः (५, २६, २१)।** अपूर्व उभयत्राभिगमेः प्रयोगः। मैथुने मिथुनीभावे केवलो गमिः प्रसिध्यति सूत्रेषु स्मृतिषु च । यस्य सर्वा गम्या भवति, यः सर्वत्राविशेषेण मैथुन्यमाचरति स सर्वाभिगम इहोक्तः। अपूर्वताकम्र एषोभिमुपसर्गमासजति, अन्यादृशो व्यवहारे समादृतो नैवमाचरेत् ।

**निरये वर्तमानं वज्रकण्टकशाल्मलिमारोप्य निष्कर्षन्ति (५, २६, २१)।**

निष्कर्षन्ति नीचैः कर्षन्तीत्यर्थः पुराणकारस्याभिमतः। तस्य प्रवेदनाय अवकर्षन्तीति वाच्यम् ।

**वायका इव सर्वतोऽङ्गेषु परिवयन्ति (५, २६, ३६)।**

परिरस्थाने। प्रो वाऽऽङ् वा प्रयोक्तव्यः। वेञ् तन्तुसन्तान इत्यस्य तयोरेकतरेण वासङ्गस्य दर्शनात् । प्रवाणी, ओतः, प्रोत इत्यादिषु तयोः प्रसिद्धेः । वायकाः सौचिकाः प्रसीव्यन्तीति तु युक्ततरं स्यात् ।

**न निष्पुनन्ति राजेन्द्र सुराकुम्भमिवापगाः (६, १, १८)।**



व्यर्थो निसः प्रयोगः । आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैरित्यादिषु केवलस्यैव पुनातेः प्रयोगो दृश्यते । पुनन्तु मा देवजनाः

**पुनन्तु मनसा धियः** (ऋ० ९, ६७, २७) इत्यत्र ऋच्यपि तथा। निष्पुनातिस्तु शूर्पेण धान्यादेर्निस्तुषीकरणे वर्तते।

**स कथं न्यर्पितात्मानं कृतमैत्रमचेतनम्** (६, २, ६)।

न्यर्पितम् इति ऋ गतिप्रापणयोरित्यस्मान्निपूर्वाण्णिचि निष्ठायां रूपम्। तस्य प्रयोगस्तु च्छन्दस्येव, अधः क्षिप्ते चार्थे।

**यदसौ भगवन्नाम म्रियमाणः समग्रहीत्** (६, २, १३)।

सम्पूर्वो ग्रहिरेकीकरणे संक्षेपणे बन्धने वा रूढः। उच्चारणे तु न क्वचिद् दृष्टः। सम्पूर्णमुच्चारितवान् इत्यर्थ इति कश्चिद् व्यवहारस्याकोविदः।

**सन्दष्टस्तप्त आहतः** (६, २, १५)।

सम्पूर्वो दंश दशने इति धातुः संयोजने वर्तते यथा सन्दंशः, सन्दष्टजिह्व इत्यादिषु।

**इति देव आपृष्टः प्रजासंयमनो यमः** (६, ३, ११)।

आङस्थाने। आङ्पूर्वः प्रच्छिरामन्त्रणे गमनाद्यनुग्रहणे वर्तते। उदाहृतं चाधस्तात्।

**कल्किः कलेः कालमलात्प्रपातु** (६, ८, १९)।

प्रपूर्वः पा रक्षण इहैव।

**प्रियं प्रियेव व्युषितं विषण्णा** (६, ११, २६)।

प्रोषितं विप्रोषितमिति वा प्रसिध्यति। व्युषितमिति तु विरलम्।

**परेऽनुजीवत्यपरस्य या मृतिः** (६, १४, ५४)।

परे प्रकृष्टवयसि पूर्वजे। तस्मिन्ननुजीवति अनुजस्य पश्चाज्जीवतीति विवक्षति। अनुपूर्वो जीवतिस्तु उपजीवने, आश्रित्य जीवने समाश्रयणे वा वर्तते।

**स उत्तमश्लोकपदाब्जविष्टरं**
**प्रेमाश्रुलेशैरुपमेहयन्मुहुः** (६, १६, ३२)।

उपमेहयन्=अभिषिञ्चन्। अन्यत्र प्रयोगो मृग्यः।

**मूर्ध्ना संजगृहे शापम्** (६, १७, ३७)।

व्यक्तमस्थाने समुपसर्गः। अर्थान्तरकृदिति।

**त आसन्नप्रजाः सर्वे नीता इन्द्रेण सात्मताम्** (६, १८, १९)।

आसन्नप्रजा उत्सन्नप्रजा अप्रजल इति विवक्षति। अस्थान आङ्। आङ्-पूर्वः सदिः सन्निधौ प्राप्तौ वा रूढः। अयं स्वर्थो वाच्यति।

**उद्वास्य देवं स्वे महिम्नि** (६, १९, २०)।

उद्वास्य=विसृज्य । अन्यत्रोद्वासयतिरपनयने निर्गमने विनाशने वा दृष्टः ।

**वितत्य जालं विदधे (पक्षिणः) तत्र तत्र प्रलोभयन्** (७, २, ५०)।

विदधे=जग्राह । विपूर्वो दधातिस्तु करणे वितरणे वा प्रसिद्ध्यति न तु विशेषेण धारणे । तत्र धृञ एव प्रयोगो विपूर्वस्य ।

**स एव तं शाकुनिकः शरेण**
**विव्याध कालप्रहितो विलीनः** (७, २, ५६)।

विलीनश्छन्नः । निलीन इति तु वक्तव्यम् ।

**आरोप्याङ्कमवघ्राय** (७, ५, २१)।

अन्यत्रात्रार्थ उपाङ्पूर्वस्य जिघ्रतेः प्रयोगः ।

**एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः** (७, ७, २६)।

पर्यस्तैर्निरस्तैः । अन्यत्र पर्यस्तं परितः क्षिप्तं प्रसृतं भवति ।

**वासुदेवे भगवति यथा संलभते रतिम्** (७, ७, ३३)।

संपूर्वो लभिरिहैव । उपसर्गासङ्गे व्यवहारं नाद्रियते ।

**ब्रह्मादयो येन वशं प्रणीताः** (७, ८, ८)।

नीता इत्येव पर्याप्स्यति । प्रकर्षादेरविवक्षणात्प्रशब्दोऽस्थाने ।

**श्रुत्वा (निनदम्) स्वधामाप्ययमङ्ग मेनिरे** (७, ८, १९)।

अप्ययो लयो भवति न तु प्रलयः प्रणाशः । अपायो व्ययो वा स्थाने स्यात् ।

**द्यौस्तत्सटोत्क्षिप्तविमानसङ्कुला**
**प्रोत्सर्पत ... ... ...** (७, ८, ३३)।

प्रोत्सर्पत=प्रोदसर्पत् । व्यचलत्, व्यैत् । उत्सर्पणं तूत्क्रमणं भवति ।

**श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि** (७, ८, ४४)।

अधिशब्दोऽधिकारे वर्तते । इह तु नेष्यते । प्रसभम् इत्यनेन गतार्थत्वात् ।

**भयं तत्त्वावमर्शनात्** (७, १५, २२)।

प्रायेण विपूर्वो मृशिरत्रार्थे दृष्टः । न हि यः कश्चिदुपसर्गः शक्यो येन केनापि धातुना योक्तुम् ।

**कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत्** (७, १५, ६३)।



केवलस्यानुपसृष्टस्य मृशेश्चिन्तनेऽर्थे प्रयोगोऽन्यत्र दुर्लभः ।

**हरिरित्याहृतो येन गजेन्द्रो मोचितो ग्रहात् (८, १, ३०)।**

आहृत उदाहृतो व्यपदिष्टः। व्याङ्पूर्वं उदाङ्पूर्वं एव वा हरतिरभिधाने वर्तते न त्वाङ्मात्रसहायः। तथालक्षणस्यानयनमेवार्थो नियतः।

**यथाबलं सोतिबलो विचक्रमे (८, २, २७)।**

चक्रमे पराचक्रम इति वा साधु स्यात्। वृत्तिसर्गतायनेष्वर्थेषु क्रमेरनुपसृष्टस्य प्रयोग आत्मनेपदे, उपपरापूर्वस्य वा। प्रकृत उत्साहोऽर्थः। तेन विरस्थाने।

**त्वया सङ्कथ्यमानेन महिम्ना सात्वतां पते।**
**नातितृप्यति मे चित्तम् ... ... ... (८, ५, १३)॥**

संकथा संलापः संभाषा संवादो भवति। भिद्येते हि कथासङ्कथे। तेन प्रकृते सम्शब्दोऽस्थाने।

**तांस्तान् रणे यैरभिसंहताः पुरा (८, ११, १)।**

अभिहता इत्येवोचितो न्यासः, आहता इति वा। संपूर्वस्य हन्तेरेकीकरणमर्थः। सङ्घातः पिण्डो भवति।

**निलीयमाना वृक्षेषु हसन्ती नान्वतिष्ठत (८, १२, २६)।**

अस्थानेऽनुः। अतिष्ठदित्येवार्थः।

**यो नोऽनेकमबान्धानां विभ्रंशं चक्षुरादिशत् (८, २२, ५)।**

आदिशत् अददात्। आङ्पूर्वो दिशतिरतिसर्जने न वर्तते। तदर्थलाभाय प्रः प्रयुज्यताम्।

**अवरोपितकर्तृवावाः (८, २२, २०)।**

आरोपितः कर्तृवादः कर्तृत्वं येषु ते। अवरोपणं ह्यारोपणविरोधि। न ह्याङोऽर्थेऽवः क्वचिच्छ्रूयते।

**कर्तुः प्रभोस्तव किमस्यत आवहन्ति (८, २२, २०)।**

अस्यतः क्षिपतः संहरतः (इदं जगत्)। आवहन्ति=अर्पयन्ति, उपहरन्ति। आवहतिस्तु जनने प्रसिध्यति।

**समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप (८, २४, ७)।**

उपप्लुताः=निमग्नाः। मन्य आङ्प्रयोज्यः परिर्वा।

**तस्य दीनतरं वाक्यमाश्रुत्य (८, २४, १६)।**

आश्रुत्य=श्रुत्वा। आङस्थाने।

**हविषि व्यचरत्तेन (९, १, १५)।**

हविषि गृहीते सति व्यचरद् अन्वतिष्ठद् यज्ञमिति शेषः। विपूर्वश्चरतिः पर्यटने वर्तते नानुष्ठाने।

**प्रगृह्य रुचिरं चापम् (९, १, २४)।**

गृहीत्वेत्येव शोभनं वचः। प्रपूर्वो ग्रहिः प्रायेण बन्धने वर्तते उद्यमने वा। अत एव प्रग्रहो बन्दी भवति। बाहुं प्रगृह्य बाहुमुद्यम्येत्यर्थः।

**तस्यास्तत् क्रन्दितं श्रुत्वा पृषध्रोऽभिससार ह (९, २, ५)।**

अस्थानेऽभिः। अभिसरणं सङ्केतस्थानं प्रति कामिन्याः सरणं प्रस्थानं भवति।

**कथं मतिस्तेऽवगताऽन्यथा (९, ३, २१)।**

अवगता उत्पन्ना। अवगमिस्तु बोधने ज्ञाने प्रसिद्धः।

**कालोऽभियातस्त्रिणवचतुर्युगविकल्पितः (९, ३, ३३)।**

अभियातोऽतिक्रान्तः। अभिरस्थाने। अतिः प्रयोक्तव्यः।

**न प्राभूद्यत्र निर्मुक्तो ब्रह्मदण्डो दुरत्ययः (९, ४, १४)।**

निरस्थाने। न हि निःशेषेण मुक्त इत्यर्थः।

**संत्रस्तचित्तोऽरणमेषमाणः (९, ४, ५२)।**

अन्वेषमाण इति प्रयोक्तव्यम्। केवल एषतिर्गमनार्थ इति गच्छन् प्राप्नुवन्नित्यर्थः स्यात्। अप्राप्तमन्विच्छन्निति त्वर्थो विवक्षितः।

**क्रियाकलापैः समुवाह भक्तिम् (९, ५, २५)।**

अस्थाने सम्। निरिति प्रयोगमर्हति। निर्वहणं सम्पादनं भवति।

**कालं वञ्चयता तं तमुक्तो देवस्तमैक्षत (९, ७, १५)।**

देवो वरुणः। ऐक्षत प्रत्यैक्षत। न हि केवल ईक्षतिः प्रतिपालने वर्तते। प्रतिर्वा प्रयोक्तव्य उद्वा।

**शुनःशेपं पशुं पित्रे प्रदाय समविन्दत (९, ७, २१)।**

अनर्थकः सम्। अयुक्तश्च विन्दतिनाऽन्यत्र।

**किं चाहं न भुवं यास्ये नरा मय्यामृजन्त्यघम् (९, ९, ५)।**



आङ्पूर्वो मृजिरहेव शोधने दृष्टः।

**सर्वानुगान् समहिनोत् (९, १०, १८)।**

सम्पूर्वस्य हिनोतेरेषोऽपूर्वः प्रयोगः। प्राहिणोदिति प्रसिद्धिसमाश्रयेण वक्तव्यम्।

**तां तृष्णां दुःखनिवहाम् (९, १९, १६)।**

निपूर्वो वहतिरिह जननेऽर्थे प्रयुक्तः। न चायं तत्र प्रसिध्यति। आङ्-पूर्वस्तु तत्र प्रसिध्यति। अयं च प्रसिद्धिद्वेषीत्याङं परिहरति।

**दृष्टं श्रुतमसद्बुद्ध्वा नानुध्यायेन्न संविशेत् (९, १९, २०)।**

संविशेत्=निर्विशेत्। संविशिस्तु शयने रूढः।

**श्रुतदेवां तु कारूषो वृद्धशर्म्मा समग्रहीत् (९, २४, ३७)।**

समग्रहीत्=भार्यां स्वीचकार=पत्नीत्वेऽवृणीत=पर्यणयत्। व्यक्तं सम् अस्थाने।

**भवद्भिरंशैर्यदुषूपजन्यताम् (१०, १, २२)।**

नार्थ उपेन। न च णिचा।

**यदर्थतन्त्रो न विहन्ति विक्रमम् (१०, २, २१)।**

विहन्ति उपहन्ति दूषयतीत्यर्थोऽस्याभिमतः। न च विपूर्वो हन्तिस्तत्र वर्तते। स हि विघाते प्रतिबन्धे वर्तते।

**यात्य् उपक्रोश्य तोकान् (१०, ८, २९)।**

उपक्रोश्य रोदयित्वा। उपक्रोशस्तु निन्दाऽकीर्तिर्भवति। प्राणैरुपक्रोश-मलीमसैर्वेति रघुकारप्रयोगः।

**आत्मनिर्वेशमात्रेण तिर्यग्गतमुलूखलम् (१०, १०, २६)।**

निर्वेशः प्रवेशः। निर्वेशो भृतिभोगयोरिति तु कोषः।

**पथि व्यशेत ग्रसनाशया खलः (१०, १२, १६)।**

शयानोऽतिष्ठदित्यर्थः। अस्थाने विः। विपूर्वः शीङ् संशयेर्थे वर्तते प्रायेण। विशयः संशयः। विशाय इत्यत्र विशब्दः शयनस्य पर्यायं द्योतयति। एतदर्थमसुसूत्रदाचार्य्यः— व्युपयोः शेतेः पर्याये (३, ३, ३९) इति।

**स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत (९, १३, १७)।**

व्यजायत=अजायत। विपूर्वस्य जनेः प्रसवोर्थः, यथा-समां समां विजायते (पा० ५, २, १२) इति सूत्र।

**तत्तेऽनुकम्पां सुसमीक्षमाणः (१०, १४, ८)।**

प्रतीक्षमाण इत्यर्थः। नेदं तत्र शक्तमित्युपसर्गार्थविदो विदुः।

**यदृच्छयाश्रमपदं जमदग्नेरुपाविशत् (९, १५, २३)।**

प्राविशदिति तु वक्तव्यम्। उपविशिस्त्वासने वर्तते।

**दामोदरेण तरसोत्कलिताङ्घ्रिबन्धौ (अर्जुनौ) निष्पेततुः (१०, १०, २७)।**

निष्पतनं तु निष्क्रमणं भवति। अवो विर्वा विनी वा निर्वा प्रयोक्तव्यः।

**एष वै सुरभिर्गन्धो विषूचीनोऽवगृह्यते (१०, १५, २५)।**

अवगृह्यते ज्ञायते। अपूर्वोऽर्थः।

**पुनरासाद्य संरब्ध उपक्रोष्टा पराक्स्थितः (१०, १५, ३०)।**

उपक्रोष्टा=आक्रोष्टा। उपक्रुशिस्तु निन्दायां रूढः।

**रामाय रामोऽस्त्रभृतां समग्रणीः (९, १५, ३३)।**

अग्रणीरित्यस्यार्थे समग्रणीरिति वाग्भ्रंशस्य बुद्ध्या कृतस्य परा सीमा। न हि पादपूरणाः क्वचित्समासावयवतामश्नुवते। वाक्ये पृथक्पदानीति व्यवह्रियन्ते।

**चक्षुःश्रवाः समसरत्तदमृष्यमाणः (१०, १६, ८)।**

समसरत् सम्मुखमागमत्, समीपमगमत्। संसरतिः सङ्क्रमणे संचरणे योन्यन्तरेषु परिभ्रमणे वा वर्तते।

**शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकम् (१०, १६, २०)।**

व्यतिहृतमित्यत्र व्यती अर्थविपर्यासकृताविति सुत्यजौ।

**ताः कृष्णमातरं ··· तुल्यव्यथाः समनुगृह्य (१०, १६, २१)।**

समनुगृह्य=हस्तेन धृत्वेत्यर्थ इति टीकाकृतः। सम् इत्यधिकम्। अनुगृह्णातिश्च तत्रार्थेऽशक्तः।

**प्रमोदनिभृतात्मानो गोपाः प्रीत्याऽभिरेभिरे (१०, १७, १४)।**

अभिपूर्वो रभिः परिरम्भं नाह। तत्र परियोग एव नियतः। अन्यत्रा-(१०, २१, ६) प्यभिरभेरत्रार्थे प्रयोगः।

**गोपैर्गोधनैः संवृतोऽविशद् (वनम्) (१०, १८, ८)।**

संवृतः परिवृतः। संवृतस्तु पिहितो भवति।

**अपरतान्यसमस्तसत्त्वम् (१०, २१, १०) ।**

अपरता निश्चेष्टा अन्ये समस्ताः सत्त्वा यत्र तद् (वृन्दावनम्) । उपपूर्वो रमिः प्रयोज्यो विरतिश्चेद् विवक्षिता ।

**ऽधोवसनं प्रगृह्यताम् (१०, २२, १९) ।**

गृह्यतामित्येव प्रयोक्तव्यम् । प्र-पूर्वो ग्रहिस्तु बन्धने वर्तते ।

**दध्यक्षताद्भिर्युयुजुः सदाशिषः (१०, २५, २९) ।**

प्रशब्दः प्रयोज्यः । प्रयुयुजिरे इति च वक्तव्यम् ।

**बाहुं प्रियांस उपधाय (१०, ३०, १२) ।**

उपधाय उपर्याधाय । अन्यत्रोपधानमधःस्थितस्यार्थस्योपरिस्थितेनाश्रयणं भवति । बाहुमुपधाय शेत इत्यत्र यथा । उपधाय = उपधानीकृत्य ।

**उन्निदधेऽम्बरम् (१०, ३०, २०) ।**

उन्न्योर्विरोधः । उदुपरिभावमाह । निर्नीचैस्त्वम् । ऊर्ध्वं दधारेति विवक्षिते निस्त्याज्यः ।

**कश्मलं ययुरपस्मृतनीव्यः (१०, ३५, ३) ।**

विस्मृतनीव्य इति तु वक्तव्यम् । अपस्मृतो मूर्च्छितो भवति ।

**पुष्पैः किरन्तो हरिमीडिरे सुराः (१०, ३६, १४) ।**

पुष्पाणि किरतेः कर्म भवन्ति । कश्चित्पुष्पाणि किरति कीर्यन्ते वा पुष्पाणि केनचिदिति । पुष्पाणां करणता त्ववाद्युपसृष्टस्य किरतेरुपेयते न केवलस्य । तेन पुष्पैरवकिरन्त आकिरन्त इति वा व्यवहार्यं भवति इति न व्यवहारविदो वेद्याः ।

**सदनेष्वभीष्यते (१०, ३८, ११) ।**

अभीष्यतेऽनुमीयते प्रतीयते । अत्रार्थेऽभिपूर्वस्य इणः प्रयोग इहैव ।

**प्रत्यादेशं भगवतः काङ्क्षन्त्यश्चावतस्थिरे (१०, ३९, ३४) ।**

प्रत्यादेश आदेशः । प्रत्यादेशो निराकृतिरिति तु कोषः । तेन व्यक्तं प्रतिरस्थाने ।

**नद्या जले सञ्जिहते जलौकसः (१०, ४०, १५) ।**

संजिहते प्रचरन्ति । सम्पूर्व ओहाङ् गत्यात उत्थाने रूढ इति सायणः ।

... ... ... ... .. जले वपुः ।

भूयः समाहरत्कृष्णो नटो नाट्यमिवात्मनः (१०, ४१, १)।

समाहरणं सङ्ग्रहणं संचयनं समाचयनं वा भवति न तु प्रतिसंहरणं तिरोधानं वा ।

वयं त्विहावमुच्य (१०, ४१, १०)।

अवमुच्य विश्रम्य । अवमुञ्चतिस्त्ववतारणेऽवरोपणे वर्तते—अवमुक्तोपानत्क इत्यत्र यथा ।

कुट्टिमेष्वाविष्टपारावत- (१०, ४१, २२) ।

आविष्टा उपविष्टाः । अपूर्वोऽर्थः ।

उद्धवोऽगात्कृताह्निकः (१०, ४६, ४९)।

आङ् त्यक्तः । आगादिति तु वक्तव्यम् । आङाभिमुख्ये, अर्वागित्यर्थे वा । न हि गतिशब्देनागतिर्गम्यते, अशक्तेः ।

विश्रमैश्चानुभाजितः (१०, ४७, ४१) ।

अनुभाजितः सत्कृतः । भज सेवायाम् भ्वादिः, भज विश्राणने चुरादिः । नैकतरस्याप्यनुपूर्वस्य प्रयोगः क्वचिद् दृष्टचरः । अर्थं चापि विवक्षितं नाहतुः । सभाजयतेः प्रयोगस्तु सर्वथौपयिकः स्यात् ।

भुवि भारं समाहितम् (१०, ५०, ७) ।

नार्थः समा । न हि सम्यगाधानं विवक्षितं भारस्य, किन्तर्ह्याधानमात्रम् ।

अन्योपि धर्मरक्षायै देहः संभ्रियते मया (१०, ५०, १०)।

समित्यस्थाने । संभरतिः साधने प्रणयने एकीकरणे वा वर्तते, न तु धारणे ।

ते परिक्रम्य सन्नम्य (१०, ५२, १)।

प्रणम्येति वक्तव्यम् । नमस्कारेऽर्थे प्रः प्रथते । सन्नमनं तु भारादिना नमनं भवति यथा सन्नतगात्रीत्यत्र ।

स श्मश्रुकेशं प्रवपन् व्यरूपयत् (१०, ५४, ३५)।

प्रवपिः प्रासने वर्तते न तु प्रकृष्टे प्रारब्धे वा वपने मुण्डने ।

**तं निर्जगार बलवान्मीनः (१०, ५५, ४)।**

निगीर्णवानिति विवक्षितोर्थः। निःशब्दस्तु तमर्थं विपरीतयतीति परिहार्यः।

**तेषां तु देव्युपस्थानात् प्रत्यादिष्टाशिषा स च।**
**प्रादुर्बभूव ... ... ... (१०, ५६, ३६)।**

प्रत्यादिष्टा दत्ता। प्रत्याङ्पूर्वो दिशिस्तु निराक्रियायां वर्तते।

**कन्यावरपरीप्सया (१०, ५८, ४२)।**

परीप्सया प्राप्तुमिच्छया। परीप्सा तु त्वरा भवति परित्राणेच्छा वा।

**मयोदितं यदन्वात्थ सर्वं तत् सत्यमेव हि (१०, ६०, ४९)।**

अन्वात्थ व्याख्यः=व्यवारीः। अनुवचनं स्वाध्यायो भवति, गुरुमुखाच्छ्रुत्वा पश्चादुच्चारणम्, न तु व्याख्यानं विवरणं वा।

**प्रेष्ठं न्यमंसत स्वं स्वम् (१०, ६१, २)।**

इहैव मन्यतिना नेरुपसर्गस्य योगः।

**स्वैर्विभ्रमैः समशकन् वनिता विभूम्नः (१०, ६१, ३)।**

प्रादिरहित एव शकेः प्रयोगः प्रथते। अयं तु प्रथां नानुविधत्ते।

**हेतुभिर्लक्षयाञ्चक्रुराप्रीतां दुरवच्छदैः (१०, ६२, ६७)।**

हेतुभिश्चिह्नैः। आप्रीताम् अतिप्रसन्नाम्। आङो विरलः प्रयोगोऽन्यत्र। दुरवच्छदैः=छादयितुमशक्यैः। अवोऽस्थाने। प्रो वा प्रयोक्तव्य आङ् वा।

**तुष्टाव प्रयताञ्जलिः (१०, ६३, २४)।**

प्रयताञ्जलिः=प्रगृहीताञ्जलिः=बद्धाञ्जलिः। प्रयतः पूतो भवति।

**साक्षादधोक्षज उरुव्यसनान्धबुद्धेः**
**स्यान्मेऽनुदृश्यः ... ... (१०, ६४, २६)।**

अनुदृश्यः=प्रत्यक्षदृश्यः। सोर्थः साक्षाच्छब्देनोक्तः। अनुशब्दस्तु तमर्थं विरुणद्धि।

**असम्बद्धा गिरो रूक्षाः कः सहेतानुशासिता (१०, ६८, ३९)।**

अनुशासिता=अनुशासने दण्डने समर्थः। अनुपूर्वः शासुरुपदेशे वर्तते न दमने (दण्डने), नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचिदित्यत्र (मनौ ६, ५०) यथा।

**किमुतेक्षाभिमर्शिनः (१०, ७०; ४३)।**

ईक्षा (प्रत्यक्षदर्शनम्) अभिमर्शः (स्पर्शः)। तौ स्तो यस्य तस्य। द्वन्द्वान्मत्वर्थीय इनिः। स्पर्श आमर्शः प्रसिध्यति नाभिमर्शः। अभिमर्शस्तु परामर्शो हठाद् दूषणं कन्यादीनाम्।

**युयुरधियुज्य सर्वतः (१०, ७१, १६)।**

सर्वत सर्वानुपस्करान् बलीवर्दादिष्वधियुज्यारोप्य। अधिपूर्वो युजिरिहैवाधाने।

**एवं सुहृद्भिः पर्यस्तः पुण्यश्लोकशिखामणिः (१०, ७१, ३१)।**

पर्यस्तः=परिक्षिप्तः=परिवृतः=परिगतः=परिवेष्टितः। अन्यत्र पर्यस्तः परितोऽस्तः क्षिप्त इत्येवार्थः। यथा कुमारे ताम्रोष्ठपर्यस्तरुचः स्मितस्य (१, ४४)। पर्यस्ता प्रसृता।

**अर्हयित्वाऽश्रुपूर्णाक्षो नाशकत्समवेक्षितुम् (१०, ७४, २८)।**

अवपूर्व ईक्षतिस्त्ववेक्षायां प्रतिजागरे वर्तते न तु दर्शनमात्रे।

**स्थलेऽभ्यगृह्णाद् वस्त्रान्तम् (१०, ७५, ३७)।**

उदगृह्णादिति वक्तव्यम्। उदकर्षदित्यर्थात्।

**गदया सौभ्यां व्याहत्य (१०, ७६, २६)।**

आहत्येति तु वक्तव्यम्। व्याङ्पूर्वो हन्ति विसंवादे विप्रलापे वर्तते वदतो व्याघात इत्यत्र यथा।

**यत्र यत्रोपलक्ष्येत ससौभः सहसैनिकः (१०, ७६, २३)।**

स्वस्य ज्ञापने सति स्वेतरज्ञापनमुपलक्षणमुच्यते। कश्चिदाह—उपशब्दो हीने। उपलक्ष्येत किञ्चिदपि लक्ष्येतेत्यर्थ इति। तत्र ब्रूमः—न हीषद्-दर्शन उपलक्षणं प्रयुक्तचरम्। किं च कर्मप्रवचनीय एवोपशब्दो हीने दृष्टो न तूपसर्गः। दोषापाकृतय आङ् प्रयोक्तव्यः।

**एतद् विदित्वा तु मयाऽपोवाहितो रणात् (१०, ७६, ३३)।**

अपवाहित इति शब्दः। अपोवाहित इत्यपशब्दः। पकारोत्तर ओकार आर्ष इति कश्चित् प्रलपति।

**आयात आर्यमिश्राभिसङ्गतः (१०, ७७, ८)।**

व्यर्थोऽभिः। केवलं पादपूरणः।

**ईयते पशुदृष्टीनां निर्जितः (१०, ७८, १६)।**

ईयते प्रतीयते। प्रतिर्दुष्परिहरः।

**अर्चित्वाऽऽवेद्य ताम्बूलम् (१०, ८०, २२)।**

निपूर्वस्य विदेः प्रयोगः प्रथते न त्वाङ्पूर्वस्य।

**परिभाष्याभ्यभाषत (१०, ८५, २)।**

परिभाष्य आभाष्य सम्बोध्य। आङ् स्थाने स्यात्। स्यादाभाषणमालाप इति चामरः पठति।

**केचनोद्बद्धवैरेण भक्त्या केचन कामतः (१०, ८५, ४३)।**

अस्थान उच्छब्दः। उद्बन्धिर्हि रज्ज्वादिनाऽऽत्मानं विलम्ब्य देहत्यागे वर्तते।

**अनीहयाऽऽगताहार्यनिर्वर्तितनिजक्रियः (१०, ८६, १४)।**

आहार्यं भोज्यम्। अभ्यवहार्यमिति तु वक्तव्यम्। कामं घञन्त आहार-शब्दस्तत्र वर्तते।

**स तर्कयामास कुतो ममान्वभूद्**
**गृहान्धकूपे पतितस्य सङ्गमः (१०, ८६, ४२)।**

नार्थोऽनुना। अनुभवतिश्च सकर्मको भवति।

**व्यसनशतान्विताः समवहाय गुरोश्चरणम् (१०, ८७, ३३)।**

समवहाय इत्यस्य स्थाने विहायेति वक्तव्यम्। समा नार्थः। अवश्चाप्यस्थाने। उभयोः सम्प्रस्थितयोरेको मन्थरगतिः पृष्ठतस्त्यज्यतेऽपरेणा-शुगेन। तत्रावहीयत इत्युच्यते।

**तन्माययाऽतो बुध आभजेत्तम् (११, २, ३७)।**

आभजेत् भजेत्। पूर्वे वैदिकवाङ्मये आङ्पूर्वो भजिर्भागदाने संभक्तौ दृष्टः।

**य आशु हृदयग्रन्थिं निर्जिहीर्षुः (११, ३, ४७)।**

ग्रन्थिनिर्हरणं त्वन्यत्र क्वाप्यदृष्टम्। ग्रन्थिभेदनं ग्रन्थिविस्रंसनं ग्रन्थिविकरणमित्यादयः प्रयोगास्तु प्रथन्ते नाम।

**कौर्मे धृतोद्रिरमृतोन्मथने स्वपृष्ठे (११, ४, १८)।**

अस्थान उद्। मथे विलोडन इत्यस्यानुपसृष्टस्य प्रयोगः प्रथते। उत्पूर्वस्त्वर्थान्तरं याति। उन्मथिता त्वगस्येति रघौ प्रयोगः। उन्मथिता उत्कृत्ता, उच्छृत्ता।

**जिज्ञासुभिः परमभागवतैः परीष्टः (११, ६, ११)।**

परितः सर्वतः पूजित इत्यर्थः। परिपूर्वो यजिरिहैव श्रूयते।

**तेषु दानानि पात्रेषु श्रद्धयोप्त्वा महान्ति वै (११, ६, ३८)।**

दानेऽर्थे केवलो वपतिर्न प्रसिध्यति। कामं तत्र निवपति निर्वपति इति वा प्रचरति प्रचुरम्।

**संसाधयामि भगवन्ननुशाधि भृत्यम् (११, ७, १६)।**

प्रायेण ण्यन्तकः साधिर्गमेरर्थे प्रयुज्यत इति वाग्योगविदः। परं तत्रोपसर्गपूर्वता न दृष्टचरी।

**वासे बहूनां कलहः (११, ९, १०)।**

संवास इति वक्तव्यम्। न हि वासः संवासेन समानार्थकः।

**स्वान्ते सकृच्छ्रमवरुद्धधनः (११, ९, २६)।**

अवरुद्धधनः संचितधनः। तत्रार्थेऽवरुधिरशक्तः।

**अप्रमत्तोऽनुयुञ्जीत मनो मय्यर्पयञ्छनैः (११, १३, १३)।**

अनुयुञ्जीत=अनुक्रमेणानन्तरायम् युञ्जीत। अनुयुजिस्तु पृच्छायां वर्तते।

**मायां मदीयामुद्गृह्य (११, २२, ४)।**

उच्छब्दोऽस्थाने। उद्ग्रहिरुच्चयन उत्क्षेपणे वर्तते। उद्गृहीतालकान्ता इत्यत्र मेघे यथा। इह तु संश्रये प्रयुक्तः।

**अखिलदुरितवृजिनबीजावभर्जन- (१२, ६, ६८)।**

अस्थानेऽवः। अवस्तु क्रियाया अपकर्षं न्यूनतां विफलतां वाह। प्रकृते तु सकलतां विवक्षति पुराणकारः।

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्यामस्थानकृतोपसर्गयोगनिरूपणो नामाष्टमोऽध्यायः॥

## नवमोऽध्यायः

# दुर्घटाः समासाः

समासेन वाक्यगतोऽर्थो यथातथं प्रतिपादनीयः, अन्यार्थत्वे तु दुष्यति स इति परिहरणीयः। वरं व्यासेनैव तदर्थो वक्तनीयः। समासः पदविधिः। सति च सामर्थ्ये पदविधिः। सापेक्षमसमर्थं भवत्यन्यत्र नित्यसापेक्षादिति समासघटनायां विशिष्यावधेयं भवति। न हि पदानां समसनमात्रमैकपद्यं वा समासो भवति। सन्ति नाम शास्त्रोदिताः समासाश्रयाः केचन विधयः, तेऽप्यनुवृत्याः। समानाधिकरणानामेव बहुव्रीहिर्भवति न व्यधिकरणानाम्। क्वचिदेव तु ज्ञापकसिद्धो जन्माद्युत्तरपदो व्यधिकरणो बहुव्रीहिरभ्यनुज्ञायते नाम। यत्र तत्र तत्समाश्रयणे तु दैव्या वाचः स्वरूपमेव विघटेत, अर्थश्च प्रयोक्तृतन्त्रः स्यान्न शब्दतन्त्रः, दुरूहता च परा प्रसज्येत। अत्र पुराणे समासविषयाणि शासनान्यसकृदतिक्रान्तानि। पदे पदे च व्यधिकरणो बहुव्रीहिः समाश्रितः। तमिमं शासनातिक्रमं समस्य विन्यस्यामः—

**तद्वाग्विसर्गो जनताघविप्लवः (१, ५, ११)।**

जनताघानां विप्लवो यस्मादिति विग्रहः। व्यधिकरणो बहुव्रीहिः। व्यधिकरणबहुव्रीहयश्चेह भूरयः। ते केचिदनुक्रम्यन्ते—**काल एव सर्वनिराकृतिः (१, ६, ४)**। सर्वस्य निराकृतिर्येन। **यो योगिनश्छन्दमृत्योः (१, ९, २९)**। छन्देन स्ववशेन मृत्युर्यस्य, तस्य। **हत्वा स्वरिक्थस्पृधः (१, १०, १)**। स्वरिक्थाय स्पृत् सङ्ग्रामो येषां, तान्। **स उच्चकाशे धवलोदरोदरोऽप्युरुक्रमस्याधरशोणशोणिमा (१, ११, २)**। अधरस्य शोणः (रक्तो वर्णः) तेन शोणिमा यस्य। **सर्वसद्गुणमाहात्म्यः (१, १२, २४)**। सर्वैः सद्गुणैर्माहात्म्यं यस्य। **यत्तेजसा नृपशिरोऽङ्घ्रिमहन्मखार्थे (१, २५, ९)**। नृपशिरस्वङ्घ्रिर्यस्य, तम्। **कौस्तुभरत्नकन्धरम् (२, २, १०)**। कौस्तुभरत्नं कन्धरायां कन्धरासन्नवक्षसि यस्य, तम्। **तावच्छशास क्षितिमेकचक्राम् (३, १, २०)**। एकस्यैव चक्रं सैन्यं शासनं वा यस्यां सा, ताम्। **अवतस्थुः किल कृत्यशेषाः (३, २, १४)**। कृत्ये शेषो यासां ताः। **तद्विधेहि नमस्तुभ्यं कर्मस्वीड्यात्मशक्तिषु (३, १३, ८)**।

आत्मनः शक्तिर्येषु । अस्मच्छक्येष्वित्यर्थः । **परमभागवतप्रसङ्गः** (३, १६, २१)। परमभागवतेषु प्रसङ्गोऽस्य, सः। **शिवद्विषं धूमपथश्रमस्मयम्** (४, ४, १०)। धूमपथः कर्ममार्गः, तत्र यः श्रमः, तेन स्मयो गर्वो यस्य, तम्। **प्रजापतेर्दग्धशीर्ष्णो भवत्वजमुखं शिरः** (४, ७, ३)। अजस्य मुखं यस्मिंस्तत् (शिरः)। **मुक्तसङ्गप्रसङ्गोऽयम्** (४, १६, १८)। मुक्तसङ्गेषु प्रसङ्गोऽस्य। **इत्यनुक्रोशहृदयः** (४, २४, ३२)। अनुक्रोशो हृदये यस्य। सप्तमी विशेषणे बहुव्रीहौ इति सप्तम्यन्तेन पूर्वं निपतितव्यम्। कण्ठेकाल इति मूर्धाभिषिक्तमुदाहरणम्। **मुनिव्रताः** (४, २४, ७१)। मुनीनां व्रतानि येषां ते। **पुरीषसुरभिसौगन्ध्यवायुः** (५, ५, ३३)। पुरीषस्य सुरभिणा गन्धेन सौगन्ध्यं यस्य (वायोः) सः। सुरभिशब्द इह सौरभ्येऽर्थे प्रयुक्त इति दोषान्तरम्। **अदृश्यझिल्लीस्वनकर्णशूलः** (५, १३, ५)। कर्णयोः शूलं यस्य स कर्णशूलः। **स्यान्निष्फला कृपणार्थेव याच्ञा** (६, ११, १९)। कृपणादर्थः प्रयोजनं यस्याः सा। **तदर्थे तर्षचेतसाम्** (८, ८, ३८)। तर्षश्चेतसि येषाम्। **समानकरणाभरणम्** (८, ८, ४२)। समानयोः कर्णयोराभरणे यत्र। **विरजाम्बरसंवीतनितम्बद्वीपशोभया काञ्च्या** (८, ८, ४५)। नितम्बद्वीपे शोभा यस्याः, तया। **जानन्ति यद्विरचितं खलु सत्त्वसर्गाः** (८, १२, १०)। सत्त्वेन सर्गो येषां ते सत्त्वसर्गाः। **लसद्दुकूलपर्यस्तनितम्बमेखलाम्** (८, १२, १८)। नितम्बे मेखला यस्यास्ताम्। **तद्दर्शनात्युत्सवगात्रवेपथुः** (८, १७, ६)। गात्रेषु वेपथुर्यस्य सः। **तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम्** (८, २०, १२)। ब्रह्मणो ब्राह्मणस्य तनुरस्य, तम्। **जाम्बवानृक्षराजस्तु भेरीशब्दैर्मनोजवः** (८, २१, ८)। मनसो जवोऽस्य सः। **नवकुङ्कुमकिञ्जलकमुखपङ्कजभूतयः** (१०, ५, १०)। नवकुङ्कुमकिञ्जलकैर्मुखपङ्कजभूतयो यासां ताः। **व्यालोलकुण्डलपयोधरहार-शोभाः** (१०, ५, ११)। व्यालोलकुण्डलपयोधरहारैः शोभा यासां ताः। **रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ** (१०, ९, ३)। रज्ज्वाकर्षेण श्रमो ययोर्भुजयोस्तौ। **च्युतप्रसूनानुगतिः** (१०, ९, १०)। च्युतैः प्रसूनैरनुगतिर्यस्याः, सा। **अज्ञानसंज्ञौ भवबन्धमोक्षौ** (१०, १४, २६)। अज्ञानेन कल्पिते संज्ञे ययोः, तौ। **ब्रह्मन् परोद्भवे कृष्णे इयान् प्रेमा कथं भवेत्** (१०, १४, ४९)। परस्माद् उद्भवो यस्य स परोद्भवः। **उरुभारजन्मनाम्** (चमूपतीनाम्) (१०, २७, ९)। उरूणां भाराणां जन्म येभ्यस्तेषाम्। **कबररशनाग्रन्थयः** (१०, ३३, ८)। कबरेषु रशनासु च ग्रन्थयो यासाम्। **दासीशता अपि विभो विदधुः स्म दास्यम्** (१०, ५९, ४५)। दासीनां शतानि यासां ताः। सामानाधिकरण्ये तु शतदासीका इति स्यात्। **प्रतीक्षन् गिरिशादेशं स्ववीर्यनशनं कुधीः** (१०, ६२,-

११)। स्ववीर्यस्य नशनं नाशो यस्मात्। क्रीडानरशरीरस्य (१०, ७६, १)। क्रीडार्थं नरस्येव शरीरं यस्य। मां तावद्रथमारोप्य हयरत्नचतुष्टयम् (१०,-८३, ३२)। हयरत्नानां चतुष्टयं यत्र। स्त्रीभिः ··· ··· नवयौवनकान्तिभिः (१०, ९०, २)। नवयौवनेन कान्तिर्यासाम्। कामुका अहिमन्यवः (११, ५, ७)। अहेरिव मन्युर्येषां ते। अहोरात्रैश्छिद्यमानं बुद्ध्वाऽऽयुर्भयवेपथुः (११, २०, १६)। भयेन वेपथुर्यस्य। कुयोगिनं विध्यति सर्वसङ्गम् (११, २८, २८)। सर्वैः सङ्गोऽस्येति सर्वसङ्गः, तम्। ध्यायन्ति वेदहृदया मुनयः (१२, ८, ४२)। वेदो हृदये येषां ते।

इत्थमिह पुराणे बहुलो व्यधिकरणो बहुव्रीहिरिति सुष्ठु निर्दर्शितं भवति। शास्त्रकारेण तु अनेकमन्यपदार्थे (२, २, २४) इति सूत्रयता प्रथमान्तानामेव बहुव्रीहिरनुशिष्टः, क्वचिदेव व्यधिकरणः समाश्रेयः। सप्तमीविशेषणे बहुव्रीहौ (२, २, ३५) इति सप्तम्यन्तस्य पूर्वनिपातं शासता ज्ञापितः। ज्ञापकसिद्धं न सर्वत्रेति परिभाषाकाराः। नहि यत्तद्विभक्तिकं यत्किञ्चित् पदकदम्बकमन्यार्थे वर्तमानं बहुव्रीहिर्भवति।

तद्वाग्विसर्गः (१, ५, ११)।

स चासौ वाग्विसर्गश्चेति समानाधिकरणं तत्पुरुषं स्वीकरोति श्रीधरः। एवं वृत्तिच्छन्नं तच्छब्दमुत्तरवाक्यगतो यच्छृण्वन्ति इत्यत्र यच्छब्दो नार्हति प्रत्यवमर्ष्टुम्। तेन स वाग्विसर्ग इति व्यासेन वाच्यम्। बहुलं चेह कविरयमस्थाने समासमाश्रयते। कांश्चिदेव तु तत्र दिशः संगृह्यन्ते—नेह यत्कर्म धर्माय न विरागाय कल्पते। न तीर्थपदसेवायै जीवन्नपि मृतो हि सः (३, २३, ५६)। यच्छब्देन षष्ठचन्तेन (अन्यत्र सप्तम्यन्तेन) पूर्वपदेन यत्र तत्र समासमाश्रयते तस्य गुणभावं च नेक्षते। वैकारिकाद् विकुर्वाणान्मनस्तत्त्वमजायत। यत्सङ्कल्पविकल्पाभ्याम् ··· ··· ··· (३, २६, २७)। यस्य सङ्कल्पविकल्पाभ्यामित्येवं व्यासेन वक्तव्यम्। स तस्य हस्तोत्कीलितस्तवासुरो विक्रीडतो यद्वदहिर्गरुत्मतः (७, ८,-२६)। हस्ताद् उत्कीलित इति व्यासोक्तिरेव श्रेयसी। तथा हि विधेयता व्यक्ततरा भवति। किं च। षष्ठचन्तेनोपमानेन गरुत्मता सम्बन्धाय हस्तस्य पृथक्पदताऽपेक्ष्यते, अन्यथा गरुत्मत इत्यनन्वितं स्यात्। कुलिशाक्षतत्वचम् (७, ८, २९)। कुलिशेनाप्यक्षता त्वग् यस्य, तम्। इममर्थं समासो नार्पयतीति नासौ श्रेयः। अर्थानर्थेक्षया लोभं (जयेत्) (७, १५, २२)। अर्थेऽनर्थेक्षयेत्येवं व्यासेन चेदुच्येत विस्पष्टतरं स्यात्। यस्य साक्षाद् भगवति ज्ञानदीपप्रदे गुरौ। मर्त्यासद्धीः

(७, १५, २६)। मर्त्योऽयम् इत्यसती धीरित्येवं व्यस्तं वाच्यम्। **ममार्चनं नार्हति गन्तुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात्** (८, १७, १७)। कप्प्रत्ययेन समासान्तेन फलहेतुकत्वादिति बहुव्रीहिरिति प्रतीतिरनिष्टा जायते। अर्चनं हि फलस्य हेतुः, फलजनकं न तु फलजन्यम्। **स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसङ्कटे** (८, १९, ४३)। नर्मणि विवाहे चेति व्यासेन वक्तव्यम्। अस्थान इतरेतरद्वन्द्वः। द्वन्द्वघटकयोः पदयोरभिधेयेऽत्यन्तभेदात्। नर्म च विवाहश्च दूरविप्रकृष्टार्थौ। अयं तु समसनं पदयोः पदानां वैकीकरणमैकपद्यमात्रं समासं मनुते। **भृङ्ग्यग्निदंष्ट्र्यसिजलद्विजकण्टकेभ्यः** (१०, ८, २५)। इतरेतरद्वन्द्वं बहुत्रास्थाने करोति। इतरेतरद्वन्द्वो हि परस्परसम्बद्धेषु धवखदिरपलाशाः, रामलक्ष्मणभरतशत्रुघ्ना इत्यादिष्विष्ट इति न पश्यति। समस्यंश्चार्थसन्निकर्षप्रयुक्तं पदसान्निध्यमपि नापेक्षते। अक्रमं पदानि न्यस्यतीत्युद्वेगाय भवति सचेतसाम्। **यत्तीर्थबुद्धिः सलिले, न कर्हिचिज्जनेष्वभिज्ञेषु** (१०, ८४, १३)। यस्य तीर्थबुद्धिरित्येवं व्यासेन वक्तव्यं यथोत्तरवाक्ये 'स' इत्यनेन प्रतिनिर्दिश्येत। **आविस्तिरोऽल्पभूर्येको नानात्वं यात्यसावपि** (१०, ८५, २५)। क्वचिदाविर्भवति, क्वचित्तिरो भवति, क्वचिदल्पो भवति क्वचिद् भूरिरित्यस्मिन्नर्थे समासो न घटते। अयं तु बलाद् घटयति। **स्मरोद्गीथः परिष्वङ्गः पतङ्गः क्षुद्रभृद् घृणी। बडिशे** ... ... (१०, ८५, ५१)। स्मरोद्गीथः इत्यस्थाने समासः। स्मरादयः समकक्षतया निर्दिदिक्षिताः। तेन स्मरेण सहित उद्गीथ इति मध्यमपदलोपी समासो नेष्यते।

> **प्रासादशिखिरारूढाः कुरुनार्यो दिदृक्षया।**
> ... ... ... **प्रेमव्रीडास्मितेक्षणाः** (१, १०, १६)॥

प्रेमव्रीडास्मितपूर्वाणि ईक्षणानि यासां ता इत्येवं विगृह्णाति कश्चित् समासं च सुघटं पश्यति। नायं विज्ञो विजानाति समानाधिकरणे तत्पुरुष एव मध्यमपदस्य (उत्तरपदस्य वा) लोपोऽभ्यनुज्ञायते यथा शाकपार्थिव इत्यत्र। शाकप्रियश्चासौ पार्थिवश्च। बहुव्रीहौ तु नैष विधिः।

**अस्य गृहीतपाणिभिः** (१, १०, २८)।

गृहीतः पाणिर्यासां ता गृहीतपाणयः। केन गृहीत इति न व्यक्तिमेति। अस्येति तु शैषिकी षष्ठी। कर्तरि षष्ठ्यां तु अनेन गृहीतः पाणिर्यासामिति विग्रहे गृहीतपाणय इत्यसमर्थसमासः। क्तान्तेन योगे निषिद्धा षष्ठीत्यपि नाद्रियते। क्तान्तं चापि वृत्तिच्छन्नं बहिर्भूतेनेदमा न योगं यातीति सर्वमाकुलम्।

**प्रद्युम्नसाम्बाम्बसुतादयोऽपराः (१, १०, २९)।**

प्रद्युन्नसाम्बाम्बाः सुता यासां ताः (रुक्मिणी-जाम्बवती-नाग्नजित्यः)। ता आदयो यासां ताः सत्यभामादय इति द्राविडप्राणायामः शोभतेऽद्राविडस्याप्यस्य कवेः। अपि नामायं द्राविडः स्यात्।

**क्षतजाक्षं गदापाणिम् (१, १२, ९)।**

क्षतजेन रक्तेन युक्ते अक्षिणी यस्य। उत्तरपदलोपिनो बहुव्रीहेरननुज्ञातत्वाद् दुर्घटोऽयं समासः।

**हर्षशोकयुतस्तस्माद् गन्ता तीर्थनिषेवकः (१, १३, ५८)।**

तीर्थनिषेवक इत्यत्र भविष्यदर्थे ण्वुल्। अकेनोर्भविष्यदाधमर्ण्ययोरिति षष्ठ्यां निषिद्धायां षष्ठीसमासः सुतरां निषिद्धस्तिष्ठति।

**पदयोः पतिताश्रुमुख्याः (१, १५, १०)।**

पदयोः पतिताया अश्रुमुख्याः (तव पत्न्याः) इति विवक्षति। पतिताश्रुमुख्या इत्यसमर्थसमासः। पतितेति पादयोरित्यपेक्षते। सापेक्षमसमर्थं भवति। असामर्थ्ये च समासो न। समर्थः पदविधिः। समर्थपदाश्रितः पदानां विधिर्भवति। अत्र पुराणेऽसति सामर्थ्ये यत्र तत्र समासः संश्रितः। काश्चिदेव दिश उपाह्रियन्ते—**गुणैरसाम्यानतिशायनस्य (१,१८,२०)**। असाम्यः=अविद्यमानसाम्यः। अनतिशायनः=अविद्यमानमतिशायनमतिशयो यस्य सः। द्वयोर्बहुव्रीह्योर्विशेषणसमासः। साम्यातिशायने गुणसापेक्षे। सापेक्षमसमर्थं भवतीत्यसमर्थसमासः। **त्रिधामभिः परिक्रामत्प्राधनिकैर्दुरासदम् (३, ८, ३१)**। परिक्रामदिति त्रिधामभिरित्यपेक्षते। प्राधानिकैरित्यनेन च समस्यते। असमर्थश्च समासो भवति। **परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन् (३, १५, ३७)**। अन्वेषणीयचरणावित्यसमर्थसमासः। **सिध्येत ते कृतमनोभवधर्षितायाः (३, २३, ११)**। ते=त्वया। कृतमनोभवादिरसमर्थः समासः। सामर्थ्यलाभाय त्वत्कृतमनोभवधर्षितायाः इति वक्तव्यम्। **कण्ठं च कौस्तुभमणेरधिभूषणार्थं मनसि कुर्यात् (३, २८, २६)**। अधिभूषणार्थमित्यसमर्थसमासः। भूषणमलङ्करणमिति कौस्तुभमणिसापेक्षम्। **आत्ममांसादनं क्वापि स्वकृत्तं परतोपि वा (३, ३०, २५)**। वृत्त्यन्तर्गतस्य मांसस्य कृत्तमित्यनेन सम्बन्ध इतीन्द्रस्येव बलकृतिः। **यौगपदैककर्तरि (४, ४, २०)**। यौगपदेन (=यौगपद्येन एकस्मिन् कर्तरि इति विग्रहः) यौगपद्यं नाम क्रियाया धर्मो न तु पुरुषस्य। को नामासंमूढः पुरुषे कर्तरि यौगपद्यं पश्येत्। **ये बर्हिषो भागभाजं पराद्दुः (४, ६, ५)**। बर्हिषः [illegible]। [illegible] भागः, तं भजतीति विग्रहः।

व्यक्तं भागभागित्यसमर्थसमासः, बर्हिरपेक्षणात् । **नलिनीषु कलं कूजत्खगवृन्दोपशोभितम्** (**भूतेशगिरिम्**) (४, ६, १९) । कूजत्खगादिरसमर्थसमासः, नलिनीष्वित्यस्यापेक्षणात् । ··· **कुसुमाकरवायुना** । **चलत्प्रवालविटपनलिनीतटसम्पदि** (जलाशये) (४, २५, १८) । चलदिति वायुमपेक्षते इति सापेक्षमसमर्थम् । **विहाय जायामतदर्हाम्** (४, २६, ४) । तच्छब्देन वृत्त्यन्तर्भूतेन विहायेत्यत्रोक्तं विहानं प्रत्यवमिमृक्षति । सोऽयमस्य बलात्कारः । **पञ्चपञ्चाद्भुतं गृहम्** (६, ५, ८) । गृहमित्यनेन संसृष्टार्थमद्भुतमिति पञ्चपञ्चेत्यनेन समस्यते । न च तेनेदं संसृज्यते । पञ्चभिरावृत्ताः पञ्च = पञ्चपञ्च । पञ्चविंशतिरित्यर्थः । समासस्तु दुर्घटः । पञ्चविंशतेर्वस्तूनां (गृहम्), पञ्चविंशत्या वस्तुभिः कृतमिति वा (गृहम्) इह पञ्चपञ्चशब्देनोक्तम् । सेयं प्रहेलिकेव भवति । **पिपीलिकाभिराचीर्णमेदस्त्वङ्मांसशोणितम्** (७, ३, १५) । आचीर्णादिरसमर्थसमासः । सापेक्षत्वात् । **न युज्यतेऽन्यवधः प्रचोदितात्** (४, १९, २७) । अन्यस्य वध इति व्यासेन वक्तव्यम् । प्रचोदिताद् योऽन्यः तस्येत्यर्थविवक्षणात् । **पद्मकोशरजो दिक्षु विक्षिपत्पवनोत्सवम्** (४, २४, २२) । रजो विक्षिपता पवनेन उत्सवो यत्र । विक्षिपदिति रज इत्यपेक्षते । सापेक्षमसमर्थं भवति । **वैजयन्तीं मधुना मत्तषट्पदाम्** (८, ८, १५) । मधुना हेतुना मत्ताः षट्पदा यस्यां तां वैजयन्तीम् । सति सापेक्षत्वेऽसामर्थ्यम् । **मृजितपथरुजो यो हरीन्द्रानुजाभ्याम्** (९, १०, ४) । हनुमल्लक्ष्मणाभ्यामपनीतोऽध्वखेदो यस्य इति विवक्षति । मृजितेति कर्तारौ हरीन्द्रानुजावपेक्षते, तेन सापेक्षमसमर्थम् । **भूमेर्भारायमाणानां दैत्यानां च वधोद्यमः** (१०, १, ६४) । दैत्यकर्मके वधे देवकर्तृक उद्यम इति प्रत्याययिषति, समासेऽसामर्थ्यं च न प्रत्येति । इति **संचिन्त्यञ्छुत्वा देवक्या दारिकावचः** (१०, ८, ९) । दारिकाया वच इत्येवं व्यासेन वक्तव्यम् । यथास्थिते समासे त्वसामर्थ्यं प्रव्यक्तम् । **तृणाङ्कुरैः** । **खिद्यत्सुजाताङ्घ्रितलाम्** (१०, ३०, ३१) । खिद्यदिति तृणाङ्कुरानपेक्षते । सापेक्षमपि समस्यते । स दोषः । **सर्वे पश्यन्तु स्वैरसंयुगम्** (१०, ३६, २४) । स्वैरं यथेष्टं संयुगं पश्यन्त्वित्यर्थः । स्वैरमिति क्रियाविशेषणं क्रिययान्वेति न तु संयुगेन । संयुगेन च समस्यत इति पराऽनर्गलता । **रज्जूर्विकर्षद्भुजकङ्कणस्रजः** (१०, ४६, ४५) । रज्जूर्विकर्षत्सु भुजेषु कङ्कणानि स्रजश्च यासां ता इति विवक्षति । समस्यंस्तु सामर्थ्यादि किमपि न गणयति । इयद्भिरुदाहरणैरुत्तानतां गतोऽयमर्थं इति नातिरिक्तानि सङ्गृह्णीमः ।

**निर्वेदमूलो द्विजशापरूपः** (१, १९, १४) ।

अत्र भगवान् स्वयमेव द्विजशापरूपो बभूवेति विवक्षति । निर्वेदमूल इति तु न स्पष्टम् । भगवतश्चेद् विशेषणम् । बहुव्रीह्यर्थस्तु न सङ्गच्छते । न हि

निर्वेदस्तस्य भगवतो मूलम् । मूलं प्राप्तिकारणमित्यर्थं प्रकल्प्य कश्चित् तत्पुरुषं समासमङ्गीकरोति, समासस्य पुंस्त्वमसमाधेयं विजानंस्तन्नार्षतामुत्पश्यति ।

स सर्वधीवृत्त्यनुभूतसर्व आत्मा (२, १, ३९)।

सर्वाभिर्धीवृत्तिभिरनुभूतं सर्वं यत् स आत्मेति विवक्षति । समासस्तु तमर्थं नार्पयति । सर्वाभिर्धीवृत्तिभिरनुभूतं सर्वं येनेति विग्रहात् । तत्र विग्रह एव पुंस्त्वस्य सूपपादत्वात् । विग्रहवाक्यगत एवार्थः समासेन वक्तव्यो नेतरः । वस्तुतः सर्वधीत्यादिर्दुर्घटः समासः । अनुभूतं सर्वं येन सोऽनुभूतसर्व इति निर्दुष्टः समानाधिकरणो बहुव्रीहिः । ततः सर्वधीवृत्तिभिरनुभूतसर्व इति विग्रहेऽगत्यैकदेशेनान्वये स्वीकृते सुप्सुपा समासः स्वीकर्तव्यो भवति ।

स्ववृष्टवद्भिर्विबुधैरभिष्टुतम् (२, ९, ९) ।

स्वमात्मानं वृष्टवद्भिरिति विग्रहः । समासस्तु दुर्घटः । द्वितीयासमासानुपपत्तिः । अविधेः ।

कच्चित्पुराणौ पुरुषौ स्वनाभ्य-
पाद्मानुवृत्त्येह किलावतीर्णौ (३, १, २६)।

पाद्मो ब्रह्मा पद्माज्जात इति । अत एवाब्जयोनिरिति प्रख्यातः । तत्र स्वनाभ्य इति विशेषणस्य कथं योगः ? कामं पद्मं विशिष्यात्, तच्च नेह श्रूयते । नाभ्युत्पन्नकमलज इत्यर्थः प्रत्याययियिषितः, न च प्रतीतिमेति । तेन दुष्टो न्यासः । इदं चापि चिन्त्यं नाभ्यन्तात्स्वनाभिशब्दात् शरीरावयवाच्च (४, ३, ५५) इत्यनेन यदुत्पत्तुमर्हत्युत नेति । दन्त्यकण्ठ्यादयः प्रयोगाः प्रथन्ते स्वदन्त्यादयस्तु न दृक्पथमवतरन्ति ।

हंसश्रियोर्व्यजनयोः शुभ्रातपत्र-
शशिकेसरशीकराम्बुम् (३, १५, ३८) ।

इदं दुरूहं पदकदम्बकम् । व्यजनयोरिति क्वान्वेति । केसरशीकराम्बुमिति कः समासः । केसरेभ्यो गलन्ति शीकराम्बूनि यत्र भगवति कृष्णे तमचक्षत (अदर्शन्) इत्यन्वयः । शशिनः के नाम केसराः किञ्जल्काः । तेषां शीकराम्बुभिः कः सम्बन्धः । गलन्तीत्यध्याहृत्य सम्बन्धो योजनीयः । शीकरोऽम्बुकणाः स्मृता इति कोषाच्छीकरेणाम्बुशब्दसमभिव्याहारः शब्दाडम्बरान्नातिरिच्यते । शीकरस्याम्बु शीकर एवाम्बु इत्युभयथा विग्रहेऽनर्थकः समासः ।

विद्युत्क्षिपन्मकरकुण्डल- (३, १५, ४१) ।

विद्युतं क्षिपद् इति विद्युत्क्षिपत् इति द्वितीयातत्पुरुषमिच्छति । न चासौ सिध्यति । अविधेः ।

**यत्सेवया चरणपद्मपवित्ररेणुं (माम्) (३, १६, ७)।**

कस्य केषां वा चरणपद्मे विवक्षिते। भगवति चरणरेणुः। कुत इत्यादि प्रश्नविहस्ता विवरीतारो विविधं तर्कयन्ते। येषां सेवया चरणपद्माल्लग्नः पवित्रो रेणुर्यस्मिन्मयि, तं माम्। चरणकमलयोः स्थितः पवित्रो रेणुर्यस्य तं मामिति वा। अत्र पक्षे यत्सेवया इत्यनन्वितं तिष्ठति। अपि वा यत्सेवया हेतुभूतया मच्चरणकमलरेणवो जगतः पवित्राः पावना जाता इति विवक्षणादन्वयो यत्नाल्लभ्यते।

**भगवत्यर्पिताध्यात्मः (३, २०, ७)।**

आत्मन्यधि अध्यात्मम्। विभक्त्यर्थेऽव्ययीभावः। सप्तम्यर्थवृत्तीदं कथं मन आचक्षीत कथं च बहुव्रीहावुत्तरपदतामियात्। अर्पितात्मेत्यर्थवानृजुर्न्यासः कुतो नाश्रीयते ?

**भगवान्प्रत्यगक्षजः (३, २१, ३३)।**

प्रत्यग्भूतेषु अक्षेष्विन्द्रियेषु जायत आविर्भवतीति समासार्थः। अक्ष प्रत्यग्भावे सतीति यावत्। समासस्तु न कथंचिदपि घटते। बहुश्रुतेनापि न हि केनचिद् भावलक्षणसप्तम्यन्तेन पदेन समासः श्रुतः। सप्तम्यां जनेर्ड इति सूत्रस्य नायं विषयः। सामर्थ्याभावात्।

**यावदर्थपरिग्रहः (३, २८, ४)।**

यावताऽर्थेन (अन्नादिना) देहनिर्वाहस्तावतोऽर्थस्य परिग्रह इति समासार्थः। समासस्तु न घटते। यथास्थिते यावानर्थस्य परिग्रह इत्यर्थः स्यात्। स च न विवक्षितः।

**स (वटः) योजनशतोत्सेधः पादोनविटपायतः (४, ६, ३२)।**

पादोनविटपायतः पादेनोना विटपास्तैरायतो विस्तृतः। न ह्यायामो विस्तारो भवति। विटपाश्च विस्तारं परिणाहं कुर्वन्ति नायामम् इत्यगतिकत्वादत्रायामेन विस्तारो गृह्यते। विग्रहे इत्थम्भूतलक्षणे तृतीया। तया च न क्वचित्समासो लक्ष्यते। न हि जटाभिस्तापसः, कमण्डलुना छात्रः, छात्रेणोपाध्याय इत्याद्यर्थे जटातापसः कमण्डलुछात्रः, छात्रोपाध्याय इत्यादि दृश्यते।

**तं (भगवन्तं) भक्तिभावोऽभ्यगृणावसत्वरम् (४, ९, ५)।**

भक्तियुक्तो भावोऽस्येति मध्यमपदलोपिनं बहुव्रीहिं मन्यते। सोऽस्य भ्रमः। शाकपार्थिवादिषु समानाधिकरणेषु तत्पुरुषेष्वेव मध्यमपदलोपोऽभ्यनुज्ञायते।

भ्रातृभ्रातृव्यहृद्रुजा (५, ९, ३३)।

भ्रातैव भ्रातृव्यः शत्रुरिति या भेददृक् सैव हृद्रुग् हृदयरोगः, तया। सर्वथा दुर्घटोऽयं समासः। यदस्य मनसि वर्तते न तदस्य वाचि। निरुक्तमर्थं दुःश्लिष्टं पदनिकुरम्बमेतत्कथमाचक्षीतेति मनागपि न चिन्तयति। न हि पदयोः पदानां वाऽविभक्तिकनिर्देशमात्रं समासो भवति।

कृच्छ्रो महानिह भवार्णवमप्लवेशाम् (४, २२, ४०)।

प्लवे तरणे ईट् (ईशः) येषां (हेतुः) न, तेऽप्लवेशः, तेषाम्। ईट् ईशः प्लवः (उडुपः) येषां ते ईट्प्लवाः, ते न भवन्तीत्यनीट्प्लवा इत्येवं चेद् उच्यते सर्वमनवद्यं स्यात्। यद्यपि श्रवणपरुषं स्यात्।

सौभगग्रीवकौस्तुभं (रूपम्) (४, २४, ४९)।

सौभगेन (=सौभाग्येन) युक्ता ग्रीवा येन कौस्तुभेन स सौभगग्रीव इत्येवं कश्चिद् विगृह्णाति न च पश्यति शाकपार्थिवादित्वात् समानाधिकरण-स्तत्पुरुष एव मध्यमपदलोपी भवति।

अकुतश्चिद्भया गतिः (४, २४, ६८)।

नास्ति कुतश्चिद् भयं यत्र सेति विग्रहः। समासस्तु न सिध्यति। न हि क्वचिच्चिच्छब्देन समासः श्रूयते। सर्वत्र चिदिति पृथक् पदम्। आचार्य-श्चिदिदं ब्रूयादिति निरुक्ते। अकुतोभय इति तु प्रथते प्रयोगः। अयं त्वपूर्वताप्रिय इति मध्ये चिच्छब्दं प्रक्षिपति।

धर्मविक्षमाणः पर्यगोपायत् (५, २, १)।

धर्ममवेक्षमाण इत्येवं व्यासेन वाच्यम्।

आख्याहि कौतूहलचेतसो मे (५, १२, ३)।

कौतूहलिचेतसः, कौतूहलाविष्टचेतस इति वा वक्तव्यम्। मध्यम-पदलोपिनो बहुव्रीहेरभावात्।

तुर्यं छेदविरोहेण वरेण जगृहुर्द्रुमाः (६, ९, ८)।

छेदे सति विरोह इति च्छेदविरोहः। भावलक्षणसप्तम्यन्तेन समासो नेत्यसकृदुक्तमधस्तात्। यदि पूर्वकालैकेत्यादिना समासश्चिकीर्ष्यते सोऽपि न संगतार्थो भवति। द्रुमाणां पूर्वंश्छेदो वर इत्यवश्यंभावी भविष्यति। तदनिष्टम्।

**द्रव्यभूयो वरेणापस्तुरीयं जगृहुर्मलम् (६, ९, १०)।**

द्रव्यभूयो वरेणेति कः समासः किंविग्रहश्च । द्रव्यस्य भूयोभूयस्त्वं तदेव वरः, तेन । पूर्वं षष्ठीसमासः, पश्चान्मयूरव्यंसकादिस्तत्पुरुषः । एवं कथंचित् क्रियमाणोऽपि समासः कविहृदयं न व्यक्तयति । द्रव्याणां मध्ये स्वस्याल्परूपस्य कूपादेरुद्धरणे सत्यपि भूयस्त्वं निर्झरोद्गमादिना पुनर्वृद्धिरस्त्वित्येवंरूपेण वरेणेति हि कविहृदयम् ।

**पुङ्खानुपुङ्खपतितैः (शरजालैः) (६, १०, २४) ।**

पुङ्खः शरस्य मूलदेशः । एकस्य शरस्य मूलदेशमनु तत्संलग्नोऽपरस्य पुङ्खः (मूलदेशः) यथा भवति तथेत्येवं विगृह्णाति श्रीधरः । कः समासः केन च शास्त्रेणेति तु न निर्वक्ति । क्रियाविशेषणमिदमिति त्वभिप्रैति । विग्रहेऽनुः संलग्नमाहेति च मन्यते । तद्योगे द्वितीया केनेत्यत्रापि तूष्णीकामास्ते । कर्मप्रवचनीयश्चेत्तद्योगे द्वितीया विधीयते न च सा समस्यते । सर्वथा दुर्घटोऽयं समासः । श्रीधरादयोपि घटयितुं नालम् ।

**मच्छूलनिर्भिन्नदृषद्धृदा (६, ११, १४) ।**

दृषत्सदृशं हृद् दृषद्धृद् । समासस्तु दुर्घटः । न च उपमानानि सामान्यवचनैरित्यनेन घटिष्यत इति वाच्यम् । सामान्यवचनेन स शिष्यते । तच्च नेह श्रूयते ।

**निर्जितात्माभिमानिने (६, १७, १०) ।**

निर्जितात्मास्मीत्यभिमानिने (अभिमानवते) इत्येवं व्यासेन वक्तव्यम् । यथास्थिते तु निर्जितात्मना (=आत्मनिर्जयेन)ऽभिमानो यस्य, तस्मै । इत्यर्थः प्रतीयेत । न चायं विवक्षितः ।

**कृमिविड्भस्मसंज्ञाऽऽसीद्यस्येशाभिहितस्य (६, १८, २५) ।**

ईशशब्देनाभिहितस्य यस्य देहस्य कालान्तरेऽवस्थान्तरनिमित्ताः कृमिकीटभस्मानीति (तिस्रः) संज्ञा आसन् (सन्ति) इत्यर्थं विवक्षति । कृम्यादिः समासस्तु न घटते । कार्योऽत्र यत्नः ।

**रजस्तमस्कान् (असुरान्) प्रमिणोत्युरुश्रवाः (७, १, ११) ।**

रजस्तमस्कान् रजस्तमोरूपान् । स्वार्थे कन् । पुंस्त्वं कथम् ? कः समास इति धिषणधिषणाया अप्यविषयः । रजश्च तमश्चेति द्वन्द्वश्चेत् द्वन्द्वाद् द्विवचनं स्यात् । एकवद्भावे त्वेकवचनं लब्धावसरं स्यात् ।

**वासवत्संनतार्याङ्घ्रिः (७, ४, ३२)।**

सन्नत आर्यास्याङ्घ्र्योर्यः सः। सर्वथा दुर्घटस्तत्पुरुषः। आर्याङ्घ्रिसन्नत इति सप्तमीति योगविभागात् कथंचित् सोढव्यः। यत्तु सन्नताः सम्यङ् नता आर्याङ्घ्रयो येन स तथाभूत इति कश्चित्, तन्न। नत इति कर्तरि क्त इति व्यवहारः। नतोस्मि परमात्मानमित्युच्यते, न तु परमात्मा मया नत इति। नतो नमस्कृतवान् भवति न तु नमस्कृत इति। प्रसिध्यन्ति च पतञ्जलिं प्राञ्जलिरानतोस्मीत्यादयः शतशः प्रयोगाः।

**यन्निगडो विसर्गः (७, ६, १७)।**

यन्निगड इति न सिध्यति। यदिति विसर्ग इत्यनेन सम्बध्यते। यद्विसर्गः=येषां विसर्गः सन्तानः।

**तस्योदरान्नखविदीर्णवपात् (७, ८, ४४)।**

नखैर्विदीर्णा वपा यस्मात् तस्माद् उदरात्। नखैरुदरं विदीर्यते न तु वपा। अविदीर्णे उदरे वपाया निष्कोषणस्यासम्भवात्।

**क्षतजकेसरशङ्कुकर्णात् (७, ९, १५)।**

रूपादिति विशेष्यमध्याहार्यम्। क्षतजं रक्तम्। रक्ताक्तानि केसराणि यत्र तत्क्षतजकेसरम्। बहुव्रीहिः। शङ्कुसदृशौ कर्णौ यत्र तच्छङ्कुकर्णम्। द्वावपीमौ दुर्घटौ बहुव्रीही। दुर्घटयोस्तयोः पश्चात् कर्मधारय इति तुष्यति विभ्रान्तो जनः।

**अन्वशिक्षन्व्रतं तस्य कौमारब्रह्मचारिणः (८, १, २२)।**

कौमारादारभ्य आकौमारं ब्रह्मचारिण इत्यर्थः। समासस्तु न घटते। विग्रहे कौमारादिति पञ्चमी केन। अपादाने पञ्चमी स्यात्। नेहापादानमस्ति किन्तर्ह्यादानम्। आङ्मर्यादावचने कर्मप्रवचनीयः, तद्योगे पञ्चमी स्यात्। स तु नेह श्रूयते। न ह्यसंसृष्टार्थपदसन्निपातः समासो भवति। कुमार-ब्रह्मचारिण इति तु निर्दुष्टं स्यात्। कुमाराः सन्त एव ब्रह्मचारिण इत्यर्थात्। यथा वोच्यते—अयमस्य बालमित्रम् इति। बालस्य सतो मित्रमित्यर्थात्।

**कर्णाभरणनिर्भातकपोलश्रीमुखाम्बुजाम् (८, ६, ५)।**

श्रीमुखाब्जाम्। श्रिया युक्तं मुखाम्बुजं यस्याः, ताम्। मध्यमपद-लोपी बहुव्रीहिर्न संभवतीत्युक्तमसकृदधस्तात्।

**सुग्रीवकण्ठाभरणं (योषिद्रूपम्) (८, ८, ४४)।**

सुग्रीवं कण्ठाभरणं यत्र तत्सुग्रीवकण्ठाभरणम्। शोभना ग्रीवा येन तत्सुग्रीवम्। यद्येषोऽर्थस्तर्हि कण्ठाभरणसुग्रीवम् इति सुप्सुपासमासः कुतो नाश्रीयते ?

**निकृत्तबाहूरुशिरोधराङ्घ्रयः**
**छिन्नध्वजेष्वासतनुत्रभूषणाः** (८, १०, ३७)।

केचिन्निकृत्तबाहवः, परे निकृत्तोरवः, अपरे निकृत्तशिरस इत्यादिरर्थो विवक्षितः। सत्यमङ्गिनां नानात्वे सत्येव तदीयतत्तदङ्गविकर्तनोक्तिरर्थवती भवति। अङ्गिन एकत्वे तु नानाङ्गविकर्तनेनोक्तेन नार्थः। को ह्यसंमूढः शिरोविकर्तन उक्ते शेषाङ्गविकर्तनं वर्णयेत्, वाचं च मुधा विग्लापयेत्। यथास्थितेन न्यासेन निकृत्तबाहवः केचित् केचित्संचूर्णोरव इत्यादिरर्थो न लभ्यत इति दुष्टो न्यासः।

**शिलाः सटङ्कशिखराः** (८, १०, ४६)।

टङ्कवत्तीक्ष्णाग्रैः शिखरैः सहिता इत्यर्थः। कः समासः केन च शास्त्रेणेति कान्पृच्छामः। अस्तं गतः पुराणकाराः, प्रविष्टाश्च यमधानीजवनिकां विवरीतारः।

**तस्याः कराग्रात्स तु कन्दुको यदा**
**गतो विदूरं तमनुव्रजत्स्त्रियाः** (८, १२, २३)।

तमनुव्रजन्त्याः स्त्रिया इत्येवं व्यासेन वक्तव्यम्। अनुव्रजदिति वृत्तिच्छन्नं बहिर्भूतेन तम् इत्यनेन नान्वेतुमर्हति। तेनात्र द्वितीया दुर्लभा।

**गवां रुक्मविषाणीनां रूप्याङ्घ्रीणाम्** (९, ४, ३३)।

रुक्मेण खचिता विषाणा यासां ताः, तासाम्। रूप्येण खचिता अङ्घ्रयो यासां, ताः, तासाम्। मध्यमपदलोपिनो बहुव्रीहेरभावाद् दुर्घटौ बहुव्रीही।

**यः सत्यपाशपरिवीतपितुर्निदेशं स्त्रैणस्य** (९, १०, ८)।

सत्यपाशपरिवीतस्य पितुरिति व्यासेन वक्तव्यम्। यथा स्त्रैणस्य इति विशेषणं पृथक् पदं तथा सत्याद्यपि पृथङ्निर्देशमर्हति यथा किञ्चित्प्राधान्यमृच्छेत्।

**तस्याः खरत्रिशिरदूषणमुख्यबन्धून्।**
**जघ्ने चतुर्दशसहस्रम्** (९, १०, ९)।

चतुर्दश सहस्राणीति व्यासेन वक्तव्यम्। संज्ञायामेव संख्या समानाधिकरणेन समस्यत इति नियमात्। चतुर्दशसहस्रीं मुख्यबन्धूनाम् इति वा।

**यस्मिन्निदं विरचितम्..........**
**नानेव भाति नाभाति स्वप्नमायामनोरथः** (९, १८, ४९)।

स्वप्नमायामनोरथ इति कोयं समासः। द्वन्द्वश्चेदेकवद्भावे नपुंसकं स्यात्। इतरेतरभावे बहुवचनं दुर्निवारं स्यात्। समाधित्सया प्रवृत्तः कश्चिदेवं

विगृह्णाति—स्वप्नश्च माया च स्वप्नमाये। ताभ्यां सहितो मनोरथः=स्वप्न-मायामनोरथः। कृतार्थंमन्योऽत्र विग्रहे दोषं न पश्यति। एवं विग्रहे स्वप्नमाये अप्रधाने भवतः। पुराणकारस्य तु नैषा विवक्षा। समकक्षत्वेन निर्देश इष्टः। इदं विरचितं जगत् स्वप्नो वा स्यान्माया वा स्यान्मनोरथ एव वा स्यादिति विकल्पनितयाभ्युपगमः। वस्तुतः सर्वथा दुर्घटोऽयं समासोऽभियोगशतेनापि सुघटीकर्तुं न पार्यते।

**अज्ञानप्रभवाहंधीः स्वपरेति भिदा यतः (१०, ४, २६)।**

अयं स्वः, अयं पर इति भिदा भेद इत्यर्थः। समासस्तु न सिध्यति। अविभक्तिकनिर्देशोपि दुष्यति। कश्चिदाह सुप्सुपेति समास इति। तन्न। वाक्यार्थे वर्तमानयोः स्वपरशब्दयोः सामर्थ्यमेव नास्ति इति समास एव न प्राप्नोति। सामर्थ्ये सति विधायकशास्त्रे चासति सुप्सुपेति समासोऽनुज्ञायते। समासमात्रं च तद्भवति न समासविशेषस्तत्पुरुषादिः।

**क्रोशसंजातहासः (१०, ८, २९)।**

क्रोश आक्रोशे संजातो हासोऽस्य। भावलक्षणसप्तम्यन्तेनेहैव पुराणे समासो नान्यत्र। न ह्यनाकुलाऽस्य समासरचना भवति।

**अन्तर्निहितवयुनः (१०, ८, ३०)।**

अन्तर्निहितं प्रच्छन्नं वयुनं प्रज्ञानं यस्येति त्रिपदस्य समानाधिकरण-बहुव्रीहेरर्थः। स च प्रकृते न सङ्गच्छते। यश्च सङ्गच्छते तं समासो नाह। अयं हि कवेर्विवक्षितोऽर्थः—अन्तर्गृहभाण्डादिषु निहिते दध्यादौ वयुनं प्रज्ञानं यस्य स बालः कृष्ण इति। सर्वथाऽस्फुटाभिधेयः समासोऽयं प्रहेलिकातो नातिरिच्यते।

**तथाऽविद्धकण्टकः (१०, १०, १४)।**

कण्टकेनाऽविद्ध इति विग्रहः। समासस्तु न जाघटीति। अविद्धोऽलग्नः कण्टकोऽस्येत्यस्मिन्नर्थे समासस्य सुघटत्वेप्यर्थो न घटते। न हि विद्धो लग्नो भवति।

**स्वान्स्वान् सहस्रोपरिसंख्ययान्वितान् (१०, १२, २)।**

सहस्रोपरि इति दुर्घटः समासः। अव्ययेन षष्ठीसमासो न। प्रचरद्-भाषया संवादोपि विस्मयनीयः।

**तिष्ठन्मध्ये स्वपरिसुहृदो हासयन्नर्मभिः स्वैः (१०, १३, ११)।**

स्वं परितः स्थिताः सुहृदः स्वपरिसुहृदः। अत्यन्तं दुर्घटः समासः। कः समासः केन च शास्त्रेणेति पुराणकार एव वेद। रहस्यमिति नोद्घाटयति।

**इदं (जगत्) पुरुदुःखदुःखम् (१०, १४, २२) ।**

पुरु बहुलं दुःखादनन्तरं दुःखं यत्रेत्थं विगृह्णाति कश्चिन्न चोत्सहते वक्तुं कोऽयं समासः किं चात्र विधायकम् इति । यत्सत्यं कविरयं समसनं समास इति मन्यते सामर्थ्यादिकं किमपि नापेक्षते ।

**क्ष्मानिर्जरद्विजपशूदधिवृद्धिकारिन् (१०, १४, ४०)।**

इतरेतरद्वन्द्वे घटकानां पदानामर्थत आसत्तिरिष्यते। अयं तु सर्वथाऽनासन्नानि पदानि समस्यति । तदस्य शीलम् । अन्यत्रापीह पुराणे तदाचारः सः।

**वत्साम्पुलिनमानिन्ये यथापूर्वसखं स्वयम् (१०, १४, ४२)।**

यथापूर्वसखमिति पुलिनविशेषणम् । यथापूर्वं=पूर्वस्थानमनतिक्रम्य वर्तमानाः सखायो यत्र तत् । अस्थाने टच्समासान्तः । यथापूर्वमिति पदार्थानतिवृत्तावव्ययीभावः क्रियाविशेषणम् । सखिशब्देन च न शक्यः समसितुम् । न हि सखा क्रिया भवति । अत एव वर्तमाना इत्याख्यातमध्याहरति ।

**आबालवृद्धवनिताः सर्वे (१०, १६, १५)।**

बालवृद्धवनिता अभिव्याप्य । अभिविधावाङ् । तद्योगे पञ्चमी प्रसक्ता । पञ्चम्यभाव आर्ष इति कश्चिदृषिनिन्दकः । अत्रापरितोषादन्यथा कल्पयति— अपि वा रक्षणीयत्वाद् आवृता बालवृद्धवनिता यैस्ते गोपाः । प्रादिभ्यो धातुजस्य वाच्यो वोत्तरपदलोप इति बहुव्रीहिं मन्यते । बालवृद्धवनितानां किं नाम भयमुपस्थितं यत्ता गोपैराव्रियन्ते । सर्व इति प्रयोगादाङ् इहाभिव्याप्तावेवेति व्यवसितम् । तथा सति दुर्घटत्वं समासस्य व्यवस्थितम् ।

**अम्बरीषस्तब्धेक्षणः (१०, १६, २४)।**

अम्बरीषवत् सन्तप्तानि स्तब्धानि च ईक्षणानि यस्य सः । अध्याहृतसन्तप्तशब्दमन्तराऽम्बरीषस्य ईक्षणैः सह किमपि सामर्थ्यं नास्ति ।

**शरदभ्रवद् व्यभ्रा स्वच्छाम्बुपरुषानिला (१०, २०, ३२)।**

स्वच्छाम्बुपरुषानिलेति विशेषणयोः कर्मधारयः । अस्थाने चायम् । यत्र तयोर्गुणप्रधानभावः शक्यो व्याख्यातुं तत्रैव तल्लक्षणः समास इष्यते यथा पाचकपरिव्राजक इत्यत्र। प्रकृत एकतरस्य गुणत्वमितरस्य च प्राधान्यं न शक्यमुपपादयितुम् ।

**वणिङ्मुनिनृपस्नाता निर्गम्यार्थान् प्रपेदिरे (१०, २०, ४९) ।**

अभ्यर्हितं पूर्वं निपततीति नाद्रियते । वणिग्घि मुनिप्रभृतीनां जघन्यतमः, तस्य पूर्वनिपातः कथम् ।

**परार्थैकान्तजीवितान्** (१०, २२, ३२)।

परार्थं (परस्मा इदम्) एकान्तेन नियमेन जीवितं येषां ते। नायं केवलं समानाधिकरणो बहुव्रीहिर्न केवलं व्यधिकरणः। नूतनो नृसिंहवत्समासावतारः।

**कर्णोत्पलालककपोलमुखाब्जहासम्** (१०, २३, २२)।

कर्णोत्पलः, अलककपोलः (=कपोलालकः), मुखाब्जहास इति त्रयो व्यधिकरणबहुव्रीहयः। एषां त्रयाणां कर्मधारयं तत्पुरुषमाश्रयते। स न घटते। तत्पुरुषस्य द्विपदत्वनियमात्। द्व्यह्नजात (द्वे अहनी जातस्यास्य) इत्यत्रैवोत्तरपदेन परिमाणिना द्विगोः सिद्धये बहूनां तत्पुरुषस्योपसंख्यानम्।

**न त्रास इह वः कार्यो मद्धस्ताद्रिनिपातने** (१०, २५, २१)।

मद्धस्ताद् अद्रेर्निपातनम्। तस्मिन्। पञ्चमीसमासस्तु न सिध्यति। अविधेः। निपातन इत्यत्र णिजनिष्टार्थकः।

**चलन्नितम्बहारकुण्डल-**
**त्विषत्कपोलारुणकुङ्कुमाननाः** (१०, ४६, ४५)।

अत्र चलन्नितम्बहाराः, कुण्डलत्विषत्कपोलाः, अरुणकुङ्कुमानना इत्येते त्रयो व्यधिकरणबहुव्रीहयः। तैस्त्रिभिः कर्मधारयं घटयति। कर्मधारयश्च तत्पुरुषभेदः। तत्पुरुषश्च नियमेन द्विपदः, कालाः परिमाणिनेत्यनेन विहितं वर्जयित्वा। त्रीनपि बहुव्रीहीन् पृथक्पदत्वेन किमिति न निर्दिशति। तथा निर्देशे कवेरस्य किं छिद्यते?

**एवं सम्पृष्टसम्प्रश्नो ब्राह्मणः परमेष्ठिना** (१०, ५२, ३६)।

सम्पृष्टः सम्प्रश्नं ब्राह्मण इति वाक्यमेव भवितुमर्हति। न च भवति सम्पृष्टः सम्प्रश्नो यं ब्राह्मणं स सम्पृष्टसम्प्रश्नः। गौणे कर्मणि दुह्यादेरिति वचनाद् गौणे कर्मणि ब्राह्मणे क्तः, क्तेनोक्तं तद्भवतीति तत्र प्रथमा। प्रधानं कर्म सम्प्रश्नस्त्वनुक्तमिति तत्र द्वितीया श्रूयेत। सम्पृष्टः सम्प्रश्नम् इति विग्रहे प्रथमान्तस्य द्वितीयान्तेन समासं तु न कश्चिद् घटयेद् अन्यत्रैन्द्रजालिकात्।

**शतजन्मभिः स्यात्** (१०, ५२, ४३)।

शतेन जन्मभिरिति व्यासेन वक्तव्यम्। समासस्य निषेधात्।

**देशान्नागायुतप्राणो वेलाकूलानमज्जयत्** (१०, ६७, ५)।

वेला स्यात् तीरनीरयोरित्यमराद् वेला समुद्रनीरं तस्याः कूले वर्तमानान् इत्यर्थ इति श्रीधरः। समासस्तु न घटते। यदि लक्षणया

कूलशब्देन कूले वर्तमानं गृह्येत तदापि पुंस्त्वं कथं स्यात् ? लाक्षणिकोऽपि कूलशब्दः स्वं लिङ्गं न जह्यात्। नहि गङ्गायां घोष इत्यत्र गङ्गातीरे वर्तमानो गङ्गाशब्दः स्वं लिङ्गं जहाति। कूले भवा कूलाः। तत्र भव इत्यणि संज्ञापूर्वकविधेरनित्यत्वाद् आदिवृद्धिर्न। अर्श आदित्वादचि वा सिध्येदिति यत्नान्तरमर्थनिरपेक्षमुपेक्ष्यम्।

सर्वे जनाः सुररुचो मणिकुण्डलस्रग्-

उष्णीषकञ्चुकदुकूलमहार्घ्यहाराः (१०, ७५, २४)।

मणिकुण्डलादिरितरेतरद्वन्द्वः प्रतीयते। विशेषणं चेदम्। तेन द्वन्द्वो न सङ्गच्छते। द्वन्द्वस्यानुपपन्नतां पश्यन् कश्चित्स्वबुद्धिसचिव इत्थं विगृह्णाति—मणिकुण्डलाभ्यां सहिताः स्रगादयो येषां ते। एवं कुण्डलादेरप्राधान्यं स्रगादीनां च प्राधान्यं परिणमतीति च न पश्यति। कवेस्तु गुणप्रधानभावो न विवक्षितः।

दंष्ट्रोग्रभ्रुकुटीमुखम् (१०, ७९, ३)।

दंष्ट्राभिरुग्राभ्यां भ्रुकुटीभ्यां युक्तं मुखं यस्य, तम्। मध्यमपदलोपस्य कर्मधारय एव विषयो न बहुव्रीहिरित्यसकृदुक्तमधस्तात्।

सप्तद्वीपान् सप्तसिन्धून् सप्तसप्तगिरीनथ (१०, ८९, ४८)।

प्रत्येकं सप्तसप्तगिरयो यत्रेति विग्रहः। द्विरुक्तिः केन ?

दूरे हरिकथाः केचिद् दूरे चाच्युतकीर्तनाः (११, ५, ४)।

दूरे चाच्युतकीर्तनं येषाम्। चकारेण व्यवधानेपि समासः। अहो साहसिक्यम्।

ज्ञानं सविज्ञानमनुप्रशान्ति (११, ५, १२)।

अनुशब्द आनन्तर्यवचनः। ज्ञानादनन्तरा प्रकृष्टा शान्तिर्यत्र तज्ज्ञानमनुप्रशान्ति। कस्यानन्तरा प्रकृष्टा शान्तिरिति यथास्थिते न लभ्यते। असमर्थः समासः।

उलूखलाश्मकुट्टो दन्तोलूखल एव वा (११, ८, ५)।

उलूखलेनाश्मना वा कुट्टयतीति विग्रहः। अत्र विग्रहे समासो दुर्लभः। वाकारो वाक्यं भिनत्ति। वाक्यद्वयस्थानी समासो न घटते। असति वाकारे उलूखलाश्मभ्यां कुट्टयन्तीत्यर्थः प्रसज्येत स च नेष्टः।

**...वाचं। हीनां मया रक्षति दुःखदुःखी (११, ११, १९)।**

दुःखादनन्तरमपि दुःखं यस्य। अर्थस्त्वयं भासते। समासस्तु न घटते। अन्यथाऽभिसन्धित्सति अन्यथा चाभिधत्ते।

**यो वै मद्भावमापन्न ईशितुर्वशितुः पुमान् (११, १५, २७)।**

ईशितुर्वशितुर्मम भावम् इत्येवं व्यासेनोक्तिर्निर्दूषणा स्यात्। वृत्तस्य वा विशेषणं नेति भाष्योक्तेरीशितुर्वशितुरिति विशेषणे मद्भावम् इत्यत्र स्थितम-स्मच्छब्दं विशेषयितुं नोत्सहेते। पृथक्पदत्वेन निर्देशे तु तयोर्विशेषणता निर्बाधा।

**त्राणस्थित्यप्ययोद्भवः (११, १६, १)।**

समाहारद्वन्द्वे पुंस्त्वं कथम्? इतरेतरद्वन्द्वे चैकवचनं कथम्? इति विहस्तोऽन्वितार्थप्रकाशिकाकार इत्थं विगृह्णाति—त्राणादयो यस्मादिति। इदं बालिश्यम्। त्राणादीनां द्वन्द्व ऐकपद्ये पदान्तरमेव नास्ति येन बहुव्रीहिर्लभ्येत। अर्थस्य पर्यवसानादन्यपदार्थाकाङ्क्षैव नोदेति।

**नीहारचक्षुषः (११, २१, २८)।**

नीहारेणावृते चक्षुषी यस्य स नीहारचक्षुः, तस्य। दुष्टः समासः। दुष्टत्वेऽसकृद् हेतुरुक्तोऽधस्तात्।

**त्रिंशद्विंशतिवर्षाणि परमायुः कलौ युगे (१२, २, ११)।**

दिक्संख्ये संज्ञायाम् इति नियमात्संज्ञाया अन्यत्र संख्यया समानाधिकरणः समासो नानुज्ञायते। किं च। त्रिंशद् वा विंशतिर्वा वर्षाणीति विग्रहे वाकारेण वाक्यभेदः स्फुटीक्रियते। वाक्यद्वये च समासद्वयप्रसङ्गः। तेन त्रिंशद् वर्षाणि विंशतिर्वा वर्षाणीत्येवं व्यासेन वक्तव्यम्॥

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्यां दुर्घटसमासनिरूपणो नाम नवमोऽध्यायः॥

## दशमोऽध्यायः

# वृत्तभङ्गभयाच्छब्दवैरूप्यम्

श्रीमद्भागवतकारः कविर् अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद् गिरमिति मते स्थितो निर्विशङ्कं यत्र तत्र शब्दवैरूप्यमापादयति। छन्दोनुरोधाद् गुर्वक्षरं लघयति लघु वा गुरू करोति। छन्दोरिरक्षिषया प्रणुन्नोऽक्षरस्य द्व्यक्षरस्य वाऽऽवापोद्वापौ यथाकामं समाश्रयति। तदिह सङ्ग्रहेण निदर्शयामः—

**एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी (१, ३, २३)।**

विंशतितम इति वक्तव्ये छन्दोऽनुरोधात् तशब्दं लुम्पति जानन्नपि तेन जायमानं वाग्भ्रंशम्।

**वर्तमानो वयस्याद्ये तत एतदकारषम् (१, ६, ५)।**

अकार्षम् इत्याबालं प्रसिद्धमवदातं रूपमकारावापेन विरूपयति वृत्तभङ्गो मे मा भूदिति। अन्यत्रापीह तथाऽऽचरति समुद्वेगाय सचेतसाम्—**कथं प्रवृत्तः किमकारषीत्ततः (१, १०, १)** इति।

**प्रकृतिमगन् किल यस्य गोपवध्वः (१, ९, ४०)।**

अगमन्नित्युक्ते छन्दो भङ्क्ष्यत इति भीतो मकाराकारौ लुम्पति।

**निवेशयित्वा निजराज्य ईश्वरो**
**युधिष्ठिरं प्रीतमना बभूव ह। (१, १०, २)।**

यदि निवेश्येति ल्यबन्तं निर्दुष्टं रूपं निवेशयामि चच्छन्दो भनज्मि इति चिन्तयित्वा क्त्वापि चच्छन्दसीति शास्त्रं शरणीकरोति, लोके क्त्वान्तस्याव्यवहार्यतां न पश्यति।

**जितेन्द्रिया निर्जितमातरिश्वनः (१, १०, २३)।**

छन्दोनुरोधान्मातरिश्वन इत्यत्रान्त्याकारं ह्रसयति।

**मर्त्यानामृतमिच्छताम् (१, १६, ७)।**

मर्त्यानाम् अमृतमिच्छताम् इति वक्तव्ये मकारमक्षरं विलुम्पति वृत्तभङ्गो मा भूदिति। न च ऋतशब्द एवास्तु इष्टसिद्धिश्चास्त्विति वाच्यम्। अर्थसङ्गतेः।

सत्यवचनेन ऋतशब्देन मोक्षो ग्रहणीय इति श्रीधरवचोपि वार्तम् । तन्नार्थे प्रयोगादर्शनात् ।

**सारथ्यपारषदसेवन- (१, १६, १६) ।**

पारषदोऽपभ्रंशः । तत्र च्छन्दोरिरक्षिषयाऽकारं प्रक्षिपति शब्दं च विरूपयति ।

**श्रुत्वा सुतविलापनम् (१, १८, ३९) ।**

विलापनमित्यत्र च्छन्दोवशाद् दीर्घो वा कृतः प्राकृतेऽर्थे णिज्वा समाश्रितः । उभयथापि निर्वृत्तं शब्दवैरूप्यं खेदाय भवति धीमताम् ।

**प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः (२, १, ७) ।**

अत्राक्षरलाघवायोपसर्गः परिहृतः । प्रतिर्वा निर्वा परित्यक्तः । उपसर्गकृतो मूर्धन्यादेशः । उपसर्ग एव नास्तीति स कुतः स्यात् । अनुपसर्गकः सेधतिरपि न प्रसिध्यति कुतस्तरां तथाभूतः कृतषत्वः । षेध इति शोच्योत्प्रेक्षा कवेः ।

**विलक्षणा यच्चरणोपसादनात् (२, ४, १६) ।**

उपसादनादिति ल्युडन्तस्य दीर्घमध्यो निर्देशश्छन्दोनुरोधात् । णिचोऽनर्थकत्वान्नेदं सदेर्ण्यन्तस्य रूपम् । न ह्यत्र प्रयोजकव्यापारः कश्चिदभिप्रेतः । सदेरण्यन्तस्य उपसीदति उपसन्न उपसेदिवान् इत्यादयः प्रयोगाः प्रथन्ते । न चायं चौरादिकस्य आङः षद पद्यर्थ इत्यस्य रूपमित्यारेकणीयम् । तस्याङ्पूर्वस्य प्रयोगनैयत्यात् ।

**पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः (२, ६, १३) ।**

अच्प्रत्ययान्तं लोके प्रचरन्तं विद्याधरशब्दं परिहृत्य मूलविभुजादित्वकल्पनया कप्रत्ययान्तं विद्याध्रशब्दं प्रयुङ्क्ते वृत्तभङ्गं परिहरिष्यामीति ।

**सत्रे ममास भगवान् हयशीरषाऽथो (२, ७, ११) ।**

हयशीर्षा इति साधौ शब्दरूपे प्रयोक्तव्येऽकारं प्रक्षिपति । वृत्तभङ्गाद् वाग्भ्रंशं वृणीते ।

**निद्राक्षणोऽद्रिपरिवर्तनकषाणकण्डूः (२, ७, १३) ।**

अत्र कषाणशब्दे दीर्घश्छन्दोनुरोधात् । न ह्यस्य निमित्तान्तरमस्ति । साधुत्वं चास्य दुरुपपादम् ।

**आयुश्च वेदमनुशास्त्यवतीर्य लोके (२, ७, २१)।**

आयुरिति शब्दरूपं वेदम् इत्यस्माच्चकारेण व्यवधत्ते वृत्तं गोपायिष्यामीति। आयूरूपं वेदम् इति लक्ष्यार्थस्वीकारेऽदोष इति चेन्न। तथा पृथक्त्वे सति संज्ञाया अनवगमात्। आयुर्वेद इत्यारोग्यशास्त्रस्य समाख्या भवति।

**देवेऽभिवर्षति पशून् कृपया रिरक्षुः (२, ७, ३२)।**

रिरक्षिषुरिति सनि उकारे कृत्प्रत्यये निर्दुष्टं रूपम्। तद् दूषयति सन्प्रत्ययलोपेन। तत्र वृत्तरिरक्षिषा हेतुः स्यादनवधानं वा।

**यस्मिन्कर्मसमावाये यथा येनोपगृह्यते (३, ८, १४)।**

समावायः समवायः। अनर्थक आङ्प्रक्षेपश्छन्दोवशात्कृतः शब्दवैरूप्यकृदेव केवलम्।

**खुरैः क्षुरप्रैर्दरयंस्तदाप (३, १३, ३०)।**

दारयन्निति वक्तव्ये च्छन्दोरिरक्षिषयाऽऽकारं ह्रसयति। नास्य घटादित्वं शङ्क्यम्। भयवृत्तेरेव तस्य तत्।

**शृण्वीत भक्त्या श्रवयेत वोशती (३, १३, ४८)।**

श्रावयेतेति वक्तव्ये ह्रस्वश्छन्दोनुरोधात्।

**प्रत्याचष्टात्मभूर्देवान्प्रीणन्रुचिरया गिरा (३, १५, ११)।**

छन्दोभङ्गभीरुः प्रीणयन्नित्यत्र वर्तमानं यकारं लुम्पति।

**कदर्थीकृत्य मां यद्वो बह्वक्रान्तामतिक्रमम् (३, १६, २)।**

अक्रान्तामिति क्रमेरपभ्रष्टं लुङि रूपम्। पार्षदौ कर्तारौ। छन्दो मा भाजीति सिचो लोपं करोति, उपधावृद्धिं च प्रसौति।

**तेऽहारिषुर्देवयन्तो विसृष्टां तां प्रभामहः (३, २०, २२)।**

छन्दःपूर्त्यै अहारिषुरित्यत्र इडागमं संश्रयति वाचं च विकरोति।

**देवहूत्यपि सन्देशं गौरवेण प्रजापतेः (३, २४, ५)।**

देवहूतिरित्यत्र च्छन्दोवशाद् इकारं द्राघयति। क्तिन्नन्तान्ङीप् दुर्लभ इत्यस्य बहुविदो न न विदितम्।

**याः कर्दमसुताः प्रोक्ता नव ब्रह्मर्षिपत्नयः (४, २, १२)।**

पत्न्य इति वक्तव्यमासीत्। वृत्तं भङ्क्ष्यत इति भिया शब्दरूपं भ्रंशयति।

अनाहुता अप्यभियन्ति सौहृदं
भर्तुर्गुरोर्देहकृतश्च केतनम् (४, ३, १३)।

अनाहूता इत्येव शब्दः। अपि माषं मषं कुर्यादिति न्यायमनुबध्नात्या श्रद्धाविघातात्।

आहारषीद् यस्य हयं पुरन्दरः (४, १६, २४)।

छन्दःपूर्त्यर्थं मध्येऽकारं प्रक्षिपति। बालोऽपि नैवं वाचं भ्रंशयेत्।

वर्गस्वर्गापवर्गाणां प्रायेणैकात्म्यहेतुना (४, २१, ३०)।

द्व्यक्षराधिक्यभिया चतुर्वर्गं इति वक्तव्ये वर्ग इत्याह। केवलो वर्गशब्दो धर्मादिचतुर्वर्गं कथमाचक्षीतेति चिन्ता नास्योदयते हृदि। अथवाऽवशमूहिष्यते लोक इति तुष्यति।

(अङ्घ्रिम्) कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णम् (४, २२, ४०)।

दुस्तरार्णवम् इति शुद्धरूपमविकृत्य यदि ब्रवीमि तदा वृत्तं भनज्मीति वित्रस्तो दुस्तरार्णमित्यनर्थकं शब्दरूपं श्रयति न चापशब्दाद् बिभेति।

शुश्रूषया चारषदेहयात्रया (४, २३, २०)।

छन्दोवशगोयम् आरषमित्यपभ्रंशं व्यवहरन्न लोकापवादाच्छङ्कते नाम

अनेन ध्वस्ततमसः सिसृक्ष्मो विविधाः प्रजाः (४, २४, ७३)।

सिसृक्षाम इति तु वक्तुमुचितम्। छन्दोऽपराध्यति न छन्दस्कृत्पुराणकारः।

प्राकारोपवनाट्टालपरिखैरक्षतोरणैः (४, २५, १४)।

परिखाभिरिति वक्तुमुचितम्, परं तथोक्ते छन्दो भज्यत इति शब्दरूपं विरूपयति। किं च गवाक्षैरिति वक्तव्येऽक्षैरिति वक्ति। पूर्वपदलोपमाचरति प्रस्मरति चाक्षः पाशके रूढो न क्षमो गवाक्षं स्मारयितुम्।

तस्मिन्महन्मुखरिता मधुभिच्चरित्र-
पीयूषशेषसरितः (४, २९, ४०)।

महन्मुखेरिता इति वक्तव्ये छन्दोभङ्गभिया शब्दरूपमन्यथयति। अन्यथात्वे च विवक्षितार्थलाभो नेति न गणयति। कश्चिदुत्प्रेक्षते—मुखं रान्ति गृह्णन्ति मुखराः। मुखराः कृता मुखरिताः। अयं भ्रमः। न हि रातिः क्वचिद् ग्रहणे दृष्टः। रातिर्दानं भवति न त्वादानम्। वस्तुतो मुखशब्दान्मत्वर्थीयो रः। मुखं वचनं चेत्युपचारः। दुर्मुखे मुखराबद्धमुखाविति च कोषः।

बिभ्रत् पृथङ्नामभि रूपभेदम् (५, ११, ५)।



रो रीति दैर्ध्यं वृत्तभङ्गाय भवेदिति शङ्कमानो रुलोपमेव श्रयति।

**सन्निदाघदग्धस्य यथा हिमाम्भः (५, १२, २)।**

निदाघ इत्येव शब्दः। सन्निदाघस्तु च्छन्दोवशादाश्रितः प्रसिद्धिश्च नाश्रिता।

**जानूरुमध्योरशिरोधरांसाः (५, १२, ५)।**

उरःशब्दस्य सकारं लुम्पति च्छन्दो रक्षिष्यामीति।

**अंसेऽधि दार्वी शिबिका च यस्याम् (५, १२, ६)।**

दारवीति शब्दः, दार्वीति चापशब्दः। छन्दोरिरक्षिषया श्रितः।

**(कामान्) दुदूहुराजहुरथो बलिं नृपाः (५, १५, ११)।**

दुदुहुरित्यस्य स्थाने दीर्घमध्यो दुदूहुरिति प्रयुङ्क्ते छन्दो रक्षिष्यामीति।

**भजे भजन्यारणपादपङ्कजम् (५, १७, १८)।**

भजन्य इत्यत्रानीयर ईकारं लुम्पति च्छन्दोभङ्गभीलुकः। यत्तु कश्चिद् भजनमर्हति भजन्य इति कल्पयति तन्न। भजन्य इत्यस्यान्यत्र प्रयोगादर्शनात्।

**त्रिभिर्विहीनं यमनन्तमृषयः (५, १७, २१)।**

छन्दोनुरोधाद् दीर्घं ऋकार इति श्रीधरः। अपशब्दत्वं च न स्फुटमभ्युपैति।

**स्त्रियो व्रतैस्त्वा हृषिकेश्वरं स्वतः (५, १८, १९)।**

हृषीकमिन्द्रियं प्रसिद्धं न तु हृषिकम्। अयं तु च्छन्दोनुरोधाच्छब्दरूपं विकरोति। इहैव सन्निकृष्टे गद्यसन्दर्भे तु न्याय्यं हृषीकमिति रूपं धरति। तेन वैकृतमिदं छन्दस्कृतमिति व्यक्तिमेति।

**अयान्तु संक्षयं सद्यो ये नः श्रेयःप्रतीपकाः (६, ८, २८)।**

छन्दःपूर्त्यर्थं प्रतीपका इत्यत्र स्वार्थे कनं करोति।

**रिपुञ्जयं स्वस्त्ययनं तथायुषम् (६, १३, २३)।**

आयुष्यम् (आयुषे हितम्) इति वक्तव्ये यलोपं करोति वृत्तं मे रक्षणीयमिति।

**यथा तरेम दुस्तारम् (तमः) (६, १४, २६)।**

दुस्तारमित्यपशब्दः। स इह च्छन्दोऽनुरोधादाश्रितः।

**मधुकारमहासर्पौ लोकेस्मिन्नो गुरूत्तमौ (७, १३, ३४)।**

मधुकर इति मधुमक्षिकार्थे प्रसिध्यति। तत्र ताच्छील्ये करोतेष्टप्रत्ययः। अयं तु वृत्तभङ्गभीतो विकरोति रूपम्, न च चिन्तयति अणि सति ताच्छील्यं न प्रतीयेत, मधुकर्तृतैव केवला प्रतीयेत। अन्यत्र मधुकारशब्द एव नास्ति।

**तिसृष्वेकादशी वासु जन्मर्क्षश्रोणयोगयुक् (७, १४, २३) ।**

श्रोणः श्रवणः । अपि माषं मषं कुर्यादित्युक्तिं लिपिमिव वैधसीं प्रमाणीकुरुते वाचं च विरूपयति विस्रब्धम् ।

**वरेण ते प्राविशता समेधिताः (८, ७, १३) ।**

प्राङोरेकतरः शक्यः परिहर्तुम् । उभयोः सन्निवेशस्तु छन्दोवशगेन कृतः ।

**शङ्खतूर्यमृदङ्गानां भेरीडमरुणां महान् ।**
**... ... निःस्वनोऽभवत् (८, १०, ७) ।**

डमरुणाम् इत्यत्र नामीति प्राप्तं दीर्घं न करोति च्छन्दोभङ्गभीषायाः ।

**वणिक्पथा भिन्ननवो यथार्णवे (८, ११, २५) ।**

भिन्ना नौर्येषां ते भिन्ननव इहोक्ताः । अनित्याः समासान्ता इति पक्षे कपोऽभावे भिन्ननाव इति स्यात् । गोस्त्रियोरुपसर्जनस्येत्यत्र स्त्रीप्रत्ययग्रहणाद् नौरित्यत्र ह्रस्वत्वस्याप्रसङ्गः । कपि सति भिन्ननौका इति स्यात् । छन्दोनुरोधाच्छब्दरूपे वैकृतं करोति ।

**आनिन्ये कलशं हैममवनेजन्यपां भृतम् (८, २०, १७) ।**

अवनेजनीनामपामिति श्रीधरः । पादावनेजनीरापो धारयञ्छिरसा नृप (१०, ४८, १५) इत्यतो ज्ञायतेऽवनेजनीशब्द एवेष्टः कवेः । तथापि पुंवद्भावो दुर्वार इति रूपासिद्धिः । पुंवद्भावे च भ्रंशते च्छन्द इति तमपह्नुतयते वाचं च विरूपयते ।

**व्रक्ष्याम गां द्यां च तवानुकम्पिताम् (१०, २, ३८) ।**

छन्दसा परतन्त्रः कविः सकारं लुम्पति ।

**हस्ते गृहीत्वा भिषयन्त्यवागुरत् (१०, ९, ११) ।**

भिषयन्तीत्यत्र ह्रस्वत्वं छन्दोवशात्, परस्मैपदं त्वपाणिनीयम् ।

**सन्वश्य मर्मसु रुषा भुजया चछाद (१०, १६, ९) ।**

चछादेत्यत्र तुग् न कृतः, छन्दश्च रक्षितम् ।

**पानीयसूयवसकन्दरकन्दमूलैः (१०, २१, १६) ।**

सूयवसम् इत्यत्र च्छन्दोवशात् सुशब्दस्य दीर्घः ।

**गावस्तवा गामनयन्पयोद्रुताम् (१०, २७, २५) ।**

पयोद्रुतामित्यत्र भावे त्वं न करोति छन्दोभङ्गभीतेः ।

**गुणगणार्णमनुगत्य (१०, ३५, १९)।**

अर्णवस्थानेऽर्णः। स चाशक्तस्तमर्थमभिधातुम्। छन्दसि अर्णमिति जलौघमाह, अर्णेति स्त्रियां नदीम्। इह तु च्छन्दोनुरोधात् प्रयोगः।

**भुजभगन्धसुगन्धं मूर्ध्न्यधास्यत् कदा नु (१०, ४७, २१)।**

अधास्यदित्याधास्यतीत्यर्थे। आङं ह्रसयति तिशब्दस्य इकारं च लुम्पति छन्दो यथा रक्ष्येत।

**ता ऊचुरुद्धवं प्रीतास्तत्सन्देशगतस्मृतीः (१०, ४७, ३८)।**

अक्षराधिक्यवारणाय यथाप्राप्तं प्रथमामनादृत्य द्वितीयां प्रयुङ्क्ते।

**राजतारकुटैः कोष्ठैः (१०, ५०, ५३)।**

आरकूटैरिति वक्तव्ये छन्दो मा विगादिति ऊकारं ह्रसयति।

**भीष्मकन्या वरारोहा (१०, ५३, २२)।**

भीष्मक इति विदर्भनाथस्य संज्ञा, न तु भीष्म इति। छन्दःपरवशः संज्ञामप्यन्यथयति।

**सत्राजितः स्वतनयां कृष्णाय··· दत्तवान् (१०, ५६, १)।**

सत्राजिदिति तस्य प्रथते नाम तकारान्तम्। अयन्त्वदन्तं पठति वृत्तभङ्गभीरुः। अन्यत्र स्वयमपि तकारान्ततां तस्येच्छति।

**स्मायावलोकलवदर्शितभाव० (१०, ६१, ४)।**

स्मयात्स्वार्थेऽणं करोति। अपि चेच्छब्दो विक्रियेत, छन्दस्तु मे रक्षणीयम्।

**तमेव शरणं जग्मुः सकुटुम्बा जिजीषवः (१०, ६८, ४३)।**

अत्र जिजीविषव इति वक्तव्ये जिजीषव इत्याह। छन्दोनुरोधात्। श्रीधरस्त्वेतस्माद्रूपादुद्विजमानो जिजीविषव इति पठति, अक्षराधिक्यं च सोढव्यमिति चाचष्टे। पुराणकारस्तु न जातु छन्दोभङ्गं सहत इति च प्रस्मरति।

**जुष्टं स्वलङ्कृतैः पुम्भिः स्त्रीभिश्च हरिणाक्षिभिः (१०, ८१, २३)।**

हरिणाक्षीभिरित्येव शब्दः। ह्रस्वेकारान्तस्त्वपशब्दश्छन्दोरक्षाप्रयोजितः।

**त्रिणवहान्यमुनाऽभ्ययुध्यत् (१०, ८३, १०)।**



अल्लोपश्छन्दोऽनुरोधात्।

**ऋणैस्त्रिभिर्द्विजो जातो देवर्षिपितॄणां प्रभो (१०, ८४, ३९)।**

पितॄणाम् इत्याबालप्रसिद्धं रूपं विकरोति च्छन्दोवशाल्लोकापवादादभीतः।

**विपणमृतं स्मरन्त्युपविशन्ति चारुपितैः (१०, ८७, २५)।**

छन्दोवशादास्थितमारुपितमिति शब्दरूपं किमप्युद्वेजकम्। आरुपितैरारोपितैरारोपैः।

**कान्तं स्म रेचकजिहीरषयोपगुह्य (१०, ९०, १०)।**

जिहीर्षयेति वक्तव्ये मध्येऽकारं प्रक्षिपति चछन्दश्चानुरुणद्धि।

**शुष्यद्ध्रदाः करशिता बत सिन्धुपत्न्यः (१०, ९०, २३)।**

छन्दोनुरोधात्सर्वलोकविद्विष्टं करशितमिति शब्दरूपं श्रयते।

**यथालब्धोपचारकैः (११, ३, ५०)।**

उपचारकैः=उपचारैरुपचारसाधनैः। स्वार्थे कन् वृत्तभङ्गभयात्। अस्थाने चायम्। कर्तरि ण्वुलन्तमेतदिति प्रतीतेर्दुर्वारत्वात्।

**°धूपदीपोपहारकैः (११, ३, ५३)।**

अनन्तरे पद्ये या दूषणप्रक्रिया सेहानुवर्तनीया।

**सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः (११, ८, १६)।**

आशासानानामिति वक्तव्ये 'ना' इति लुम्पति, अक्षराधिक्यं च वारयति।

**शतह्लदाभीरुपतापितं जगत् (१२, ९, १३)।**

शतह्लदाभीरित्यत्र प्रत्ययैकारं द्राघयति, छन्दो मा विगायीति।

**आपूर्यमाणो वरषद्भिरम्बुदैः (१२, ९, १४)।**

वर्षद्भिरिति वक्तव्ये वरषद्भिरित्याह। अहो अस्य चछन्दसि समादरो वाचि चानादरः॥

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे
द्वादशाध्याय्यां वृत्तभङ्गभयप्रयुक्तशब्दवैरूप्यनिरूपणो
नाम दशमोऽध्यायः॥

# एकादशोऽध्यायः

## छन्दोमात्रगोचराः शब्दाः

उभये हि शब्दा लौकिका वैदिकाश्च। लोके विदिता लौकिकाः। तत्र ये वेदमात्रगोचरास्ते वैदिका इति समाख्यायन्ते। लोकवेदोभयसाधारणाश्च लौकिका एव। ये वेदमात्रगोचरास्ते लोके न व्यवहार्या भवन्ति। अयं तु तानपि च्छन्दोमात्रप्रसिद्धेष्वर्थेष्वपि व्यवहरति। तदिदं दिङ्मात्रमुदाहरामः—

**दुग्धं मामोषधीर्विप्राः (१, ३, १४)।**

दुग्ध=अदुग्ध। छन्दस्यमाङ्योगेऽपीत्यडभावः। बहुलं छन्दोऽनुकरोत्येषः। तदिदं छन्दोऽनुकरणमुपरिष्टाद् वितत्य निदर्शयिष्यामः।

**न यत्र हंसा निरमन्त्युशिक्क्षयाः (१, ५, १०)।**

उशिक् कमनीयः (भगवान्) क्षयो निवासो येषां ते। अन्यत्रापीह पुराण उशिक्छब्दप्रयोगो लक्ष्यते—**भोजयित्वोशिगो विप्रान्नानागुणवताऽन्धसा** (११, ६, ३७) इत्यत्र यथा। छन्दसि त्वनेकत्र श्रूयते। तद्यथा—उशिक् पावको वसुर्मा नु (ऋ० १, ६०, ४)। उशिक् पावको अरतिः सुमेधाः (ऋ० १०, ४५, ७)। उभयत्र कामयमानः, अनुरक्तोऽनुव्रत इत्यादिरर्थः।

**हत्वा स्वरिक्थस्पृध आततायिनः (१, १०, १)।**

वेदे वैदिके च वाङ्मये स्पृदिति युधि स्पर्धितरि रिपौ वा वर्तते। स्पर्धतेः क्विपि रूपम्। सम्प्रसारणमार्षम्।

**प्रमथ्य चैद्यप्रमुखान्हि शुष्मिणः (१, १०, २९)।**

लोके शुष्मशब्दो बलवचनः क्वचिदेव प्रयुज्यते। वेदे शुष्मी बलवानुच्यते। लोकेऽयं विरलप्रयोगतमः।

**अजातशत्रुः पृतनां गोपीथाय मधुद्विषः (१, १०, ३२)।**

अत्र गोपीथशब्दश्छान्दसो रक्षायामर्थे प्रयुक्तः। अन्यत्रापीह गुणितोऽस्य प्रयोगः। **गोपीथाय जगत्सृष्टेः** (४, २२, ५५)। गोपीथायात्मनः सर्वे

(१०, १७, ३) इत्यत्र यथा। छन्दसि तु पयःपानेऽर्थे प्रसिध्यति—**प्रति त्वं चारुमध्वरं गोपीथाय प्र हूयसे** (ऋ० १, १९, १) इति। कविस्त्वत्र गुपि धातुमुत्प्रेक्षते।

**पश्येम रूपं तव सर्वसौभगम्** (१, ११, ८)।

सुभग मन्त्र इति गणसूत्रेण मन्त्रे विषये ष्यञपवादोऽण् विधीयते। तथा च च्छन्दसि प्रयोगाः प्रथन्ते—**अस्मभ्यं च सौभगमा यजस्व** (८, ११, १०)। **गृभ्णामि ते सौभगत्वाय हस्तम्** (ऋ० १०, ८५, ३६)। अयं तु मन्त्रमात्रगोचरं सौभगशब्दं पौनःपुन्येन प्रयुङ्क्ते। केचित्प्रदेशा उदाह्रियन्ते—**अनन्यपुरुषश्रीभिर्हीना भूर्हतसौभगा** (१, १४, २१)। **सुरार्चितं किं हृतमङ्ग सौभगम्** (१, १६, २४)। **अलं यत्पादसौभगम् भजतेऽनुरक्ता** (१, १६, ३२)। **तद्गात्रं वस्तुसाराणां सौभगस्य च भाजनम्** (२, ६, ३)। **विस्मापनं स्वस्य च सौभगर्द्धेः** (३, २, १२)। **गान्धर्वं मधुसौभगम्** (४, १८, १७)। **न जन्म नूनं महतो न सौभगम्** (५, १९, ७)। **तासां तत्सौभगमदं वीक्ष्य मानं च केशवः** (१०, २९, ४८)। इति।

**किं ते कामाः सुरस्पार्हा मुकुन्दमनसो द्विजाः** (१, १२, ६)।

अस्मात्पुराणादन्यत्र लौकिके साहित्ये स्पार्हशब्दो न दृश्यते। स्पार्हः स्पृह्यः स्पृहणीयो भवति। अयं छान्दसः। तथा च श्रुतिः—**स्पार्हा यस्य श्रियो दृशे** (ऋ० ७, १५, ५)। अनधीतच्छन्दस्काः पौराणिका विवरीतारस्तु नाना व्युत्पत्तीः कल्पयन्ते। स्पार्हं स्पृहा। स्वार्थेऽण्। स्पृहाणां समूहो वा। समूहेऽण्। स्पृहाऽस्त्येष्विति स्पार्हाः। शैषिकोऽण्।

**अपीच्यदर्शनं श्यामं तडिद्वाससमुज्ज्वलम्** (१, १२, ८)।

अपीच्यं सुन्दरम् इत्यर्थे प्रयुक्तम्। अन्यत्रापीह पुराणेऽभ्यावर्तितः प्रयोगः। तद्यथा—**पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः** (९, ३, १५)। **शुचिस्मितः कोऽयमपीच्यदर्शनः** (१०, ४७, २)। अयमपि च्छन्दोमात्रगोचरः शब्दः। तथा च ऋग्वर्णः—**अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्** (ऋ० १, ८४, १५)। निघण्टुषु त्वपीच्यं निर्णीतान्तर्हितनामसु पठितम्। पुराणकारस्त्वर्धजरतीयमाश्रयति। शब्दमादत्तेऽर्थं च जहाति।

**सह ओज आर्च्छत्** (१, १५, १५)।

सह इति सकारान्तं नपुंसकं प्रातिपादिकं छान्दसम्। अन्यत्रापीह पुराणे लक्ष्यते प्रयोगः—**सह ओजो बलं भगः** (१, १६, २८)। लोके तु सहसा, साहसम्, साहसिकः, साहसिक्यम् इत्यादयः सहःप्रकृतयः प्रथन्ते प्रयोगाः।

**सेहे महान् महितया कुमतेरघं मे (१, १५, १९)।**

महिशब्दो महच्छब्दपर्यायश्छान्दसः। छन्दस्यस्य बहुलः प्रयोगः। **त्वं द्यां च महिव्रत** (ऋ० ९, १००, ९)। **महीव कृत्तिः शरणा त इन्द्र** (नि० ५, २२, २)। अन्यत्रापि च्छन्दोऽनुकुर्वन्वारानेनेकान्महिशब्दं प्रयुङ्क्ते तद्यथा—**विज्ञानशक्ति महिमामनन्ति** (२, १, ३५)। अत्र महिशब्देन महत्तत्त्वमाह। **सर्वात्मना महि गृणामि यथामनीषम्** (७, ९, १२)। महि महत्त्वम्। **दन्तैश्चतुर्भिः श्वेताद्रेर्हरन्भगवतो महिम्** (८, ८, ४)। महिम् महिमानम्। **माया विनेशुर्महिना महीयसः** (८, १०, ५५)। महिना महिम्ना। **नेशे महि त्ववसितुम्** (१०, १४, २) इति।

**भस्मन्हुतं कुहकराद्धमिवोप्तमूष्याम् (१, १५, २१)।**

भस्मन्निति ङेर्लुकि रूपम्। सुपां सुलुग् इत्यादिशास्त्रं तद्विधायकं छन्दोविषयम्। मूषीति च स्त्रियां क्वचिच्छन्दस्येव।

**नष्टां स्मृतिं प्रत्यवरुध्य तुष्टात् (विष्णोः) (२, २, १)।**

प्रत्यवरुध्य प्रतिलभ्य। अवपूर्वो रुधिश्छन्दस्येव प्राप्तिलक्षणमर्थमाह। अयं त्विदं विद्वानपि च्छन्दसोऽनुकरोति। **तेपे तपो बहुसवोऽवरुरुत्समानः** (३, ९, १८)। अवरुरुत्समानः प्राप्तुमिच्छत्। **ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग** (५, १, १५)। **परदारपरद्रव्याण्यवरुन्धानः** (५, १४, २२)। अवरुन्धानो वशे कुर्वन्। अयमप्यर्थश्छन्दसि परिगृहीत इति नापूर्वः। **देहं नावरुरुत्सेऽहं दुःखशोकभयावहम्** (९, १३, १०)। नावरुरुत्से नादित्से, न जिघृक्षे।

**तस्मै नमो भगवते वासुदेवाय धीमहि (२, ५, १२)।**

धीमहीति च्छन्दोऽनुकारः। भर्गो देवस्य धीमहीत्यादिष्वृक्षु श्रवणात्। यद्यपि लोके धीङ् आधार इति दैवादिकाल्लिङि सिध्यति रूपम्, अर्थस्तु न सिध्यति। नमो धीमहीत्यन्वयात्।

**विद्धः सपत्न्युदितपत्रिभिरन्ति राज्ञः (२, ७, ८)।**

अन्ति=अन्तिके। इदमव्ययम्। छन्दोमात्रगोचरम्। स्वार्थिककप्रत्ययान्तोऽन्तिकशब्दस्तु लौकिकोऽनव्ययः। अयं त्वन्यत्रापीह पुराणे प्रयुङ्क्ते तद्यथा—**तथेत्यवात्सीद् देवर्षेरन्ति साप्यकुतोभया** (७, ७, १३)। **श्रुत्वा स्वधाम्नोऽन्त्यज आगतोऽचिरात्** (१०, १२, ३५)। **अप्यन्त्युपेतगुणात्मनाम्** (१०, ८६, ४७)। वेदे तु बहुलं प्रयुज्यते। काश्चिद् दिश उदाह्रियन्ते—

अन्ति दूरे पदीष्ट सः (ऋ० १, ७९, ११)। दूरे वा ये अन्ति वा केचिदत्रिणः (ऋ० १, ९४, ९)। अन्ति नूनमश्विनोपस्तुतेह (ऋ० ५, ७६, २)। अन्ति चित्सन्तमह (ऋ०, ८, ११, ४)। अन्ति सन्तं न जहात्यन्ति सन्तं न पश्यति (अथर्व० १०, ८, ३२) इति।

कच्चिद् बुधः स्वस्त्यनमीव आस्ते (३, १, ३२)।

अमीव इति लोके न दृश्यते। अनमीवा अयक्ष्मा इति (वा० सं० १, १) इत्यत्र, अमीवचातन इति चान्यत्र ऋक्षु श्रूयते। छन्दसि दुःखशोकभयेषु वर्तते। इह त्वपराधेपि यथा— स्मरन्तोऽमीवमस्य तत् (८, २८, २६) इत्यत्र।

तस्मै नमो भगवतेऽनुविधेम तुभ्यम् (३, ९, ४)।

अनुविधेम अनुवृत्त्या कुर्याम। वस्तुतो विधतिः परिचर्याकर्मा निघण्टुषु पठितः। तस्येदं रूपम्। रूपं छान्दसमर्थस्तु स्वोत्प्रेक्षितः।

माध्व्या गिराऽपनयतात् (विषादं) पुरुषः पुराणः (३, ९, २५)।

माध्वी मधुरा। अन्यत्रापीह पुराणे प्रयोगः। विसृज्य माध्व्या वाण्या ताम् (१०, ४२, १३)। अयमपि च्छन्दोऽनुकारः। तथा च श्रुतिः—माध्वीर्नः सन्त्वोषधीः (ऋ० १, ९०, ६)। आचार्यः खल्वपि छन्दोविषये माध्वीति निपातयति। ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि च्छन्दसीति (६, ४, १७५)।

तान्वीक्ष्य वातरशनांश्चतुरः कुमारान् (३, १५, ३०)।

वातरशना दिग्वाससः। इयमपि च्छन्दोऽनुकृतिः। भवति च ऋग्वर्णः।

तेऽचक्षताक्षिविषयं स्वसमाधिभाग्यम् (३, १५, ३८)।

लोके चक्षिङ् व्यक्तायां वाचि वर्तते। इह तु च्छन्दोनुकृत्य दर्शनेपीति काश्चिद् दिश उदाह्रियन्ते— जलाशयमचक्षाणः (१, १८, २५)। अचक्षाणः= अपश्यन्। मुनयो यदचक्षतात्मन् (२, ७, ५)। येऽभ्यागतान् वक्रधियाऽभिचक्षते (४, ३, १८)। न व्यचष्ट वरारोहां गृहिणीं गृहमेधिनीम् (४, २६, १३)। नाचष्ट कृच्छ्रं कृपणोऽजमायया (८, २, २६)। नादर्शत्, बुद्धौ नाकरोत्। प्रत्यचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः (९, ४, ४१)। प्रत्यचष्ट प्रत्यैक्षिष्ट। इहापि चक्षिङ् दर्शने परिगृहीतः। अतप्यंस्तमचक्षाणाः करिण्य इव यूथपम् (१०, ३०, १) इति।

तस्मा इदं भगवते नम इद् विधेम (३, १५, ५०)।

इदिति निपातश्छन्दोमात्रगोचरः। विधतिरपि च्छान्दसः।

**सत्त्वेन नो वरदया तनुवा निरस्य (३, १६, २२)।**

तनुवा = तन्वा। तन्वादीनां छन्दसि बहुलम् इत्युवङ्।

**मनोवीर्यवरोत्सिक्तमसृण्यमकुतोभयम् (३, १७, २२)।**

सृणिमर्हतीति सृण्यः। स न भवतीत्यसृण्यः। **छन्दसि च (५, १, ६७)** इत्यनेन प्रातिपदिकमात्रात्तदर्हतीत्येतस्मिन्नर्थे यत्। **नेदीय इत् सृण्यः पक्वमेयात्** (वा० सं० १२, ६८) इति यजुषि प्रयोगः।

**तदेतन्मे विजानीहि यथाहं मन्दधीर्हरे। सुखं बुध्येय (३, २७, ३०)।**

विजानीहि विज्ञापयेत्यर्थः। अन्तर्णीतण्यर्थको विजानातिर्बहुलमुपनिषत्सु।

**मुक्तलिङ्गं सदाभासमसति प्रतिपद्यते।**

**सतो बन्धुम् ... ... ... ... ... (३, २७, १५)।**

**इह सतो बन्धुमसति निरविन्दन्** (ऋ० १०, १२९, ४) इत्यृग्वर्णोनुक्तः शब्दतो नार्थतः।

**एवं निशम्य कपिलस्य वचो जनित्री (३, ३३, १)।**

**जनिता मन्त्रे (६, ४, ५३)** इत्येतद्रूपं मन्त्रादन्यत्र न।

**सुतां सतीमब्रवध्यावनागाम् (४, ५, ९)।**

लोकेऽनागस् इति सान्तं प्रातिपदिकं प्रसिध्यति। वेदेऽदन्तमपि तदिति तस्यानुकरणं प्रकृते। **मा गामनागामदितिं वधिष्टेति** हि श्रुतिर्विश्रूयते।

**तदा सर्वाणि भूतानि श्रुत्वा मीढुष्टमोदितम् (४, ७, ६)।**

मीढ्वस्, मीढुष्टम इति च च्छान्दसे शब्दरूपे। मीढ्वान् दाता भवति मीढुष्टम इति च दातृतमः।

**तस्मा अप्यनुभावेन स्वेनैवावाप्तराधसे (४, ७, ५७)।**

राध इति सकारान्तं धनवाचि प्रातिपदिकं वेदे प्रसिद्धम्। **सा नो राधांस्या भर** (ऋ० ७, १५, २) इत्यत्र यथा।

**प्रणताश्रयणं नृम्णं शरण्यं करुणार्णवम् (४, ८, ४६)।**

नृम्णं सुखकरम् इति टीका। अन्यत्रापीह पुराणे नृम्णमिति दृश्यते। तद्यथा—**क्रुद्धः परिघमुद्यम्य जघ्ने तं नृम्णसंसदि (१०, ६१, ३६)।** नृम्ण-

मुत्सवः। **अभिनृम्णया (१०, ६२, ३२)**। नृम्णं मङ्गलमिति श्रीधरः। इदमपि छान्दसं शब्दरूपम्। छन्दसि चेदं वीर्ये ओजसि उत्साहे धने च वर्तते।

**त्वद्वत्तया वयुनयेदमचष्ट विश्वम् (४, ९, ८)।**

वयुनमिति वेदे प्रसिध्यति प्रज्ञानं च वक्ति। वयुनेति टाबन्तं तु तत्र न दृश्यते। पुराणकारोऽन्यत्रापि वयुनम् इति प्रयुङ्क्ते। **अन्तर्हितवयुनः (१०, ८, ३०)**। अत्रापि वयुनेति टाबन्तं शब्दरूपमिष्टं स्यात्कवेः, उपसर्जन-ह्रस्वे सति। वेदे तु वयुनं नित्यनपुंसकम् बहुलं च प्रयुक्तम्। काश्चिद् दिशः स्थूलोच्चयेन संगृह्यन्ते—**स इत्तमोऽवयुनं ततन्वत् (ऋ० ६, २१, ३)। अहिरिव भोगैः ··· ··· विश्वा वयुनानि विद्वान् (ऋ० ६, ७५, १४)। अर्थः शंसामि वयुनानि विद्वान् (ऋ० ७, १००, ५)। वनस्पते रशनया ··· ··· वयुनानि विद्वान् (ऋ० १०, ७०, १०)** इति।

**वाश्रेव वत्सकमनुग्रहकातरोऽस्मान् (४, ९, १७)।**

वाश्रा नवप्रसूता गौरिति टीकाकृतः। इदमपि च्छान्दसम्। छन्दसि वाश्रशब्दः शब्दायमानं वाश्यमानं वाह। **वाश्रेव विद्युन्मिमाति (ऋ० १, ३८, ८)। वाश्रा अर्षन्तीन्दवः (ऋ० ९, १३, ७)।**

**तन्नो भवानीहतु रातवेऽन्नम् (४, १७, ११)।**

रातवे इति च्छान्दसम्। तुमर्थे सेसेन् इत्यादिना तवेङ्प्रत्ययः। **वधान्निवृत्तं तं भूयो हन्तवेऽत्रिरचोदयत् (४, १९, १५)।** अत्र तुमुनोऽर्थे हनस्तवेन्प्रत्ययः।

**ग्रीष्मे पञ्चतपा वीरो वर्षास्वासारषाण्मुनिः (४, २३, ६)।**

आसारषाट् आसारं धारासम्पातं सहत इति। **छन्दसि सहः (३, २, ६३)** इति ण्विः।

**यर्हि वाव ह राजन् स राजपुत्रः प्रियव्रतः (५, १, ५)।**

वाव ह इति निपातौ छान्दसौ।

**सर्वत्र मद्भावविचक्षणेन (५, ५, १३)।**

विचक्षणो द्रष्टा दर्शकः। चक्षिङ् इह पुराणे बहुशो दर्शनेर्थे प्रयुक्त इति दर्शितचरम्।

**ज्ञानासिमाधाय तराति पारम् (५, १३, २०)।**

**छन्दसि परेऽपि (पा० १, ४, ८१)** इति धातोः परोऽतिः। लोके तु **ते प्राग्धातोः (पा० १, ४, ८०)** इति प्रादीनां धातोः प्राक् प्रयोगो नियम्यते।

**योऽसौ धर्मस्तं तु साम्पराय उदाहरन्ति (५, १४, २)।**

युद्धायत्योः सम्पराय इति सम्परायो लौकिकः। आदिदीर्घः साम्परायस्तु छान्दसः। न साम्परायः प्रतिभाति बालम् इति कठश्रुतिः।

**संवत्सरं व्रतमिदं यद्यञ्जो धारयिष्यसि (६, १८, ४५)।**

लोकेऽञ्ज इति नावतरति प्रयोगम्। अञ्जसेति सुबन्तप्रतिरूपकमव्ययं तु बाढं प्रचरति। इह पुराणेऽसकृत् प्रयोगोऽञ्जसोऽव्ययस्य। **नाञ्जः स्वरूपगमने प्रभवन्ति भूम्नः (८, ७, ३४)। नाञ्जः प्रतिव्योढुं व्रजस्त्रियः (१०, ३३, १८)** इत्यादिषु। वेदेऽञ्जोऽनव्ययं चार्थान्तरे च—**स्वर्जेषे भर आप्रस्य वक्मन्युषर्बुधः स्वस्मिन्नञ्जसि (ऋ० १, १३२, २)।**

**सजूरिन्द्रेण पञ्चाशद् देवास्ते मरुतोऽभवन् (६, १८, ६७)।**

सजूरिति सहार्थे छन्दसि प्रसिध्यति। सजूर्देवेन सवित्रा (वा० सं० ३, १०)।

**दुहितॄर्हृदय्याः (७, ६, १२)।**

हृदयस्य प्रिया हृदय्याः। लोके तु हृद्या इत्युच्यन्ते। अन्यत्रापीह पुराणे हृदय्यशब्दप्रयोगः। **ग्रन्थीन् हृदय्यान् विवृणु स्वमोकः (८, २४, ५३)।** इह हृदय्या हृदिस्था उक्ताः। उपनिषदि तु **भिद्यते हृदयग्रन्थिरिति** समासवृत्त्योच्यतेऽर्थो न तद्धितवृत्त्या।

**शेषेऽऽत्मना निजसुखानुभवः (७, ९, ३१)।**

आत्मना इत्यर्थे त्मना इति तृतीयायां रूपं छान्दसम्। **मन्त्रेष्वाङ्यादेरात्मनः (पा० ६, ४, १४१)** इत्यात्मशब्दस्याकारलोपः।

**जातेऽङ्कुरे कथमुहोपलभेत बीजम् (७, ९, ३४)।**

उहो निपातौ। एतौ च्छन्दसि बहुलं दृश्येते।

**तदुग्रवेगं (विषं) दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति (८, ७, १९)।**

अप्रतिरोध्येऽप्रतिकारे वाऽर्थेऽप्रतिशब्दः प्रयुक्तः। अयमपि च्छान्दसः प्रयोगः। तथा च श्रुतिः—**इन्द्रावरुणा वधनाभिरप्रति (ऋ० ७, ८३, ४)। हथो अप्रत्यसुरस्य वीरान् (ऋ० ७, ९९, ५)** इति च।

**वह्निस्फुलिङ्गशिखया भसितं न वेद (८, ७, ३२)।**

भस दीप्तिभर्त्सनयोर्जुहोत्यादिश्छान्दसः। तस्य निष्ठायां भसितमिति रूपम्।

**मृडनाय लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः (८, ७, ३५)।**

मृडतिश्छान्दसः। यो मृळयाति चक्रुषे चिदागः (ऋ० ७, ८७, ७), उतापृणन् मर्डितारं न विन्दते (ऋ० १०, ११७, १) इत्यादिषु श्रूयते।

**शं नः कृधीश भगवन्नसि दीननाथः (८, १७, ८)।**

कृधीति लोण्मध्यमैकवचने छन्दस्येव शिष्यते।

**द्यौरन्तरिक्षं क्षितिरग्निजिह्वाः (८, १८, ४)।**

अग्निजिह्वा देवाः। लोके त्वस्य प्रसिद्धिर्न। कल्पितः शब्दः।

**दाश्वानविक्लवमना: कथमार्तिमृच्छेत् (८, २२, २३)।**

दाश्वान्साह्वान्मीढ्वांश्च (पा० ६, १, १२) इत्यनेन मीढ्वानिति च्छन्दसि क्वस्वन्तो निपात्यते।

**पारं महिम्न उरुविक्रमतो गृणानो**
**यः पार्थिवानि विममे स रजांसि मर्त्यः (८, २३, २९)।**

यः पार्थिवानि विममे रजांसि (ऋ० १, १५४, १) इत्यृचमर्थतोऽबुद्ध्वाऽन्यथा बुद्ध्वा वाऽनुवदति। ऋचि पार्थिवानां रजसां पृथिव्यादीनां त्रयाणां लोकानां विमानं विष्णुकर्तृकमुक्तम्। भागवतस्थेऽनुवादे तु विष्णोर्यः कश्चिद् गरीता (स्तोता) तत्कर्तृकम्। पार्थिवानि रजांसीत्यनेन च पार्थिवा रजःकणा अभिप्रेताः। ऋचि छन्दसि लुङ्लङ्लिटः (पा० ३, ४, ६) इति कालसामान्ये लिण् न विरुध्यते। अनुवादे तु सर्वथाऽसङ्गतः स इत्यनुवादो बुद्धिपूर्वा कृतिर्न।

**प्रयाणे रथमारुहत् (१०, १, २९)।**

आरुहदिति लुङ्यङि रूपम्। छन्दसि चायमङ्विधिः। तथा च सूत्रकारोऽसुसूत्रत्—कृमृदृरुहिभ्यश्छन्दसि (३, १, ५९)। च्लेरङ्।

**निरीक्षमाणे जननी ह्यतिष्ठताम् (१०, ६, ९)।**

सुपां सुलुक्पूर्वसवर्णेत्यादिनाऽऽचार्यः छन्दसि पूर्वसवर्णमनुशास्ति। तेन जननी इति प्रथमाद्विवचने सिध्यति। लोके तु जनन्याविति ब्रूयात्।

**यदूनां पतये नमः (१०, १०, ३६)।**

पतय इति पाक्षिक्यां घिसंज्ञायां साधु। छन्दस्ययं विधिर्न तु लोके। षष्ठीयुक्तस्य च्छन्दसि वेतीदं विधायकं शास्त्रम्।

**अक्षण्वतां फलमिदं न परं विदामः (१०, २१, ७)।**

अक्षण्वताम् इति च्छान्दसम् । **छन्दस्यपि दृश्यते** (पा० ७, १, ७६) इति तृतीयाद्यजादिभ्यो विभक्तिभ्योऽन्यत्राप्यनङमन्तादेशमनुजानाति । श्रूयते च—**अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः** (ऋ० १०, ७१, ७) ।

**स चर्षणीनामुदगाच्छुचो मृजन् (१०, २९, २)।**

चर्षणिरित्यपि च्छान्दसम् । इदं मनुष्यं वक्ति क्वचिच्च सूर्यम् । **सेदु राजा क्षयति चर्षणीनाम्** (ऋ० १, ३२, १५)। विशां प्रजानां मनुष्याणामित्यर्थः। **यः पञ्च चर्षणीरभि निषसाद दमे दमे** (ऋ० ७, १५, २)। **पिता कुटस्य चर्षणिः** (ऋ० १, ४६, ४)। चर्षणिः सूर्यः। **एवैश्च चर्षणीनामूती हुवे रथानाम्** (ऋ० ८, ६८, ४)। इत्यादिष्वृक्षवन्यत्र च चर्षणिः श्रूयते।

**कृत्वा मुखान्यव शुचः (१०, २९, २९) ।**

**छन्दसि परेऽपि** (पा० १, ४, ८१) इत्युपसर्गस्यात्र इत्यस्य धातोः परः प्रयोगः। मुखान्यवाञ्चि कृत्वेत्यर्थः।

**ईडितवेणुः (१०, ३५, १६) ।**

ईडितवेणुः=ईरितवंशः=उदीरितवंशः । ईड स्तुतौ छान्दसः । क्वचित् प्रेरणेऽपि। **अग्निं वां इतो वृष्टिमीट्टे** (पा० १, ३, १ सूत्रे भाष्ये) इत्यत्र यथा ।

**वसूनां त्वावतां प्रभो (१०, ५०, १३)।**

त्वावतां त्वत्सदृशाम् । **युष्मदस्मदोः सादृश्ये वतुब्वाच्य** इति वार्तिकेन छन्दसि विषये वतुप्। **आ सर्वनाम्नः** (६, ३, ९१) इत्यनेनात्वम्। अनाघ्रातच्छन्दस्काष्टीकाकृतस्तु नाना कल्पयन्ते—**त्वमवन्, त्वं नाथत्वेन विद्यसे येषां तेषाम्** इत्येवं विगृह्णन्ति न च विजानन्त्येवम् **त्वावताम्** इत्यत्रात्थं दुर्लभमिति ।

**हस्ताग्राहं न तेऽद्यापि राजपुत्र्युपलक्षये (१०, ६२, १५)।**

हस्तग्राहः पतिः । इदमपि च्छन्दोऽनुकरणम् । **हस्तग्राभस्य विधिषोस्तवेदम्** (ऋ० १०, १८, ८) इत्यत्र श्रवणात् ।

**अहो महच्चित्रमिदं कालगत्या दुरत्यया (१०, ६८, २४)।**

कालगत्येति प्रथमार्थे तृतीया। सुपां सुपो भवन्तीति वार्तिकेन।

**त्वत्पादुके अविरतं परि ये चरन्ति (१०, ७२, ४)।**

ते प्राग्धातोरिति प्रादयो नियमेन धातोरव्यवहितपूर्वाः प्रयुज्यन्ते। छन्दसि तु व्यवहिताश्चापि। तदिदं छन्दोऽनुकरणम्।

**तीर्थद्वयं शुचिषदस्त उपस्पृशन्ति (११, ६, ९)।**

हंसः शुचिषद् वसुरन्तरिक्षसद् (ऋ० ४, ४०, ५, वा० सं० १०, २४) इत्यत्र श्रूयमाणस्य शुचिषद् इत्यस्यानुकारः। तत्र हंसः सूर्यः। हन्त्यध्वानमिति। शुचिर्दीप्तिः। श्रीधरादयस्तु नाना कल्पयन्ति। शुचिषु सत्सु विविक्तेषु पूतेषु सीदन्ति तैः संगच्छन्त इत्येकः कल्पः। शुचये आत्मविशुद्धये सीदन्ति क्लिश्यन्ते प्रयतन्त इति द्वितीयः।

**पदापि युवतीं भिक्षुर्न स्पृशेद् दारवीमपि (११, ८, १३)।**

दारवीति च्छन्दोमात्रगोचरम्। तथा च श्रुतिः—**न दारवे पात्रे जुहुयात्। अग्निर्वा एष यद् दारुपात्रम्।** लोके तु वृद्धत्वान्नित्ये मयटि दारुमयीति स्यात्। **लक्ष्यते च यथा काष्ठमयो हस्ती यथा दारुमयो मृग इत्यादिषु शतशः प्रयोगेषु।**

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे द्वादशाध्याय्यां छन्दोमात्रगोचरशब्दनिरूपणो नामैकादशोऽध्यायः॥

## द्वादशोऽध्यायः

# अनौचित्यम्

पर्यवसितो भाषाविषयः परिच्छेदः। इदानीं शुद्धेऽपि सन्दर्भे यदिहानुचितमभाषि तत्परिच्छिद्यते परिच्छेदस्यावैकल्याय। अनुचितं नामासमवेतमसम्बद्धार्थं व्याहतमन्यथोत्प्रेक्षितमनिबन्धनमयौक्तिकं वा भवति। अनौचित्यं नाम दोषो महतोपि गुणांस्तिरयति, अनाविलमप्याविलयति, सरसमपि विरसयति। तद्धि व्यामोहप्रतिबद्धं भवत्यसमीक्ष्यकारिताकारितं वा। अनौचित्यस्योल्बणस्य केचनाल्पे प्रदेशाः प्रदर्श्यन्ते विदुषां विमर्शाय।

**तेने ब्रह्म हृदा य आदिकवये (१, १, १)।**

अत्र हृच्छब्दप्रयोगोऽसाम्प्रतम्। मनसा सङ्कल्पेनेत्यर्थस्य विवक्षणात्। भिद्येते हि हृदयमनसी इति विदितोऽर्थः। मनसा संकल्पेन आदिकवये ब्रह्म वेदं तेने प्रकाशितवानित्यर्थः। यदि वेदः शतधृतये प्रकाश्यते तर्हि सा तस्योपज्ञा न भवति, तेनादिकवित्वं किं नाम।

**जन्माद्यस्य यतोऽन्वयादितरतः (१, १, १)।**

अत्र इतरशब्देन व्यतिरेक उक्तः। यत्र जगतो जन्मादि तत्र ब्रह्मेत्यन्वयव्याप्तिः। यत्र ब्रह्माभावस्तत्र जगज्जन्मादेरप्यभाव इति व्यतिरेकव्याप्तिः। सा च न सिध्यति। सर्वं खल्व् इदं ब्रह्म तज्जलान् इति श्रुतिविरोधात्। ब्रह्मणः सर्वत्र सत्त्वात्।

**वेद्यं वास्तवमत्र वस्तु शिवदम् (१, १, २)।**

वस्तुशब्दो हि तुच्छकमित्यस्य प्रत्यनीकभूतः। वस्तुनस्तुच्छकाद् व्यतिरेकाय (व्यावृत्तये) वास्तवमिति विशेषणमर्थवत् स्यात्। वस्तुनि विशेष्ये तदपार्थकमनुचितमिति परिहार्यम्।

**निगमतरोर्गलितं फलं ··· पिबत भागवतं रसमालयम्।**
**मुहुरहो रसिका भुवि भावुकाः (१, १, ३)।**

अत्र फलं रसं भुवि पतितं कथं पिबेयू रसिकाः। भूपातमात्रेण रसो रजस्वलो जायेत। फलं रसमिति सामानाधिकरण्येनोक्तिः फलस्य त्वगस्थि-

रहितस्य रसरूपत्वं निरूपयति। तेन तादृशस्य तस्य रसस्य विषये पिबतेति प्ररोचनाऽसदृशी विप्रलम्भिका नाम ।

**बदार करजैर्वक्षस्येरकां कटकृद्यथा** (१, ३, १८)।

उपमेये वक्षसि सप्तमी। उपमाने एरकामिति द्वितीया। इदमुपमानोपमेययोर्विभक्तिवैषम्यं विदग्धा न सहन्ते।

**अथो महाभाग भवानमोघदृक्छुचिश्रवा सत्यरतो धृतव्रतः।**
**उरुक्रमस्याखिलबन्धमुक्तये समाधिनाऽनुस्मर तद्विचेष्टितम्** (१, ५, १३)॥

उत्तरार्धे भवानित्यस्यानुकर्षादनुस्मरतु इति प्रथमपुरुष एवोचितः। नेदं युज्यते पूर्वार्द्धे भवानिति कर्तृत्वेनोपात्तमुत्तरार्द्धे त्वमिति कर्तृ स्यात्। तद् बालचेष्टितमिव भवति।

**अनन्तपारस्य निवृत्तितः सुखम्** (१, ५, १६)।

आनन्दं ब्रह्मणो विद्वान् न बिभाय कुतश्चनेत्यादिष्वनेकशः श्रुतिषु ब्रह्मण आनन्द उक्तः, न तु ब्रह्मणः सुखम्। सुखं वैषयिकं भवति। सुस्थानि खानेन्द्रियाण्यस्मिन्निति सुखम्।

**तत्राब्दकोटिप्रतिमः क्षणो भवेद्**
**रविं विनाक्ष्णोरिव नस्तवाच्युत** (१, ११, ९)।

किमाह। रविं विनाऽस्तमितेऽर्के इति यावत्। यथाक्ष्णोः क्षणोऽब्दकोटिसमो भवति। कस्येयमनुभूतिरन्यत्र भागवतकारात्। कामं सत्यपि भास्वति निमीलिताक्षस्याल्पीयान् कालोपि दीर्घो भाति न तु संवत्सरकोटितां याति। सर्वथाऽऽपातरमणीयमक्षोदक्षमं कवेर्वचः।

**तथापि तव देहोऽयं कृपणस्य जिजीविषोः।**
**परैत्यनिच्छतो जीर्णो जरया वाससी इव** (१, १३, २४)॥

अत्रोपमानोपमेययोः लिङ्गवचनभेद उद्वेगाय सचेतसाम्। वाससी इति द्विवचनमुपपादयिषन् कश्चिदुत्प्रेक्षते—द्विवचनेन देहस्यापि स्थूलसूक्ष्मभेदेन द्वैविध्यं गम्यते। हन्त असाध्वीयमुत्प्रेक्षा। स नेक्षते इत्थमुत्प्रेक्षिते शरीरद्वैविध्ये सूक्ष्मशरीरस्यापि जराजीर्णत्वं प्रसज्यते। तदनिष्टम्। अयं चापरो दोष उपमाने जीर्णे इति विशेषणं देयमासीत्, तन्नादायीति।

**सख्युः सखेव पितृवत् तनयस्य सर्वम्।**
**सेहे ... ... ... ...** (१, १५, १९)।

पितृवत् इत्यनुक्त्वा पितेवेति वाच्यमवाच्यतायै। तथा हि रचना साम्यमुपैति।

**ययाऽहरद्भुवो भारं तां तनुं विजहावजः ।**
**कण्टकं कण्टकेनेव द्वयं चापीशितुः समम् ।। (१, १५, ३४) ।**

अत्रोपमानोपमेययोर्वस्तुगतं किमपि साधर्म्यं नास्ति । यया तन्वा भुवो भारमवतारयति तामेव कृतार्थः सञ्जहाति । कण्टकौ तु द्वौ मिथो भिन्नौ । एकः क्वचिल्लग्नो व्यथिको भवति, अपरश्च तदुद्धारकः । कृतोद्धारः कश्चिदुद्धारकं तं कण्टकं जहाति, उद्धृतस्तु प्रागेव त्यक्त इति किं तयोस्तन्वा साम्यम् ?

**आहर्तास्मि भुजं साक्षादमर्त्यस्यापि साङ्गदम् (१, १७, १५) ।**

अङ्गदं केयूरं तद्विभूषितो भुजो भवतु तदभूषितो वा । किं तेन । न हि साङ्गदस्य भुजस्य कर्तने भूयो वीर्यमपेक्ष्यते येन तद्विशेषणमर्थवत् स्यात् । अङ्गदं हि भूषणं भवति । केयूराणि न भूषयन्ति पुरुषम् इत्युक्तेः । अङ्गना अप्यङ्गदेनात्मानं भूषयाञ्चक्रुरिति नाहं जानामि केयूरे इति सौमित्र्युक्तेश्च । अपुष्टार्थं विशेषणं दूषयति प्रबन्धम् ।

**जज्ञे च कर्दमगृहे द्विज देवहूत्यां**
**स्त्रीभिः समं नवभिः ... ... ... (२, ७, ३) ।**

नवभिः स्वसृभिः साकं जज्ञ इत्याह । न हि कन्यानवकस्य कपिलस्य च युगपज्जनिः संभविनी । न चेदं कवेर्विवक्षितम् । विवक्षितविपरीतं चाहेत्यसामर्थ्यमस्य ।

**सध्र्यङ् नियम्य यतयो यमकर्त हेतिं**
**जह्युः स्वराडिव निपानमिन्द्रः (२, ७, ४८) ।**

अयमर्थः—यत्र मनो नियम्य यतयो भेदनिरासस्साधनानि जहति यथा पर्जन्यरूपेण विराजमान इन्द्रः कूपखननसाधनं कुद्दालं जहाति, अनुपयोगात् । अत्र पुराणकारं चोदयामः—किमुपमानमिन्द्रोऽप्यपां लब्धये कूपं खनति, पश्चात् पर्जन्यरूपेण वर्तमानः खनित्रं जहाति । वस्तुसिद्ध एवार्थ उपमानीक्रियते । कूपखनकस्तु सोऽसिद्धः । तत्र भवति स्वराजि खननसाधनानामादित्सैव तावन्नोपपद्यते कुतो जिहासा । अत एवासन्तुष्टष्टीकाकृदाह—यद्वा स्वेनैव राजते स्वराट् दरिद्रः, स यथा इन्द्रः समृद्धः सन् कर्मकरदशायां गृहीतं निपानखनित्रं जहाति तद्वत् । अत्यन्तमसतोऽर्थस्य कल्पना । राज्ञा विनियम्या एतादृक्षा अनर्गलं भाषितारः ।

**ब्रूहि नस्तदिदं सौम्य विदुरस्य विचेष्टितम् ।**
**बन्धुत्यागनिमित्तं च तथैवागतवान्पुनः (२, १०, ५०) ।**

दुःश्लिष्टानि पदानि । तेषां संश्लेषणे यतमाना अपि न सिध्यन्ति विवरीतारः । हे सौम्य विदुरस्येदं विचेष्टितं विरुद्धं चेष्टितं नो ब्रूहि । किन्तद्

विचेष्टितमित्याकाङ्क्षायामाह—बन्धुत्यागनिमित्तम् इति। बन्धुत्यागो विचेष्टितं न तु तन्निमित्तम्। अपरं च किम् ? तथैवागतवान् पुनरिति। प्रक्रमभङ्गदोषः। बन्धुमध्ये प्रत्यागमनं चेत्येवं वक्तव्यम्।

**स्वार्हंरन्त्याः कुचकुङ्कुमानि (३, १, ७)।**

अश्लीलाऽस्य कवेर्वागनङ्गरङ्गस्थली। किमस्त्राणि सन्ततानि मुञ्चन्त्याः कुरुदेवदेव्या इत्येवंभूता शान्तऋज्वी वाङ् न पर्याप्नुयात् ? इदं चात्रापरमनौचित्यम्। अपि कुचावनावृतौ सर्वजनदृश्यौ भवतो यत्तत्स्थं कुङ्कुमं सर्वस्य प्रत्यक्षं भवति। नूनं क्रान्तदर्शनोऽयं कविर्यदावृतयोरपि तयोः कुङ्कुमस्य हरणं पश्यति।

**रेमात उद्धाय मृधे स्वरिक्थं**
**परात्सुपर्णाविव वज्रिवक्त्रात् (३, १, ३९)।**

अत्रोपमानोपमेययोर्वचनसाम्याय सुपर्णावित्यत्र द्वित्वमाश्रितम्। असङ्गतं च तत्। न ह्याख्यानेषु क्वचिदमृतहरणे गरुडद्वित्वमाश्रितम्। अमृतं गरुडस्य गरुडयोर्वा कथं स्वरिक्थं भवतीति कविरेव बहुवित्पर्यनुयोज्यः।

**निवीतमाम्नाय-मधुव्रतश्रिया**
**स्वकीर्तिमय्या वनमालया हरिम् (३, ८, ३१)।**

यदि सा वनमाला कीर्तिमयी कीर्तिरूपा भवति तदा तस्यां मधुव्रतैः श्रिय आधानं न युज्यते इति किं नेक्षते सूक्ष्मदृक् कवि ?

**पीतांशुके पृथुनितम्बिनि (३, १५, ४०)।**

अस्थाने मत्वर्थीय इनिः। न हि पीतांशुकस्य कश्चिन्नितम्बः पृथुर्नितम्बो वाऽस्ति। अनौचित्यवारणायाश्रयत्वेनेत्यध्याहार्यं भवति। नितम्बशब्दप्रयोगोऽप्यस्थाने। पश्चान्नितम्बः स्त्रीकट्या इति कोषात् स्त्रियाः कटिप्रदेशस्य पश्चाद्भागो नितम्बो भवति। अत एव प्रमदा मानिनी कान्ता ललना च नितम्बिनी इत्यमरे स्त्रीविशेषेषु नितम्बिनीग्रहः।

**सतीं व्यादाय शृण्वन्तो लघ्वीं गुर्वर्थगह्वरां (सरस्वतीम्) (३, १६, १४)।**

व्यादाय कर्णाविति शेषः। मुखव्यादानं मुखविहरणं तु श्रूयते, कर्णव्यादानं तु नातः पूर्वं श्रुतम्। असम्भवात्। इह त्वसम्भवन्तोऽप्यर्थाः सम्भाव्यन्ते कविशौटीर्यंप्रयुक्ताः।

**लोकं मधुव्रतपतेरिव कामयाना (३, १६, २०)।**

अत्र तृतीये चरणे तुलसीनवमालिका मधुव्रतपतेर्धाम उक्ता। तदेव

धामेह लोक उक्तः। अर्थैक्ये व्यपदेशभेदो न युक्तः। किं च। मालायामनेकस्य मधुव्रतस्य प्रसङ्गान्मधुव्रतपतेर्ग्रहणमनौचित्यं नातिक्रामति।

**धर्मस्य ते भगवतः ... ... ...**

**नूनं भृतं ( चराचरमिदम् ) तदभिघाति**

**रजस्तमश्च ... ... ... निरस्य (३, १६, २२)।**

तदभिघातीत्यत्र तच्छब्दो धर्मं परामृशति। भगवांश्चेह धर्म इति रूपितः। तेन रजस्तमसी धर्मरूपस्य भगवतोऽभिघातिनी प्राप्नुतः। तच्च महदनिष्टम्। यत्सत्यमिष्टार्थसमर्पिकायां पदावल्यामक्षमोऽयं कविः।

**त्वद्गुणवादसीधुपीयूषनिर्यापितदेहधर्माः (३, २१, १७)।**

गुणवादो गुणकीर्तनम्। स इह सीध्विति निरूपितः पीयूषमिति च। सीधुः सुरा भवति। सा संज्ञां लुम्पतीति नैतावताऽनिष्टा न भवति। सुरापाणं हि महापातकेषु गण्यते।

**पूररेचकसंविग्नवलिवल्गुदलोदरम् (४, २४, ५०)।**

श्वासोच्छ्वासाभ्यां निसर्गजाभ्यामुदरस्था वलयो वेल्लन्ति नाम। तेन का नामोदरस्य वल्गुता मनोज्ञता जायत इत्युत्प्रेक्षाचुञ्चुरयं कविः प्रष्टव्यः। किमुदरवलयोपि वर्ण्या भवन्ति।

**विश्वं विध्वंसयन्वीर्यशौर्यविस्फूर्जितभ्रुवा (४, २४, ५६)।**

विस्फूर्जिता क्षुभिता भ्रूः, तया। इहैव भ्रुवो विस्फूर्जनमुक्तम्; स्पन्दनं चार्थः प्रत्याययियिषितः। इन्द्रस्येव बलकृतिरेषा कवेः। वज्रनिर्घोषरूपां क्रियां भ्रुकुटिस्थामाह। अहो अनौचित्यम्।

**ध्यातुर्मनः शमलशैलनिसृष्टवज्रम् (३, २८, २२)।**

चरणारविन्दं पापशिलोच्चयभेदनाय प्रहृतेन वज्रेणोपमिमीते कविः। क्व कमलसुकुमारं चरणयुगलं क्व च दुर्भेदशिखरिभेदनसमर्थं कर्कशं दारुणं वज्रम्। औपम्यमेव किमपि नास्ति, कुत आरोपः।

**विण्ठाभूरिव सोदरः (३, ३१, १०)।**

विष्ठाभुवः सोदर इति तु वाच्यम्। गर्भस्थो जीवस्तु विष्ठाभूः कृमिर्न भवति किन्तर्हि सहोत्पन्नत्वात्तत्सहोदर इव स भवति। न ह्यत्यन्तविसदृशयोरर्थयोः सस्थानत्वात्समानस्थानोत्पादाद्वा स्थानिनोर्भ्रातृत्वं जायते।

**पार्श्वभ्रमद्व्यजनचामरराजहंसः (विष्णुः) (४, ७, २१)।**

इह व्यजनचामरयो राजहंसत्वेन रूपणे कोऽभिप्रायः कवेः। कामं श्वैत्यं समानम्। उपमया सादृश्यं वाच्यं न तु रूपकेण। अभेदारोपेण नार्थः।

**आप्याययत्यसौ लोकं वदनामृतमूर्त्तिना।**
**सानुरागावलोकेन विशदस्मितचारुणा (४, १६, ९)।**

अत्र वदनेऽमृतमूर्त्तित्वस्यारोपः। अमृतमूर्त्तिः सुधासूतिश्चन्द्रः। आरोप्यमाणे चन्द्रे (उत्तरपदार्थप्रधाने) सानुरागावलोकादि किमपि नास्ति। आप्यायनक्रिया च चन्द्र एव युज्यते। किंरूपोऽसौ चन्द्र इत्यन्यदेतत्। रूपके च चन्द्रोपमेन वदनेनेत्यर्थो न लभ्यते येन सानुरागावलोकादि विशेषणमर्थवत् स्यात्।

**न यत्र युष्मच्चरणाम्बुजासवः (४, २०, २४)।**

आसवशब्देन पुष्परसो मकरन्दः (मरन्दः) कविना विवक्षितः। मकरन्दस्यासवशब्देनाभिधानं नोचितम्।

**लिङ्गं न दृश्यते यूनः कुह्वां चन्द्रमसो यथा (४, २९, ७२)।**

चन्द्रमसस्तु लिङ्गं लिङ्गशरीरं वा नास्त्येव कुतस्तस्य दर्शनप्रतिषेधः। एवं तर्हि कुह्वां चन्द्रमा यथेति वक्तव्यम्। चन्द्रमसो लिङ्गं रूपं न दृश्यते इत्येवं लिङ्गशब्दस्यार्थान्तरपरिग्रहेण संगमयन्ति। तदपि न परितोषाय विवेकिनाम्। लिङ्गशब्दस्योपमानवाक्य एकोऽर्थः, उपमेयवाक्ये चान्य इति वाग्योगविदो न सहन्ते।

**सर्वे वहामो बलिमीश्वराय**
**प्रोता नसीव द्विपदे चतुष्पदः (५, १, १४)।**

चतुष्पाद इति तु न्याय्यम्। किं चतुष्पादो द्विपदे मनुष्याय बलिं हरन्ति। अथ न, किमत्र साम्यम्। चतुष्पादस्तु मनुष्येऽधि वर्तमाना भारहारा भवन्ति न तु बलिहरा बलीनामुपहर्तारः।

**शिष्या इमे भगवतः परितः पठन्ति**
**गायन्ति साम सरहस्यमजस्रमीशम् (५, २, ९)।**

ईशं परित इत्यन्वयः। तवेमे शिष्या ईशं गुरुं त्वाम्प्रतीत्यर्थः। भगवतः शिष्या ईशं परितो गायन्तीत्युक्ते ईशभगवतोर्भेदो भासते। तदनुचितम्।

**पत्युर्जायेव पुंश्चली (५, ६, ४)।**

पुंश्चलीं जायामाह। तदनुचितम्। तज्जायाया जायात्वं यदस्यां जायते पुनरिति श्रुतेः साध्वी सहधर्मचारिण्येव जायाव्यपदेशमर्हति न स्वैरिणी।

**हित्वा महांस्तं (आत्मानम्) यदि सज्जते गृहे (५, १८, १३)।**

यद्यसौ महान् कथं गेहे सङ्गः ? अत एव कश्चित्संकुलमिदं वच इति प्रतीत्य महान् प्रसिद्ध इत्यर्थमाचष्टे। तदपि निर्मूलं साहसमात्रम्।

**या तस्य ते पादसरोरुहार्हणं**
**निकामयेत्साऽखिलकामलम्पटा (५, १८, २१)।**

या स्त्री भगवतस्ते पादारविन्दपूजां नितरां कामयते साऽखिलकामेष्वासक्ता भवतीति व्याहृतं वचः। तस्या इत्थम्भूताया लौकिकेषु काम्येष्वर्थेष्वनास्थाऽनभिलाषोऽनासङ्ग एव प्राप्तो न त्वभिष्वङ्गः। केचिद्विरोधपरिहारायेत्थमर्थापयन्ते—**या स्त्री भवच्चरणारविन्दं काम्यार्थाप्तय एव पुपूजयिषति साऽखिलकामेष्वासक्ता भवतीति**। इन्द्रियार्थाधिगमाय कृतया भगवच्चरणार्हणया सर्वेन्द्रियार्थेषु प्रसक्तिर्जायते। अल्पप्रयोजनः सिद्धार्थानुवाद एषः। प्राप्तसर्वमनोरथेत्यर्थश्चेदपेयाद् विरोधः। न च शब्दमर्यादया स लभ्य इति स्थितो विरोधः।

**नायमर्हति वैकुण्ठपादमूलोपसर्पणम्।**
**संभावितमतिः स्तब्धः साधुभिः पर्युपासितम् (६, १७, १४)।**

चरणकमलं पर्युपासते साधवो न तदुपसर्पणम्। परिशब्दोऽपि चरणकमलं परित उपासनं द्योतयन् सार्थको भवति। उपसर्पणे पर्युपासनयोग्यताया विरहादपि।

**यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः (७, ५, १७)।**

यद् दैतेयवनं तस्य मूलोन्मूलने यः परशुर्विष्णुस्तस्य नालमिवाचरितवानर्भक इति परशुरेव विष्णुरिति प्रतीतिर्जायते इष्यते च विष्णुरेव परशुरिति। यथास्थितेऽर्भको विष्णोर्नालमिवाचरति, तदनुचितम्। तेन तु विष्णुरूपस्य परशोर्नालायितव्यम्।

**सर्वैरुपायैर्हन्तव्यः सुहृल्लिङ्गधरः शत्रुः-**
**मुनेर्दुष्टमिवेन्द्रियम् ... ... ... ... ... (७, ५, ३८)।**

इदमनुचितमुक्तम्। नहि मुनयो दुष्टं विषयासक्तं स्वम् इन्द्रियं घ्नन्ति किन्तर्हि विषयेभ्यो व्यावर्त्याध्यात्मं युञ्जति। आस्तां तावद्धननं विषयाऽऽसेवामपि संयमाय नालं मन्यन्ते। ज्ञानेन विषयतुच्छत्वज्ञानेनैव विषयेभ्यो व्यावृत्तिमिच्छन्ति। तेन प्रकृते न किञ्चिदौपम्यमस्ति।

परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ।
युक्तात्मन्यफला आसन्नपुण्यस्येव सत्क्रियाः (७, ५, ४१) ।

परे ब्रह्मणि युक्तात्मनि प्रह्लादे तत्पितृकृताः प्रहारा अपुण्यस्य पुण्यहीनस्य सत्क्रियाः शोभनाः क्रिया इव विफला अभूवन्निति वाक्यार्थः । तत्र शङ्क्यते—योऽसावपुण्योऽसुकृती जनस्तस्य सत्क्रियाः पुण्यचरितानि कुतः । असतां तेषां विनाशप्रसङ्गः कुतः ? पुण्यानि सन्त्येव सुकर्मसु प्रेरयन्ति, तानि यस्य न सन्ति तस्य कुतः सच्चिकीर्षा कुतस्तरां वा सत्क्रिया । एवमुद्भावितस्य विरोधस्य परीहाराय सत्क्रिया लौकिका महोद्यमा इत्येवमर्थापयन्तः केचिद्धास्या भवन्ति ।

पिपीलिकैरहिरिव दिष्टचा लोकोपतापनः ।
पापेन पापो भक्षीति ... ... ... (७, ७, ३) ।

न हि पिपीलिकाः पापस्थानीया भवन्ति, न चाहिना कथंचित्सम्बद्धा जन्यजनकभावादिना । क्षोदीयस्यश्च ता भवन्ति । न चास्य हिरण्यकशिपोः पापानि क्षोदीयांसि भवन्ति । तेन कोऽत्रोपमानोपमेयभावः ?

स्फुरत्सटाकेसरजृम्भिताननम् (७, ८, २०) ।

यतो जृम्भावदाननमतः स्फुरत्सटाकेसरम् । जृम्भाकारितं सटाकेसराणां स्फुरणम् । तेनाननजृम्भणस्फुरत्सटाकेसर इत्येवं न्यास एवौचितीमञ्चेत् ।

बालस्य नेह शरणं पितरौ नृसिंह
नार्तस्य चागदमुदन्वति मज्जतो नौः (७, ९, १९) ।

पितरौ बालं रक्षतः, अगदश्च रुजार्तं रक्षति, समुद्राम्भसि प्लवमानं नौ रक्षतीति वस्तुसन्नयमर्थो न युज्यतेऽपह्नोतुम् अपह्नूयते च विदुषाऽनेन कविना । तस्यास्यानौचित्यस्य परिहाराय नित्यम्, एकान्तेन नियमेनेति वाऽध्याहरणीयं पित्रादिकृतरक्षणस्यानैकान्तिकत्वं यथा गम्येत, उक्तार्थश्च सङ्गच्छेत ।

जिह्वैकतोऽच्युत विकर्षति माऽवितृप्ता
शिश्नोऽन्यतः ... ... ...
बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति (७, ९, ४०) ।

प्रथमैस्त्रिभिश्चरणैर्जिह्वादयः प्रत्येकं मामात्मानं प्रति कर्षन्तीत्युक्तम् । चतुर्थेन चरणेन तु यथा बह्व्यः सपत्न्यो गृहस्वामिनं लुनन्तीत्युक्तम् । एकत्र विकर्षणमुक्तमपरत्र लवनम् इत्युपमानोपमेयभावो न कल्पते ।

**आ श्वाघान्तेऽवसायिभ्यः कामान् संविभजेद्यथा ।**

**अप्येकामात्मनो दारां नृणां स्वत्वग्रहो यतः (७, १४, ११) ।**

यथा कामान् काम्यानर्थान् भोगान् श्वादिभ्यः संविभजेत् तेभ्यः संविभज्य भुञ्जीत तथैकां जायामपि (स्वपरिग्रहभूताम्) अतिथ्यादिभ्यः समर्प्य भुञ्जीतेत्यनिष्टमशिष्टं किमपि शिष्टं भवति । तदिदमसदृशं महाभागवतस्य पुराणकारस्य । इदमनुशासनं लोकविद्विष्टमिति विभाव्यान्यथाऽर्थापयते कश्चित्—स्वभार्यामतिथ्यादेः सेवायां नियुञ्जीतेति । अत्रोच्यते सेवायां नियोगः संविभागो न भवति । उभयत्र समानलक्षणः संविभाग इष्यते । यथाशब्दो तस्य विलक्षणत्वं वारयति । किं च सेवायां नियोग इत्यर्थे स्वीकृते एकामपि, स्वत्वग्रह इति विशेषणे अर्थवत्तां जहीतः ।

**सदा सन्तुष्टमनसः सर्वाः सुखमया दिशः ।**

**शर्कराकण्टकादिभ्यो यथोपानत्पदः शिवम् (७, १५, १७) ।**

अत्र दृष्टान्तदार्ष्टान्तिकयोः किं नाम साधर्म्यम् ? सन्तोषवतो जनस्य सर्वे देशाः सुखमयाः सुखदा भवन्ति यथोपानद्गूढपादस्य शर्कराकण्टकादिभ्यो भयं नास्ति । दृष्टान्ते बिम्बप्रतिबिम्बभावेन भवितव्यम् । न च सन्तोषस्य बिम्बस्योपानद्गूढता प्रतिबिम्बं भवति ।

**श्रेयोर्थिभिर्वैदिकतान्त्रिकेण योगेन (८, ६, ९) ।**

इदं दुरुक्तम् । न ह्येकस्मिन्नधिकरणे योगे वैदिकत्वं तान्त्रिकत्वं चेत्युभयं समं संभवति । विरोधात् ।

**विरजाम्बरसंवीतनितम्बद्वीपशोभया ।**

**काञ्च्या ... ... (८, ८, ४५) ।**

इह नितम्बो द्वीपेनोपमीयते । किं नाम तयोः सादृश्यमुत्प्रेक्ष्यते । कविकर्मणि प्रवृत्तस्य बालस्येव भाषितम् ।

**सोऽदित्यां वीर्यमाधत्त तपसा चिरसंभृतम् ।**

**समाहितमना राजन् दारुण्यग्निं यथाऽनिलः (८, १७, २३) ।**

इहोत्तरार्द्धः प्रमत्तगीतः । कश्यपस्तपोमहिम्ना स्वशरीरे चिरसंचितं वीर्यं देव्यामदित्यां निषिञ्चति । कः कस्यामिवेत्याकाङ्क्षायामाह—अनिलो यथा

दारुणि काष्ठेऽग्निं धत्ते । इदं वितथम् । वीर्यं हि बाह्योर्थोऽन्यत्नादित्यां स्थाप्यते न तथा बाह्योग्नि: काष्ठेऽन्तर्धीयते । स तु काष्ठेन्तर्नित्यं स्थितो घर्षणेनाविर्भाव्यते वातेन चोद्दीप्यते ।

**मौञ्ज्या मेखलया वीतम् (८, १८, २४) ।**

वीतं संवीतम् । अस्थाने व्येञ: प्रयोग: । व्येञ् संवरणे । संवरणमाच्छादनं भवति । न हि रज्जुमेखलया तत्संभवि ।

**गन्धर्वकिंपूरुषकिन्नरा जगु: (८, २०, २०) ।**

किन्नरा: किंपुरुषा इत्येका योनि: । स्यात्किन्नर: किम्पुरुषस्तुरङ्गवदनो मयुरित्यमरे पाठात् । अयं त्वभेदे भेदं पश्यति ।

**नूनं त्वं विधिना सुभ्रू: प्रेषितासि शरीरिणाम् ।**
**सर्वेन्द्रियमन: प्रीतिं विधातुं सघृणेन किम् (८, ९, ५) ।**

नूनमित्युत्प्रेक्षायाम् । किमिति प्रश्ने । उभयोरेकत्र संनिवेशो नोचित: ।

**ऐरावतं दिक्करिणमारूढ: शुशुभे स्वराट् ।**
**यथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पति: (८, १०, २५) ।**

दिक्करिणमित्यत्र प्रभिन्नं मदस्रुत्कटम् इति वा विशेषणं देयम् । निर्विशेषणस्य तस्योपमेयता न प्रस्फुटति ।

**तम् (दुर्वाससम्) अन्वधावद् भगवद्रथाङ्गम् ।**
**दावाग्निरुद्धूतशिखो यथाऽहिम् (९, ४, ५०) ।।**

उर्दाचिदवानलोऽहिमनुधावतीति किमप्यरोचकं वच: । यो हि विसृमरो वनवह्निरेकपदे सर्वं वनं भस्मसात् करोति तेनैकस्याहेरनुसारे का नामौचितीक्ष्यते कविवरेण ?

**अन्वीयुस्तत्प्रभावेण अग्निं शान्तमिवार्चिष: (९, ६, ५५) ।**

इदमसङ्गतम् । न हि शान्तं हिरण्यरेतसमर्चिषोऽनुयन्ति, किन्तर्हि तद्रूपास्तास्तेन सहैव शाम्यन्ति ।

**सनन्दनाद्यैर्मुनिभिर्विभाव्यं**
**कथं हि मूढ: परिभावयामि (९, ८, २४) ।**

एकस्मिन्नेव श्लोकार्द्धे विचिन्तनरूपे समानेऽर्थे एकस्यैव धातोरुपसर्गद्वययोग औचित्यसीमानमतिक्रामति । मन्ये च्छन्दोवशादुपसर्गभेद आश्रित: ।

**आदाय बालगजलील इवेक्षुयष्टिं (बभञ्ज) (९, १०, ६)।**

बालगज इक्षुयष्टिमिवेत्युपमानवाक्यमुचितम्। यथास्थिते बालगजस्य लीलयाऽनायासेन इक्षुयष्टेर्भञ्जनं यथेत्युपमानभूतोर्थो न प्रसिध्यति।

**जघ्नेऽद्भुतैणवपुषाऽऽश्रमतोऽपकृष्टो मारीचम् (९, १०, १०)।**

यथास्थिते हननक्रियायाः कर्म मारीचोऽन्यः, अपकर्षणक्रियायाः कर्ता एणवपुः (हरिणाकृतिः) अन्य इति प्रतीतिर्जायमाना न वार्यते। सेयमनौचिती नाम।

**पुरुषो रामचरितं श्रवणैरुपधारयन् (९, ११, २३)।**

श्रवणे द्वे भवतः। बहुत्वं कथम्? श्रवणेन्द्रियवृत्तिभिरित्येवं व्याख्यानेन बहुत्वं समादधति केचन। तत्र का विनिगमना? मुख्यार्थबाधाभावाल्लक्षणा तु न शक्या समाश्रयितुम्।

**सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः (९, १३, १८)।**

अपूर्वा वाचोयुक्तिः। असम्बद्धं प्रलपितम्। सीता सीराग्राज्जायते पिता च सीरध्वज इति समाख्यायते। अहो अन्वर्थता समाख्यायाः।

**भुजान्कुठारेण कठोरनेमिना**
**चिच्छेद रामः प्रसभं त्वहेरिव (९, १५, ३४)।**

किंस्विदहेरपि भुजाः सन्ति। मन्ये भुजगशब्देन भ्रान्त एष चित्रकथः कविः। तत्र भुजः कुटिलः सन् गच्छतीत्यर्थं न जीनीते बहु जानन्नपि। अहेः फणा इवेति कश्चित् कल्पयति। महानस्य व्यामोहस्तथा कल्पयतः। फणा फटा वैका भवति। तत्र बहुत्वायोगादुपमाने बहुवचनं दुर्लभम्। उत्प्रेक्षिते च बहुत्वे न सङ्गतिप्रत्यापत्तिर्भवति।

**उत्तमश्चिन्तितं कुर्यात्प्रोक्तकारी तु मध्यमः।**
**अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः (९, १८, ४४)।**

प्रथमेन पादत्रयेणोक्तो रम्योऽर्थश्चतुर्थचरणगतेनार्थेन कलुषीकृत इति खेदः। मातुरुच्चरितमुच्चार इति त्वर्थवद् वचनं स्यात्। पुत्रो हि मातुर्निर्लुठितो गर्भं इति कुत्सायामुदरस्थेन मलेनोत्सृष्टेनोपमीयेत। कया युक्त्या स पितुरुच्चार इति व्यपदिश्येत।

**तवेमे तनयास्तात जनमेजयपूर्वकाः (९, २२, ३५)।**

किं तवे पुत्रा जनमेजयादयोपि परीक्षितोऽविदिता येन तेऽस्मा आख्येया भवन्ति।

**श्लथद्दुकूलं कबरीं च विच्युतां**
**संनह्यतीं वामकरेण वल्गुना ।**
**विनिघ्नतीमन्यकरेण कन्दुकम्**

अत्र वल्गुनेति वामकरे विशेषणं दत्तम्, अन्यकरो दक्षिणो हस्तस्तु निर्विशेषण: स्थितः । तत्कस्य हेतोः । उभयत्र विशेषणं देयमेकत्रापि वा न देयम् ।

**उपगीयमानाद् गुणानुवादात्** (१०, १, ४) ।

इत्यनुचितं शंसति कविः । गुणा उपगीयन्ते न तु तदनुवादः । अनूद्यमान-स्योपगानेन किम् । किं चोपगानं केवलं गानं न भवति किन्तर्हि गानस्योपक्रमः । उपशब्द उपक्रमे वर्तते । अत एव वीणयोपगायति उपवीणयतीत्युच्यते ।

**यत्प्लवाः** (१०, १, ५) ।

यः (कृष्णः) प्लवो येषां ते इति बहुव्रीहिरदुष्टः । प्लवशब्दप्रयोगस्तु दुष्यति । प्लवो ह्युडुपो नौका भवति न तु नौः । भवार्णवात् पारयितरि भगवति कृष्णे नौत्वारोपो युज्यते न तु नौकात्वारोपः । वत्सपदयोगे तरतिरप्यस्थाने । न हि वत्सपदं तीर्यते । न हि तत् तार्यं भवति । कुत एव नाव्यम् ।

**नैषातिदुःसहा क्षुन्मां त्यक्तोदमपि बाधते** (१०, १, १२) ।

मुनिगले सर्पमर्पयता परीक्षता यदनशनमङ्गीकृतं तत्क्षुच्छब्देनोच्यते । सा क्षुदतिदुःसहापि सती न मां बाधत इत्याकुलं वचः ।

**यदुभिः स विरुध्यते** (१०, १, ६८) ।

विरुध्यत इति कर्मणि लकारः । यथास्थिते यदवो विरोद्धार इति प्रतीतिप्रसङ्गः । इष्यते च कंसस्य विरोधे कर्तृत्वम् । रुधिः क्र्यादिकः सकर्मकः ।

**द्वारस्तु सर्वाः ... ... ...**
**स्वयं व्यवर्यन्त यथा तमो रवेः** (१०, ३, ५०) ।

व्यव्रियन्तेति तु पाणिनीयाः । विवृता अभूवन्नित्यर्थः । उपमाने क्रियेयं न युज्यते । न हि रवेः कारणात् तमो विव्रियते, किन्तर्हि अपैति, नश्यति, तिरोभवति ।

**दिष्टया संसारचक्रेऽस्मिन्वर्तमानः पुनर्भवः ।**
**उपलब्धो भगवानद्य ... ... ... ...** (१०, ५, २४) ।

संसारचक्रे वर्तमान इत्युक्तेः का नामार्थवत्ता । देवमनुष्यतिर्यगादिषु नानायोनिषु संसरत इत्यस्य प्रकृते क उपयोगः । भगवान् पुनर्भव उपलब्ध इत्यपि

न किञ्चित्स्फुटमाह। किं पुनर्भवः पुनर्भूतः पुनर्जातो द्विर्जात इत्यर्थे प्रयुक्तो मूककल्पेन कविना ?

**गण्डशैलस्तनं (पूतनाकलेवरम्) (१०, ६, १५)।**

गण्डशैलास्तु च्युताः स्थूलोपला गिरेरित्यमरवचनात् पर्वतात् पतितः स्खलितो भ्रष्टः स्थूलपाषाणो गण्डशैल उच्यते। न च स्तनौ वक्षसः पतितौ पृथग्भूतौ भवतः, लम्बमानावपि चेत् स्याताम्।

**रज्ज्वाकर्षश्रमभुजचलत्कङ्कणौ (१०, ९, ३)।**

कङ्कणौ बिभ्रतीत्यनुकर्षः। श्रमयुतयोः श्रान्तयो र्भुजयोश्चलन्तौ कङ्कणाविति किमुक्तं भवति। श्रान्तौ भुजौ विरतव्यापारौ भवतः। व्यापारविरमे च कङ्कणयोश्चलनं न जायते इति तच्चलनोक्तिरसङ्गता भवति।

**हतस्वकान्तस्मरणेन रक्षसा (१०, १२, २६)।**

स्वस्य कान्तः प्रियो जनो बन्धुरिति विवक्षति। विशेष्यपरः कान्तशब्दो वल्लभं स्मारयति यथा प्रियशब्दः। इत्थम्भूतमनौचित्यमालोचयन्नेव कश्चिद् हतयोः स्वकयोः (भ्रातृभगिन्योः) अन्तस्य स्मरणेन इत्येवं व्याचष्टे तत्र हतयोरित्यस्य वैयर्थ्यं नेक्षते।

**प्रतिक्षणं नव्यवदच्युतस्य यत्**
**स्त्रिया विटानामिव साधुवार्ता (१०, १३, २)।**

साधुवार्ता प्रशंसा। स्त्रिया विटानाम् इवेति ग्लानिकरी हीनोपमा। आश्चर्यं परमभागवतोऽयं भागवतकारो भगवति विषय एतादृक्षां हीनोपमां प्रयोक्ष्यते।

**... ... न मे प्रभो। मनसो वपुषो वाचो**
**वैभवं तव गोचरः (१०, १४, ३८)।**

वाङ्मनसयोर्गोचरो नेति सम्यगुक्तम्। वपुषः (शरीरस्य) गोचरो नेत्यनेन किमुक्तं भवति। नहि शरीरं वैभवस्य प्रमातृ प्रमाकरणं वा, अचेतनत्वादनिन्द्रियत्वाच्च।

**रेमे ... ग्राम्यैः समं ग्राम्यवद् ईशचेष्टः (१०, १५, १९)।**

यो ग्राम्यैर्ग्राम्यवद् रमते स कथमीशचेष्टः। तादृशोपि क्वचिदन्तरान्तराऽऽत्मन ऐश्वर्यप्रभावितं चेष्टितमाविर्भावयतीत्यर्थो विवक्षित इत्याहुः। स्वयं तु नाह। स्वयं तु संकुलमाह।

**अष्टौ मासान्निपीतं यद् भूम्याश्चोदमयं वसु**
**स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगते (१०, २०, ५)।**

अत्र चोद्यते—भूम्युदकस्य पानं सूर्यकृतं त्यागश्च पर्जन्यकृत इति कर्तृभेदे कर्त्रैक्यं कथं कल्पयति नूतनार्थकल्पनाकल्पः कविः ? स्वगोभिरित्यप्यस्थाने। नहि पर्जन्यस्य स्वा गावः किरणाः सन्ति।

**शरदा नीरजोत्पत्त्या नीराणि प्रकृतिं ययुः (१०, २०, ३३)।**

न हि नीराणां प्रकृतिभावावाप्तौ नीरजानि हेतवो भवन्ति। नहि तानि कतकवदम्बुप्रसादकानि भवन्तीति प्रसिद्धिः।

**केदारेभ्यस्त्वपोऽगृह्णन् कर्षका दृढसेतुभिः।**
**यथा प्राणैः स्रवज्ज्ञानं तन्निरोधेन योगिनः (१०, २०, ४१)।**

प्राणा इन्द्रियाणि। तेभ्यः स्रवज्ज्ञानम्। इन्द्रियेभ्यः कथङ्कारं स्रवति ज्ञानम्। इन्द्रियाणि तु ज्ञानद्वाराणि भवन्ति।

**देव्यो विमानगतयः स्मरनुन्नसारा**
**भ्रश्यत्प्रसूनकबरा मुमुहुर्विनीव्यः (१०, २२, १२)।**

विनीव्यो विगतजघनवाससः, विस्रस्तजघनवासोग्रन्थयो वा। सुन्दरीणां कृष्णसौन्दर्यहृतचेतसां विनीवीकतामसकृद् ब्रूतेऽश्लीलवागयं कविः।

**भर्जिता क्वथिता धाना प्रायो बीजाय नेष्यते (१०, २२, २६)।**

अत्र संभावनायां वाहुल्ये वा वर्तमानः प्रायःशब्दो विपरीतार्थं गमयति—कदाचिदेवम्भूता अपि धाना बीजमितीष्यन्त इति। तद्वितथम्। भृष्टा धाना न प्ररोहन्तीति को नामासंमूढः कृषीवलस्ता बीजारोपायादास्यते ?

**लीलोच्छिलीन्ध्रं यथा (१०, २६, २५)।**

लीलयोत्खातं शिलीन्ध्रमिवेत्यर्थः। एवं चाबलस्य बालकस्योत्खनने कर्तृत्वं (कर्तृव्यापारः) नोपपद्यते, प्रागेव (केनापि) लीलयाऽनायासेन शिलीन्ध्रस्योत्खातत्वात्। लीलया शिलीन्ध्रं यथेति तु वक्तव्यम्। यथा सर्वमिदमाकुलमनाकुलं स्यात्।

**करसरोरुहं कान्त कामदं**
**शिरसि धेहि नर श्रीकरग्रहम् (१०, ३१, ५)।**

कृष्णकरसरोरुहस्पर्शेन कामशान्तिः प्रार्थ्यते। तत्करसरोरुहं श्रीकरग्राहं स्यादश्रीकरग्राहं वा, प्रकृते तेन को विशेषः। अपुष्टार्थं विशेषणम्।

निवारयामः समुपेत्य माधवं
... ... ... ... ...
मुकुन्दसङ्गान्निमिषार्धदुस्त्यजात् (१०, ३९, २८) ।

मुकुन्दमाधवयोरेकव्यक्तित्वेपि नामभेदेनाभिधानादभिधेयव्यक्तिभेदावभासो न वार्यते । तद्वारणाय तस्य सङ्गादित्यादि वाच्यम् ।

व्युष्टायां निशि कौरव्य सूर्ये चाद्भ्यः समुत्थिते (१०, ४२, ३२) ।

अपां मध्यादुत्थानस्य प्रकृते कार्थवत्ता ? सूर्य उदित इत्युदिते कुत उदितोऽसावित्याकाङ्क्षैव नोत्तिष्ठति । प्रसिद्धेः ।

अरुणकुङ्कुमानना: (१०, ४६, ४५) ।

कुङ्कुमस्यारुणं विशेषणं व्यर्थम् । विशेषणं हि व्यावर्तकं भवति । न च कुङ्कुममनरुणमपि भवति यद् व्यावर्त्येत ।

बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्य: (१०, ४७, १७) ।

काकवद् बलिमत्त्वा (जग्ध्वा) बलिमसुरराजमबध्नादिति वाक्यार्थः । वतिः क्रियासादृश्ये । प्रकृते किं तत्सादृश्यम् । काकः क्रूरः कुटिलो भवतीति विदितोऽर्थः । तथापि स्वेच्छया प्रत्तस्यान्नस्य ग्रहणे निसर्गजं तस्य कौटिल्यं प्रयोजकं न भवति जग्धान्नश्च स प्रदातुर्नानिष्टं किञ्चिदाचरति । तेनेदमायातं कृष्णस्य काकस्य च क्रिययोर्न किञ्चित्तौल्यमस्ति ।

मृगयुरिव ··· ··· लुब्धधर्मा (१०, ४७, १७) ।

लुब्धो लुब्धको मृगयुर्व्याध इत्यनर्थान्तरम् । लुब्धधर्मा लुब्धकस्वभावः । लुब्धक इव लुब्धकस्वभाव इति किमुक्तं भवति ।

विसृज शिरसि पादम् (१०, ४७, १६) ।

स्वे शिरसि स्थितं मे पादं विसृज त्यजेति वाक्यार्थः । इदमनुचितमुक्तं भवति । नहि भ्रमरेण तस्याः पादो गृहीतो यस्तित्याजयिषितः स्यात् । किंच । प्रणतः प्रणिनंसन्वा नमस्यस्य पादयोः स्वं शिरोधत्ते, शिरो नमयित्वा पादयोः पततीति समुदाचारः ।

सर्वान् ददाति सुहृदो भजतोभिकामान्
आत्मानमप्युपचयापचयौ न यस्य (१०, ४८, २६) ।

यस्यात्मनो वृद्धिह्रासौ न भवतस्तमात्मानमपि ददातीत्याह । यदीदं नोच्येत किं हीयेत ? कामान् काम्यानर्थान् ददाति, काम्यतममात्मानमपि ददातीत्येव विवक्षितोर्थः । नातोऽतिरिक्तः । तेनोपचयापचयरहितः स आत्मा इति विशेषणमपुष्टार्थम् ।

**अधर्मोपचितं वित्तं हरन्त्यन्येऽल्पमेधसः ।**

**सम्भोजनीयापदेशैर्जलानीव जलौकसः (१०, ४९, २२) ।**

उपमानभूतासु जलौकस्सु संभोजनीयापदेशत्वं किमपि नास्ति । अन्ये = स्त्र्यपत्यादयः । उपमेये तत्संभवदप्युपमाने न घटते । नहि जलौकया कयाचित् प्रधानभूतया स्वस्य कृते रक्षितानि जलानि तत्रैव संवसद्भिस्तदपत्यादिभिर्ह्रियन्त इति युज्यते वक्तुम् । नवतन्त्रः कविर्न कल्पते युक्तामुपमां कल्पयितुम् ।

**हरिः परानीकपयोमुचां मुहुः**

**शिलीमुखात्युल्बणवर्षपीडितम् ।**

**स्वसैन्यमालोक्य ··· ··· (१०, ५०, २३) ।**

परानीकान्येव पयोमुचः । ते पयोमुचोऽत्यन्तमुल्बणं शिलीमुखवर्षं वर्षन्तीति न युज्यते वक्तुम् । आरोपितेष्वपि पयोमुक्षु पयोमुक्त्वादेव बाणवर्षणसामर्थ्यं नास्तीति किं न विभाव्यते ।

**तामानयिस्ये उन्मथ्य राजन्यापसदान्मृधे ।**

**मत्परामनवद्याङ्गीमेधसोऽग्निशिखामिव (१०, ५३, ३) ।**

उन्मथितेष्वपि राजसु रुक्मिणी तन्मथनजा न भवति यथा मथ्यमानात्काष्ठादग्निर्जायते । तेन विषम उपन्यास इति नातितिरोहितं सूक्ष्मदृशाम् ।

**आगत्य नेत्राञ्जलिभिः (१०, ५३, ३६) ।**

नेत्रे अञ्जली इति किंरूपकम् । नेत्राञ्जल्योः किं नाम साधर्म्यम् । उपमैव न सिध्यति किमुत रूपकम् ।

**अहो धिगस्मान् यश आत्तधन्वनां**

**गोपैं र्हृतं केसरिणां मृगैरिव (१०, ५३, ५७) ।**

केसरिणां मृगैः किं ह्रियते । उपमेयवाक्ये यश इति श्रूयते । तदेवेहाप्यभिसम्भन्त्स्यते । तद् वितथम् । न हि फेरवाः पञ्चाननानां यशो हर्तुमलम् ।

**कृष्णमभ्यद्रवत्क्रुद्धः पतङ्ग इव पावकम् (१०, ५४, ३०) ।**

अहो विषममुपन्यस्तम् । न हि पतङ्गः शलभः क्रोधवशात् पावक-जिघांसया पावकमभिद्रवति, किन्तर्ह्यर्चिषां कम्र इति । एष कविसम्प्रदायः । अस्य विरोधो न युक्तः ।

परिशोचति ते माता कुररीव गतप्रजा।
पुत्रस्नेहाकुला दीना विवत्सा गौरिवातुरा (१०, ५५, १५)।

कुररीवेत्युपमयोदितेऽर्थे गौरिवेत्यपरया किमधिकमुच्यते ऋते शब्द-डम्बरात्।

हतं प्रसेनमश्वं च वीक्ष्य केसरिणा वने।
तं चाद्रिपृष्ठे निहतमृक्षेण ददृशुर्जनाः (१०, ५६, १८)।

ऋक्षः केसरिणं हन्ति। नूनं तत्र भागवतकारेण स्वमायया बलोपचयः कृतः स्यात्।

सूर्योपरिष्टात् सतडिद्घनं यथा (१०, ५९, १५)।

सूर्योस्योपरिष्टात् सूर्यादूर्ध्वं मेघा न सन्तीति मुग्धोऽयं न विजानाति। हिमवतः शिखरेष्वपि मेघा न सन्ति किमुतादित्यस्योपरिष्टात्। नित्यातपानि तानि सानुषु वृष्टिभिरर्दिताः सिद्धाः समाश्रयन्तीति वर्णयतः कविकुलपतेः कालिदासस्याप्ययं विदितोऽर्थः।

यान्यान् कामयसे कामान् मय्यकामाय भामिनि (१०, ६०, ५०)।

अकामाय कामनिरासाय (मोक्षपर्यवसायिने) कामान् कामयस इति सङ्कुलं वचः। न हि कामानां प्रार्थनाऽकामतायै भवति। विरोधात्। इयं रभसोक्तिः।

देहश्च (पपात) विक्लवधियः सहसैव मुह्यन्
रम्भेव वायुविहता प्रविकीर्य केशान् (१०, ६०, २४)।

देहः केशान् प्रविकिरतीत्युन्मत्तप्रलपितमिव। देहो मुह्यतीत्यप्यसंगतम्।

... तव पादसरोजगन्धम्
आघ्राय सन्मुखरितम् ... (१०, ६०, ४२)।

सन्मुखरितं सद्भिः कीर्तितम्। शब्दार्थमर्यादया तु नायं सुलभोऽर्थः। मुखरितं वाचालितं भवति। मुखरशब्दात् तत्करोति तदाचष्ट इति णिच्, ततः क्तः। अत्रैव पद्ये पादसरोजगन्धो लक्ष्म्या आश्रय उक्तः। इदमसंगतम्। पादसरोजं तदाश्रयो न तु तद्गन्धः। पद्मा पद्मालया लक्ष्मीरित्युक्तेः।

**योगेश्वरैः श्रुतिदृशाऽमलहृद्विभाव्यः (१०, ६४, २६)।**

श्रुतिरूपया दृशा चक्षुषा दृष्टे सति किमवशिष्यते यदमले हृदि विचिन्त्येत। यदि श्रुत्या श्रवणमेवोच्येत बाढं निदिध्यासनमपेक्ष्येत, तदन्तरा साक्षात्कारासंभवात्।

**अपि वा स्मरतेऽस्माकमनुसेवां महाभुजः (१०, ६५, १०)।**

इह महाभुज इत्यपुष्टार्थं विशेषणम्। न हि महाबाहुः सन् साधीयः स्मरति, आध्यायति वा।

**इत्यर्थकामधर्मेषु कृष्णेन श्रद्धितात्मना (१०, ६९, ४३)।**

श्रद्धा संजाताऽस्येति श्रद्धितः। अनेषणीयः प्रयोगः। पूर्वमश्रद्धोऽभूदित्याक्षेपात्।

**विश्वविलयोद्भववृत्तिहेतुः (१०, ६९, ४५)।**

उत्पत्तिस्थितिप्रलया इति क्रमेणाख्यानं प्रसिद्धमुचितं च। विपरीतेन क्रमेणाख्यानेऽनौचित्यं न पश्यति। यदि पथि विपथे वा वर्तयामः स पन्था इत्यभिमन्यते।

**कर्मण्ययं त्वदुदिते भवदर्चने च (१०, ७०, २६)।**

इह साकमेव युष्मच्छब्दस्य भवच्छब्दस्य चैकस्मिन्नर्थे प्रयोगोऽनौचित्यकक्षां विगाहते।

**यो भूभुजो ··· रुरोध भवने मृगराडिवावीः (१०, ७०, २९)।**

नहि मृगाधिपो मेषी निरुन्धे, एकत्रावरुन्धे, बन्धनस्थाः करोति। नहि तच्छीलोऽसौ, न तत्कर्मा। तस्मादनुचितमिदमौपम्यम्।

**ते वै गदे ··· ···**

**चूर्णीबभूवतुरुपेत्य यथार्कशाखे**

**संयुध्यतोर्द्विरदयोरिव दीप्तमन्य्वोः (१०, ७२, ३७)।**

दीप्तमन्यू दुर्मदौ दन्तिनौ अर्कशाखाभ्यां मिथो युध्येते इति किमप्यद्भुतमुत्प्रेक्षते कविः।

**संचिन्त्यारिवधोपायं ···**

**दर्शयामास विटपं पाटयन्निव संज्ञया (१०, ७२, ४३)।**

इवशब्द उत्प्रेक्षायाम्। क्रियायोगात्। तेन विटपपाटनमसत्त्वभूतोऽर्थः। न चेदमिष्टम्। तथा सति संज्ञाऽर्थंकरी न स्यात्।

**अथान्यदपि कृष्णस्य शृणु कर्माद्भुतं नृप ।**

**क्रीडानरशरीरस्य यथा सौभपतिर्हतः (१०, ७६, १-२) ।**

सौभनाम्नोऽयस्मयस्य यानस्य वर्णयिष्यमाणत्वात् प्रागेव शाल्वस्य (शिशुपालसखस्य) सौभपतिरिति व्यपदेशो न युक्तः, श्रोतृबुद्धेर्व्यामोहकत्वात् । तपःप्रसादिताद् भगवत आशुतोषात्तस्य यानस्य प्राप्तेः समनन्तरमेव शाल्वस्य सौभपतिरति संज्ञा सम्पेदे ।

**एवं वदन्ति राजर्षे ऋषयः के च नान्विताः**

**यत्स्ववाचो विरुध्येत नूनं ते न स्मरन्त्युत (१०, ७७, ३०) ।**

पूर्वे केचन ऋषय इतिहासमाचक्षाणाः स्व वाचि विरोधं न पश्यन्तीत्याह शुकः । ऋषयश्च ते व्याघ्नन्ति स्वं वच इति कथं युज्येत ।

**युवयोः समवीर्ययोः (१०, ७९, २७) ।**

इदं पूर्वोक्तेन 'एकं प्रणाधिकं मन्ये' इत्यनेन विरुध्यते । तद्धि सदृशं हालाप्रियस्य हलिनः ।

**भुवोऽवतारयद्भारं जविष्ठं जनयन् कलिम् (११, १, १) ।**

इति मृषोक्तिर्वा, अज्ञानविजृम्भणं वा । भगवान् वासुदेवस्तु कुरुपाण्डवानां कलहस्य प्रशमाय निरन्तरं प्रायसत्, दौत्यं चासकृत् पर्यग्रहीत् ।

**दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः (११, २, २९) ।**

क्षणभङ्गुरत्वकथनेन देहस्य दौर्लभ्यं कदर्थ्यतेऽपकृष्यते । अवितथमपि क्षणभङ्गुरत्वं नेह वाच्यमनवसरग्रस्तम् इति ।

**मिथो रतिर्मिथस्तुष्टिर्निवृत्तिर्मिथ आत्मनः (११, ३, ३०) ।**

इह द्वाविंशाच्छ्लोकात् शिक्षेदित्यनुवर्तते । अतस्त्रयोविंशात् श्लोकात्प्रभृति असङ्गादीनि कर्माणि द्वितीयान्तानि पठितानि । अनुवृत्तस्य शिक्षेः कर्मभूतानि रत्यादीन्यपि द्वितीयान्तानि पठितव्यानि । प्रथमायाः कः प्रस्तावः ।

**तवाङ्घ्रिद्वन्द्वातपत्रादमृताभिवर्षात् (११, १९, ९) ।**

इदमनुचितमुक्तम् । आतपत्रं नामातपात् त्रायते, न त्वमृतमनमृतं वा वर्षति । वर्षात् त्रातृ च सद् वर्षत्रमुच्यते ।

**देवरातसुतः (याज्ञवल्क्यः) सोपि च्छर्दित्वा यजुषां गणम् ।**

**... ... ... ... ... ... (१२, ९, ६४) ।**

यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः ।
तैत्तिरीया इति यजुःशाखा आसन्सुपेशलाः (१२, ६, ६५) ।

छर्दितानि वान्तानि यजूंषि पेशलान्यभूवन्निति संकुलं वचः । वान्तं नाम बीभत्सं भवति ।

इति श्रीचारुदेवशास्त्रिणः कृतिषु श्रीमद्भागवतभाषापरिच्छेदे
द्वादशाध्याय्यामनौचित्यनिरूपणो नाम द्वादशोऽध्यायः ।।
समाप्तश्चायङ् ग्रन्थः ।।

शुभं भूयादध्यापकानामध्यायकानां च ।

येषां बुद्धिरियं समस्ति सरला ह्येषा परा संहिता
पौराणी श्रुतिसंमिता भगवतो व्यासस्य भव्या कृतिः ।
तान् क्षिण्वे किमपि प्रतत्य चरितान्दोषान्परीच्छन्यत-
स्तस्मात्तान् क्षमये विनीतवदहं बद्ध्वा प्रणामाञ्जलिम् ।।



# अशुद्धशोधनम्

अहं देहल्यामवर्तिषि मुद्रणं च विदूरे होश्यारपुरेऽवृतत् । प्रकाशने कालसङ्गो मा भूदिति सकृदेव शोध्यं प्राभूवं शोधयितुम् । तेनाक्षरयोजककृतानि कानि चित्स्खलितान्यनीक्षितान्यतिष्ठन्प्रमार्जनार्हाणि । तानीह प्रमार्जनसहचरितानि न्यस्यन्ते संभवद्भ्रान्तिवारणाय ।

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १ | °नतन° | °नूतन° |
| २२ | ११ | आत्मनं | आत्मानं |
| ३२ | १४ | प्रीतिः | प्रतीतिः |
| ३३ | ३ | °त्यत्यभ्युप° | °त्यभ्युप° |
| ४० | ११ | भावे | भवि |
| ४१ | ३ | अपावर्तावपि | अपर्तावपि |
| ५० | ९ | विक्लित्तिः | विक्लित्तिः |
| ५६ | २८ | द्विवत् | द्विपत् |
| ५९ | १ | परोऽ | परेऽ |
| ७८ | १८ | आत्मनं | आत्मानं |
| ८४ | ११ | सोऽग्निः | स वायुः |
| ८५ | ११ | रज्ज्वः | रज्जवः |
| ९६ | १२ | गोरखरः | गोखरः |
| ९९ | २६ | °पादिनः | °वादिनः |
| १०३ | १० | निपणा | निपुणा |
| १०८ | १९ | चक्रु | चक्रुर् |
| ११० | २० | व्यस्ताभ्यां | प्रथमान्ताभ्यां |
| ११२ | १ | तदाभुजः | तवानुजः |
| ११६ | २५ | ऽनुचासम् | ऽनुघासम् |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२६ | १९ | आजुहव | आजुहाव |
| १३८ | २० | धनकः | जनकः |
| १४७ | १४ | नन्दिनी | गान्दिनी |
| १५४ | ४ | व्यस्थितिः | व्यवस्थितिः |
| १६० | २० | प्राहः | प्रहिः |
| १६२ | ३ | रूढिमाना० | रूढिमना० |
| १६३ | ९ | भारभरथा | भारभरया |
| १७५ | २१ | उरसा | उरसो |
| १९१ | १० | चवोरे० | चवौरे० |
| १९३ | २७ | स्वयमेयो० | स्वयमेवो० |
| २०९ | २४ | मेयेन | मानेन |
| २१८ | १८ | वेदिष्यतीन्ति | वेदिष्यन्तीति |
| २२८ | ८ | मृगवो० | मृगयो० |
| २३७ | १३ | इत्यादिनि | इत्यादीनि |
| २४८ | १० | तु | तु न |
| २६२ | ८ | केवलस्य | निपूर्वस्य |
| २६५ | १ | तिष्ठते | तिष्ठतेर् |
| २७२ | ८ | दारहतु० | दारहर्तुः |
| २७३ | ७ | प्यादुप० | स्यादुप० |
| २७९ | १७ | क्षमं | समं |
| २८१ | २ | °वि प्राङास्तु | °विप्राङस्तु |
| २८३ | २८ | अप्रजलः | अप्रजसः |
| २९९ | २१ | संचिन्त्यन् | संचिन्तयन् |
| २९९ | २२ | व्यालेन | व्यासेन |
| ३१८ | २० | विगायीति | विगादिति |
| ३२७ | २५ | हस्ताग्राहं | हस्तग्राहं |
| ३३० | १४ | खाने० | खानी० |
| ३३१ | ५ | व्यथिको | व्यथको |

